TRIVANDRUM SANSKRIT SERIES.
No. C.
Śri Setu Lakṣmī Prasādamālā
No. XII.

# THE KĀVYAPRAKĀŚA
OF
# MAMMAṬABHAṬṬA

with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhitya-cūḍāmaṇi of Bhaṭṭagopāla



EDITED BY
K. SĀMBAŚIVA ŚĀSTRĪ
*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*

**Part II. 6-10 Ullāsas**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1930.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १००.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः १२.

श्रीमम्मटभट्टप्रणीतः

# काव्यप्रकाशः

श्रीविद्याचक्रवर्तिप्रणीतया
सम्प्रदायप्रकाशिन्याख्यया बृहट्टीकया
श्रीभट्टगोपालप्रणीतया साहित्यचूडामण्याख्यया
विमर्शिन्या च समेतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
के. साम्बशिवशास्त्रिणा
संशोधितः ।




द्वितीयः सम्पुटः - ६-१० उल्लासाः ।

स च
अनन्तशयने
महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः ।

कोलम्बाब्दाः ११०५. क्रैस्ताब्दाः १९३०.

॥ श्रीः ॥

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

# INTRODUCTION.

This is the second part of the Kāvyaprakāśa accompanied by two commentaries viz., Sampradāyaprakāśinī of Śrī Vidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. The first part containing the first five Ullāsas have already been published as No. 88 of the Trivandrum Sanskrit Series and the present part beginning with the sixth Ullāsa continues the work to its close.

The author seems to have given an appropriate title to the work in having begun it with the words कवेर्भारती which means काव्य in the introductory verse,

Kāvyaprakāśa. "नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥"

and closed it with the word प्रतिभास which is the same as प्रकाश in the concluding verse,

"इत्येष मार्गो विदुषां विभिन्नो-
ऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्
विनिर्मिता सङ्घटनैव हेतुः ॥

The word विदुषां in the above verse shows that his work which deals with the views of Bhāmaha Udbhaṭa, Ānandavardhana and other *ancient Ālaṅkārikas on the doctrine of Dhvani is very important in the Alankāra Śāstra. The author is a well known figure in the history of Alaṅkāra literature

---

* तथाहि उद्भटभामहप्रभृतयः सर्वं व्यङ्ग्यमर्थं वाच्योपस्कारकारणाद् अलङ्कारकक्ष्यानिक्षिप्तमाचक्षते—येन पर्यायोक्ताप्रस्तुतप्रशंसादौ वस्तुमात्रं, रूपकदीपकादावुपमालङ्कारः, रसवत्प्रेय आदौ रसादिरपि वाच्योपस्काराय कल्पत इति त्रिविधमपि व्यङ्ग्यमलङ्कारपारतन्त्र्येण प्रत्यपादयन् । वामनोऽपि सादृश्यनिबन्धनायां लक्षणायां 'सादृश्याल्लक्षणा वक्रोक्तिः' (अधि० ४, अ० ३, सू० ८) इति वक्रोक्त्यलङ्कारमलक्षयत् । भावालङ्कारमिव रुद्रटो ध्वनिविशेष एवालङ्कारशरीरमनुप्रावीविशत् । कुन्तकोऽपि वैदग्ध्यभङ्गिभाणितिस्वभावां वक्रोक्तिमेव काव्यजीवितमुपस्थापयन् व्यापारप्राधान्यादुक्तिवैचित्र्यलक्षणालङ्कारमुखेन चमत्कारमूरीचकार । आचार्यानन्दवर्धनः पुनरभिधातात्पर्यलक्षणाश्रयोत्तीर्णस्य ध्वननव्यापारस्यावश्याभ्युपगन्तव्यत्वाद् व्यापारस्य च वाक्यार्थत्वायोगात् ध्वनिलक्षणस्य गुणालङ्कारोपस्कार्यस्य व्यापार्यस्य रसादेः काव्यशरीरगोचरमात्मत्वं समर्थयांचक्रे । इत्थं च तत्तद्ग्रन्थेष्वसारविस्तरपरित्यागेन सारसङ्कोचस्वीकारेण सौष्ठवोत्तरमुपकल्पिता सङ्घटनैव हेतुः ॥

(Vide Sāhityacūḍāmaṇi Part II. p. 449.)

and as such we need not add anything to what has already been said by scholars regarding his date, nativity and other particulars, except that the passage in the Sampradāyaprakāśini,

"यद्वा मन्मथग्रन्थशेषं परिपूरितवतोऽयमलर्कस्य स्वापेक्षः श्लोकः । एष मार्गः ग्रन्थसन्दर्भसरणिः विदुषां विभिन्नोऽपि अभिन्नरूपो यत् प्रतिभासते मन्मथसन्दर्भसमानरूपो यत् प्रतीयते न तद्विचित्रं, यतोऽत्राभिन्नरूपप्रतिभासे चित्रं विनिर्मिता स्वां रेखां परित्यज्य मन्मथविच्छित्त्यनुसारेण विविधमस्माभिर्विरचिता ग्रन्थसङ्घटनैव हेतुः ।" (Part II, pp. 449-50).

reads his name as Manmatha instead of Mammaṭa. It appears that the former was the author's original name and the latter a corruption thereof. The name Manmatha may also be taken as a title of distinction bestowed on the author who, from his prominent place in the Alaṅkāra Śāstra, allures the minds of Sahṛdayas to his attractive views. The passage cited above also lends support to the view that the closing portion of the Kāvyaprakāśa was left incomplete by the author but filled up by one Alarka.

Sampradāyaprakāśini.

"काव्यप्रकाशेऽलङ्कारसर्वस्वे च सचेतसाम् ।
येनादरो महांस्तेन व्याख्यातमुभयं सह ॥
सम्यक् समापिता चेयं श्रीविद्याचक्रवर्तिना ।
टीका काव्यप्रकाशस्य सम्प्रदायप्रकाशिनी ॥"

The above verses in the Sampradāyaprakāśini reveal the name of the commentator, the commentary and the work commented upon. By the statement 'व्याख्यातमुभयं सह' the commentator seems to imply that he commented upon both the kindered works viz., Kāvyaprakāśa and Alaṅkārasarvasva with undivided devotion and that his commentaries should therefore be regarded authoritative ones. As regards Śrī Vidyācakravartin we have nothing more to add to the information given in the preface to the first part of the work. The following verse in his Alaṅkārasarvasva Sanjīvini testifies to his great proficiency in various branches of learning.

"साङ्गुथं वेश्मनि वेश्मनि श्रुतिशिरः कक्ष्यासु कक्ष्यासु च
द्वारि द्वारि शिवागमाः पथि पथि प्राचां कवीनां गिरः ।
पठ्यन्ते यदसूयुभिर्जडतरप्रज्ञैर्जरत्तार्किकै-
स्तत्सर्वं खलु चक्रवर्तिकवितुर्विद्यायशोडिण्डिमः ॥"

That the commentary Sāhityacūḍāmaṇi of Bhaṭṭagopāla is also known as Kāvyaprakāśavimarśinī is suggested by the invocatory stanza,

Sāhityacūḍāmaṇi.

"ब्रह्मस्तम्बकुडुम्बसंघटितयोरग्राम्यभोगोत्सवं
साहित्यं शिवयोः प्ररोहयतु नः सौहित्यमव्याहतम् ।
यत्रान्योन्यमुखावलोकनसुखं सम्पद्यते सस्मितं
मङ्गल्ये मणिदर्पणे महति चायोगे विमर्शोत्तरम् ॥"

This may be regarded as a significant name of the commentary in as much as it seeks to establish its views after repudiating those opposed to its own. Though the anumāna theory of Mahima Bhatta who attempts to demolish the Dhvani school in his Vyaktiviveka is criticised by the commentator,

"एतेन—
यस्तु तत्त्वसमारोपस्तत्सम्बन्धनिबन्धनः ।
मुख्यार्थबाधे सोऽप्यार्थं सम्बन्धमनुमापयेत् ॥
तत्साम्यतत्सम्बन्धौ हि तत्त्वारोपैककारणम् ।
गुणवृत्तेर्द्विरूपायास्तत्प्रतीतिरतोऽनुमा ॥
गुणवृत्तौ गिरां यावत्सामग्रीष्टा निबन्धनम् ।
सैव लिङ्गतयास्माभिरिष्यतेऽर्थान्तरं प्रति ॥"

"किञ्च—
तुल्यादिषु हि लोकोऽर्थेष्वर्थं तद्दर्शनस्मृतम् ।
आरोपयेन्न शब्दं तु स्वार्थमात्रानुयायिनम् ॥
इत्थमर्थान्तरे शब्दवृत्तेरनुपपत्तितः ।
फले लिङ्गैकगम्ये स्यात् कुतः शब्दः स्खलद्गतिः ॥
प्रधानेतरभावेनावस्थानादर्थशब्दयोः ।
समशीर्षिकयारोपो न तयोरुपपद्यते ॥
इति ध्वनिवादनिराकरणे पादप्रसारिकायमाणो व्यक्तिविवेकखण्डः प्रत्याख्यातः"

(Part I, pp. 59-60)

he has very great regard for the author of the Vyaktiviveka as is evident from the verse,

"रसामृतनदीमग्ने ध्वनिकारे महागुरौ ।
अनुमायांपि महिमा काव्यगोष्ठीं न मुञ्चति ॥" (Part I, p. 3)

From these considerations we are inclined to regard the Sāhityacūḍāmaṇī as the crest-jewel of all the commentaries on the Kāvyaprakāsa. Regarding the date of the commentator, it was said in the preface to the first part of the work that if he is identical with Bhaṭṭagopāla, the father of Śāradātanaya who wrote the Bhāvaprakāśa, he must have lived prior to Śrī Vidyācakravartin who lived in the beginning of

the 14th century A. D. and who refers to the Bhāvaprakāśa in his Alaṅkārasarvasvasañjīvinī. From the lines

"एषां हन्ता भ्रूणहेति भट्टगोपालकोऽब्रवीत् ।
यदर्वाचीनमस्यापि श्रुत्यर्थं व्याचिकीर्षता ॥
माधवार्येण हि भ्रूणो वेदत्रयविदुच्यते ।"

found in the Smārtaprāyascitta a manuscript of which is available here, it is seen that there lived a Bhaṭṭagopāla who was earlier than Venkaṭamādhava who commented on the Ṛg-Veda. If this Bhaṭṭagopāla was the same as the present commentator then he must have been earlier than Veṅkaṭamādhava who flourished in the 12th century A. D.

We also learn from the passage,

"അതിൻെറ അനന്തരം പരദേശത്തു നിന്ന് ആറു ശാസ്ത്രികരം വന്നു. (1) ഭട്ടാചാൎയ്യൻ, (2) ഭട്ടബാണൻ, (3) ഭട്ടവിജയൻ, (4) ഭട്ടമയൂരൻ, (5) ഭട്ടഗോപാലൻ, (6) ഭട്ടനാരായണൻ. ഇങ്ങനെ"

founnd in the manuscript of Keralotpatti existing in the library of the Malayalam branch of my Office that a great pandit named Bhaṭṭagopāla migrated to Kerala from another country and that he was a protege of the famous Kulasekhara Perumal who is known to have ruled over the Kerala country in the early part of the 12th century A. D.

From the following verses which are met with the introduction "यथा ममैव" in the Sāhityacūḍāmaṇi,

"सोऽयं नीलस्तुरङ्गो मम यवनपतिः प्राभृतं प्राहिणोद्यं
भद्रः सोऽयं गजो मे समिति विलुलिता येन सौवीरसेना ।
सेयं मे वामनेत्रा समजनि समरो यत्कृते राजपुत्रै-
रेवं कारागवाक्षे कुलतिलक ! भवद्वैरिणो व्याहरन्ति ॥"

(Part I, p. 143)

आलब्धापि तमालगुच्छरुचिरे वक्षःस्थले शार्ङ्गिणो
लक्ष्मीस्त्वां कुलशेखरक्षितिपते ! शौर्योत्तरं ध्यायति ।
यस्यास्त्वद्गुणवासना वितनुते तामेव कान्तिं तनो-
र्निर्व्याजस्मयमानपङ्कजदलश्लाघाक्षरोल्लङ्घिनीम् ॥"

(Part II, p. 414)

it is evident that the commentator was also a protege of the king Kulaśekhara. If these two Bhaṭṭagopālas are identical

then the date of the commentator is not later than the first half of the 12th century A. D., and this date is not inconsistent with his priority to Venkaṭamādhava, the Vedic commentator. As the Kāvyaprakāśa is known to have been written in the 11th century A. D. it is quite possible that Bhaṭṭagopāla who lived in the 12th century A. D. might have commented on the work. From the following illustrative stanzas found among others in the Sāhityacūḍāmaṇi it can be gathered that Bhaṭṭagopāla travelled in various countries to spread the fame of his learning.

"आविर्भूतं बलभिदुपलश्यामलादम्बुवाहाद्
विद्युद्दाम्नो विजयनृपते! विभ्रमं प्रेक्षमाणाः ।
स्मारं स्मारं नवयवनिकामुल्लसत्खड्गलेखां
दुःखायन्ते रिपुनृपतयः प्रावृषोऽपि प्रसङ्गे ॥"

(Part II, p. 394)

"आरब्धामपराह्ण एव मह(ति? तीं) श्रीवल्लभक्ष्मापते!
गायन्तीं विशदं यशस्तव मुदा गोष्ठीं दिवौकस्पतेः ।
अज्ञानादुदयस्य चन्द्रमहसामामध्यरात्रं स्थिता-
मुल्लासेन सुगन्धिना विघटयत्युद्यानशेफालिका ॥"

(Part II, p. 402)

"न सा कीर्तौ राष्ट्रे दिशि दिशि न सौधे स्फुरति या
न ते सौधा नार्यो विदधति न यत्र व्यतिकरम् ।
न ता नार्यो यासां विलसति न गीतिः श्रुतिमती
न सा गीतिर्यस्यां तव सुभग! मुद्रा न घटते ॥"

(Part II, p. 393)

"कालं वा कालकूटं वा कल्पाग्निं वा खलं तु वा ।
तव देव! कृपाणस्य विधाता किमुपाददे ॥"

(Part II, p. 418)

"व्यालस्येव विषाणो दंष्ट्राङ्कुर इव दन्दशूकस्य ।
खड्गो वीर कठोरो नख इव सिंहस्य सहजमस्त्रं ते ॥"

(Part II, p. 418)

It has not been possible for us to ascertain if Gopālakavi referred to in the verse,

"कविर्लोके वाग्मी गमक इति येकेचन गुणै-
रखर्वं गर्वेयुः परपरिभवारम्भसुभटाः ।
समायोगे तेषां सह सदसि गोपालकविना
कथङ्कारं तिष्ठेदशिथिलमहङ्कारगरिमा ॥" (p. 181)

was the same as the commentator himself. But in view of the fact that the various accomplishments said to have been possessed by Gopālakavi fit in with the author of the Sāhityacūḍāmaṇi which bristles with stanzas worthy of a great poet, we are inclined to regard both of them as identical. The commentator cites a number of his own stanzas from which it can be gathered that he must have written many other works. But only one other work is mentioned by him by name and that is Camatkāracintāmaṇi which appears to be a treatise on Sāhitya from the following lines,

"यथाचोक्तं मया चमत्कारचिन्तामणौ वस्तुचेत्तत्कथमित्यारभ्य—

रजतानुभवे शुक्तिर्न चिन्तामधिरोहति ।
शुक्तिप्रतीतौ च तथा दूरे रजतवासना ॥

बाधेन मेलके भाव्यं सकदाचिल्लभ्यते(?) ।
एवं बाधस्य दौर्बल्याद् भ्रान्तत्वं संविदो वृथा ॥"

The edition of the work is based on twelve manuscripts. The text was collated with three manuscripts. Of these, the first two marked क and ख belong to the Palace library, Trivandrum and are about four centuries old. The third named ग, about two centuries old, was obtained from Panthalam Raja.

Sampradāyaprakāśini was examined with the help of the following five manuscripts.

1. क. Belonging to the Palace library, Trivandrum.
2. ख. Do. Narayana Pisharoti, Kitangur.
3. ग. Do. Paramesvaran Potti, Changarappalli.
4. घ. Do. the library at the mutt of Munchira Svamiyar.
5. ङ. Do. Chirakkal Raja.

Of these, the second and the last are three centuries old, and the rest four centuries old.

Sāhityacūḍāmaṇi was examined with the help of the following four manuscripts.

1. क. Belonging to Mr. Govinda Pisharoti, Kailasapuram
2. ख. Do. Do.
3. ग. Do. Panthalam Raja. The first few leaves are missing.
4. घ. Do. Mr. Chandran Rama Varyar, Antinadu Minachil. It contains the first 7 Ullāsas.

All these four manuscripts are four centuries old.

It is a matter for extreme satisfaction for us that, with the publication of this volume, the Trivandrum Sanskrit Series reaches its 100th number.

*Trivandrum,*
*27-3-1105.*

K. SĀMBAŚIVA ŚĀSTRI.

# उपोद्घातः ।

श्रीमम्मटभट्टकृतस्य काव्यप्रकाशस्य, श्रीविद्याचक्रवर्ति-श्रीभट्ट-गोपालप्रणीताभ्यां सम्प्रदायप्रकाशिनीसाहित्यचूडामणिभ्यामुभाभ्यां व्याख्याभ्यामुपेतस्यायमुत्तरो भागः । अत्र षष्ठादिदशमान्ता उत्तरे पञ्चोल्लासाः संघटिताः । इतः पूर्वमस्मादधिकरणात् प्रकाशितेन अष्टाशीतितमाङ्केन पूर्वभागेणानेन च दशोल्लासी काव्यप्रकाशः सम्पूर्णः ।

''नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥''

इति कविभारत्याम् (काव्य) उपक्रम्य

''इत्येष मार्गो विदुषां विभिन्नो-
ऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्
विनिर्मिता सङ्घटनैव हेतुः ॥''
काव्यप्रकाशः ।

इति प्रकाशापरपर्याये प्रतिभास उपसंहारमुपगुम्फता **श्रीमम्मटभट्टेन** यत **काव्यप्रकाश** इति समुचितं नाम प्राकाशि, स एष सर्वतःप्रकाशोऽर्थः साहितीस्वयंगृहीतानां सहृदयग्रामण्याम् । अत्रैव 'विदुषामि'त्यनेन प्राक्तनानाम् *उद्भट-भामहानन्दवर्धनादीनां प्रतिपत्तिसाक्षिकं ध्वनिदर्शनसङ्गतामिङ्गित-

---

* तथाचोक्तं साहित्यचूडामणौ —

''तथाहि उद्भटभामहप्रभृतयः सर्वं व्यङ्ग्यमर्थं वाच्योपस्कारकारणाद् अलङ्कारकक्ष्यानिक्षिप्तमाचक्षते । येन पर्यायोक्ताप्रस्तुतप्रशंसादौ वस्तुमात्रं, रूपकदीपकादावुपमालङ्कारः, रसवत्प्रेयआदौ रसादिरपि वाच्योपस्काराय कल्पत इति त्रिविधमपि व्यङ्ग्यमलङ्कारपारतन्त्र्येण प्रत्यपादयन् । वामनोऽपि सादृश्यनिबन्धनायां लक्षणायां 'सादृश्याल्लक्षणा वक्रोक्तिः' (अधि० ४ अ० ३. सू० ८) इति वक्रोक्त्यलङ्कारमलक्षयत् । भावालङ्कारामिव रुद्रटो ध्वनिविशेष एवालङ्कारशरीरमनुप्रावीविशत् । कुन्तकोऽपि वैदग्ध्यभङ्गिभाणितिस्वभावां वक्रोक्तिमेव काव्यजीवितमुपस्थापयन् व्यापारप्राधान्यादुक्तिवैचित्र्यलक्षणालङ्कारमुखेन चमत्कारमूरीचकार । आचार्यानन्दवर्धनः पुनरभिधातात्पर्यलक्षणाश्रयोत्तीर्णस्य ध्वननव्यापारस्यावश्याभ्युपगन्तव्यत्वाद् व्यापारस्य च वाक्यार्थत्वायोगात् ध्वनिलक्षणस्य गुणालङ्कारोपस्कार्यस्य व्यापार्यस्य रसादेः काव्यशरीरगोचरमात्मत्वं समर्थयाञ्चक्रे । इत्थं च तत्तद्ग्रन्थेष्वसारविस्तरपरित्यागेन सारसङ्कोचस्वीकारेण सौष्ठवोत्तरमुपकल्पिता सङ्घटनैव हेतुः'

सारं भङ्ग्यन्तरेण निरूप्य समुल्लसिते प्रकाशे सौष्ठवोत्तरया सङ्घटनया निकाम-मन्यादृशः कोऽप्युपादेयतामहिमा समभिव्यञ्जितो भवति । एतादृशः प्रकाशस्य समुल्लासयिता **श्रीमम्मटभट्टाचार्यो** बहुशः सुविदितः संस्कृतज्ञलोकस्य । अतो न तदीयदेश-जीवितसमयादिकमनभिनवं किञ्चिन्निश्चेतव्यमास्ते । किन्त्वस्मदुपलब्ध आदर्शे **श्रीविद्याचक्रवर्तिकृतसम्प्रदायप्रकाशिन्यां**—

> ''यद्वा **मन्मथग्रन्थशेषं** परिपूरितवतोऽयमलर्कस्य स्वापेक्षः श्लोकः। एष मार्गः ग्रन्थसन्दर्भसरणिः विदुषां विभिन्नोऽपि परस्परविलक्षणोऽपि अभिन्नरूपो यत् प्रतिभासते **मन्मथसन्दर्भसमानरूपो** यत् प्रतीयते न तद् विचित्रं, यतोऽत्राभिन्नरूपप्रतिभासे चित्रं विनिर्मिता स्वां रेखां परित्यज्य **मन्मथविच्छित्त्यनुसारेण** विविधमस्माभिर्विरचिता ग्रन्थसङ्घटनैव हेतुः ।'' (उत्तरभागः पृ० ४४९, ४५०)

इति दर्शनात् प्रकाशकर्तुः **मम्मटभट्ट** इति विवर्तनामधेयस्यानुगुणं **'मन्मथ'** इति मूलनामधेयं सुप्रसिद्धमासीदित्यभिनवं किञ्चिद् वस्तु सतां समक्षं समुद्घाटनीयं दृश्यते । साम्प्रतं च मन्ये तदिदं ध्वनिराज्यसाम्राज्यभुजोऽस्य समस्तसहृदयलोकवशीकारचतुरस्य **'मन्मथ'** इति समनुगुणं किमप्यपदानं नाम । किञ्च समुद्धृतः **सम्प्रदायप्रकाशिनी**भागः प्रकाशग्रन्थस्य शेषं किञ्चिदलर्काभिधेन परिपूरितमिति प्रथायां प्रमाणमपि भवति ।

> ''**काव्यप्रकाशेऽलङ्कारसर्वस्वे** च सचेतसाम् ।
> येनादरो महांस्तेन व्याख्यातमुभयं सह ॥
> सम्यक् समापिता सेयं **श्रीविद्याचक्रवर्तिना** ।
> टीका **काव्यप्रकाशस्य सम्प्रदायप्रकाशिनी** ॥''

सम्प्रदायप्रकाशिनी ।

(उत्तरभागः पृ० ४५०)

इति प्रतिजानानेन **श्रीविद्याचक्रवर्तिना** स्वस्य, स्वव्याख्यायाः, मूलग्रन्थस्य च निस्तर्कं नामधेयानि प्राकाशिषत । तत्रापि 'व्याख्यातमुभयं सह' इति भागेन परस्परालिङ्गितप्रकृत्योः सुश्लिष्टयोः **प्रकाशसर्वस्वयोर्यौगपद्येन** व्याख्यानं गमयता निरवच्छिन्नधारासन्तानेन प्रतिभानेन वितुषीकृत्य विषयशोधनं कृतमित्यवगमयता निरुपाधिकं प्रामाणिकत्वं व्यवस्थाप्यते । **श्रीविद्याचक्रवर्तिनो** जीवितसमयादिकं तु पूर्वभागोपोद्घातकथितान्नाधिकं किमप्यवगम्यते । अस्य पाण्डित्यप्रशस्ताविति ह नाम श्रूयते श्लोकः—

"साङ्ख्यं वेश्मनि वेश्मनि श्रुतिशिरः कक्ष्यासु कक्ष्यासु च
द्वारि द्वारि शिवागमाः पथि पथि प्राचां कवीनां गिरः ।
पठ्यन्ते यदसूयुभिर्जडतरप्रज्ञैर्जरत्तार्किकै-
स्तत्सर्वं खलु चक्रवर्तिकवितुर्विद्यायशोडिण्डिमः ॥"

(सर्वस्वसञ्जीविन्याम्)

साहित्यचूडामणिः । श्रीभट्टगोपालप्रणीतायाः साहित्यचूडामण्याख्याया व्याख्यायाः काव्यप्रकाशविमर्शिनीति नामधेयं

"ब्रह्मस्तम्बकुटुम्बसङ्घटितयोरग्राम्यभोगोत्सवं
साहित्यं शिवयोः प्ररोहयतु नः सौहित्यमव्याहतम् ।
यत्रान्योन्यमुखावलोकनसुखं सम्पद्यते सस्मितं
मङ्गल्ये मणिदर्पणे महति चायोगे विमर्शोत्तरे ॥" (पूर्वभागः पृ० १)

इति मङ्गलपद्य एव व्यङ्ग्यगर्भमन्तर्हितं भाति ।

परपक्षप्रत्याख्यानपुरस्सरमभिमतस्वपक्षस्थापनाय प्रबलतरैः प्रमाणैः प्रतिष्ठमानेयं व्याख्या तदिदं विमर्शिनीनामधेयमर्थवत् करोतीति सुविशदोऽयमर्थः सुधियाम् । विशिष्य व्यक्तिप्रस्थानशिथिलीकरणाय समुद्युञ्जानं विवेकं, मूलप्रकाश एव समुपपत्तिकल्पनानुगुणं रमणीयं वर्त्म समुद्घाट्य,

"एतेन —

'यस्तु तत्त्वसमारोपस्तत्सम्बन्धनिबन्धनः ।
मुख्यार्थबाधे सोऽप्यार्थं सम्बन्धमनुमापयेत् ॥

तत्साम्यतत्सम्बन्धौ हि तत्त्वारोपैककारणम् ।
गुणवृत्तेर्द्विरूपायास्तत्प्रतीतिरतोऽनुमा ॥'

'गुणवृत्तौ गिरां यावत्सामग्रीष्टा निबन्धनम् ।
सैव लिङ्गतयास्माभिरिष्यतेऽर्थान्तरं प्रति ॥'

'किञ्च —

तुल्यादिषु हि लोकोऽर्थेष्वर्थं तद्दर्शनस्मृतम् ।
आरोपयेन्न शब्दं तु स्वार्थमात्रानुयायिनम् ॥

इत्थमर्थान्तरे शब्दवृत्तेरनुपपत्तितः ।
फले लिङ्गैकगम्ये स्यात् कुतः शब्दः स्खलद्गतिः ॥

प्रधानेतरभावेनावस्थानादर्थशब्दयोः ।
समशीर्षिकयारोपो न तयोरुपपद्यते ॥'

इति ध्वनिवादनिराकरणे पादप्रसारिकायमाणो **व्यक्तिविवेकखण्डः** प्रत्याख्यातः'' (पूर्वभा० पृ० ५९, ६०) इत्यादिभिः स्वरूपव्याक्रिययैव पराकुर्वतीयं **विमर्शिनी** महिमानमसाधारणमात्मनो वशयन्ती स्थाने वल्गति । एवमपि **व्यक्तिविवेककारे महिमभट्टे**ऽस्यासामान्यो बहुमानः,

''रसामृतनदीमग्ने ध्वनिकारे महागुरौ ।
अनुमायापि महिमा काव्यगोष्ठीं न मुञ्चति ॥'' (पूर्वभागः पृ० ३)

इति पद्येन स्पष्टं प्रतीयते । सर्वथा सर्वासामपि काव्यप्रकाशव्याख्यानां चूडामणिरेवासौ **साहित्यचूडामणिः** । अयं **साहित्यचक्रवर्तिभट्टगोपालः भावप्रकाशकर्तृश्रीशारदातनय**जनकादभिन्न इति सम्भावनायां **भावप्रकाशं स्वकृतालङ्कारसर्वस्वसञ्जीविन्यां** स्मृतवतः क्रिस्त्वब्दीयचतुर्दशशतकारम्भजीविनः **श्रीविद्याचक्रवर्तिनः** पूर्वकालभव इति पूर्वभागोपोद्घाते निरूपितम् । अस्मदधिकरणदृष्टस्मार्तप्रायश्चित्तादर्शे दृश्यमानाद् —

''एषां हन्ता भ्रूणहेति **भट्टगोपालको**ऽब्रवीत् ।
यदर्वाचीनमत्यापि श्रुत्यर्थं व्याचिकीर्षता ॥
***माधवार्येण** हि भ्रूणो वेदत्रयविदुच्यते ।''

इति भागाद् वेदव्याख्यानकर्तुः **श्रीवेङ्कटमाधवार्यात्** प्राचीनतया स्वीक्रियमाणः कोऽपि **भट्टगोपालो** यदि **साहित्यचूडामणिकार** एव प्रस्तुतः सम्भवेत् तदा क्रिस्त्वब्दीयद्वादशशतकजीविनो वेदभाष्यकृतो **माधवार्याद**प्ययं प्राचीन इति सिध्यति ।

**अन्यच्च,** अस्मदधीनकैरलीयप्राचीनग्रन्थप्रकाशनाधिकरणसङ्गृहीते **केरलोत्पत्ति**नामनि ग्रन्थे

''അതിൻെറ അനന്തരം പരദേശത്തുനിന്ന്'' ആറു ശാസ്ത്രികൾ വന്നു— (൧) ഭട്ടാചാര്യൻ, (൨) ഭട്ടബാണൻ, (൩) ഭട്ടവിജയൻ, (൪) ഭട്ടമയൂരൻ, (൫) ഭട്ടഗോപാലൻ, (൬) ഭട്ടനാരായണൻ ഇങ്ങനെ.'

---

* 'आर्योपपदतया असकृत्तदुपयुक्तव्याचिकीर्षितपदस्वारस्याच्चायं वेङ्कटमाधवार्य इत्यभ्यूहः ।'

इति दृश्यमाने भागेऽनुसर्यमाणः कोऽप्यन्यतमो देशान्तरीयः सुप्रसिद्धश्रीकुल-शेखर(पेरुमाळ्)भूपालाश्रितो भट्टगोपालमहापण्डितः प्रकृतसाहित्यचक्र-वर्तिभट्टगोपालपण्डितादभिन्नो यदि स्यात् तदैतस्यां साहित्यचूडामणि-व्याख्यायामेव 'यथा ममैवे'त्युपक्रम्य —

"सोऽयं नीलस्तुरङ्गो मम यवनपतिः प्राभृतं प्राहिणोद् यं
भद्रः सोऽयं गजो मे समिति विलुलिता येन सौवीरसेना ।
सेयं मे वामनेत्रा समजनि समरो यत्कृते राजपुत्रै-
रेवं कारागवाक्षे कुलतिलक! भवद्वैरिणो व्याहरन्ति ॥"

(पूर्वभागः पृ० १४३)

"आलग्नापि तमालगुच्छरुचिरे वक्षःस्थले शार्ङ्गिणो
लक्ष्मीस्त्वां कुलशेखरक्षितिपते! शौर्योत्तरं ध्यायति ।
यस्यास्त्वद्गुणवासना वितनुते तामेव कान्तिं तनो-
र्निर्व्याजस्मयमानपङ्कजदलश्लाघाक्षरोल्लङ्घिनीम् ॥"

(उत्तरभागः पृ० ४१४)

इत्युदाहृियमाणयोः श्लोकयोरुपजीव्यतया जाप्यमानस्य कुलतिलकस्य तदपर-पर्यायस्य कुलशेखरस्य चावरतः क्रिस्त्वब्दीयद्वादशशतकपूर्वार्धजीविनः सम-समयजीवी साहित्यचूडामणिकारोऽप्येष ततोऽनर्वाचीन इति फलति। इदञ्च मन्ये, पूर्वोक्तवेदव्याख्यातृमाधवार्यात् प्राचीनतया साधितया निकाममनुरु-ध्यते । क्रिस्त्वब्दीयैकादशशतके काव्यप्रकाशस्यास्य विरचनमासीदिति रूढमूलः सिद्धान्तः । तदनन्तरस्य द्वादशशतकजीविनः श्रीभट्टगोपालस्य व्याख्यानकरणं नासङ्गतमलमभिधातुम् ।

"आविर्भूतं बलभिदुपलश्यामलादम्बुवाहाद्
विद्युद्दाम्नो विजयनृपते! विभ्रमं प्रेक्षमाणाः ।
स्मारं स्मारं नवयवनिकामुल्लसत्खड्गलेखां
दुःखायन्ते रिपुनृपतयः प्रावृषोऽपि प्रसङ्गे ॥"

(उत्तरभागः पृ० ३९४)

"आरब्धामपराह्ण एव महतीं श्रीवल्लभक्ष्मापते!
गायन्तीं विशदं यशस्तव मुदा गोष्ठीं दिवौकस्पतेः ।

अज्ञानादुदयस्य चन्द्रमहसामामध्यरात्रं स्थिता-
मुल्लासेन सुगन्धिना विघटयत्युद्यानशेफालिका ॥"

(उत्तरभागः पृ० ४०२)

"न सा कीर्ती राष्ट्रे दिशि दिशि न सौधे स्फुरति या
न ते सौधा नार्यो विदधति न यत्र व्यतिकरम् ।
न ता नार्यो यासां विलसति न गीतिः श्रुतिमती
न सा गीतिर्यस्यां तव सुभग! मुद्रा न घटते ॥"

(उत्तरभागः पृ० ३९३)

"कालं वा कालकूटं वा कल्पाग्निं वा खलं तु वा ।
तव देव! कृपाणस्य विधाता किमुपाददे ॥"

(उत्तरभागः पृ० ४१८)

"व्यालस्येव विषाणो दंष्ट्राङ्कूर इव दन्बशूकस्य ।
खड्गो वीर! कठोरो नख इव सिंहस्य सहजमस्त्रं ते ॥"

(उत्तरभागः पृ० ४१८)

इत्येवमादिभिस्तत्र तत्र समुदाह्रियमाणैः श्लोकैरयमेष **भट्टगोपालः** स्वकीयं पाण्डित्यं डिण्डिमयितुं ततस्ततः कृतसञ्चार इति शक्यमभ्यूहितुम्, यद्येवमयमभ्यूहः पूर्वोद्धृतकेरलोत्पत्तिदिशा विदेशागतेषु पण्डितेषु निकाममस्यान्यतमतामभिव्यनक्ति ।

अष्टमोल्लासे

"कविर्लोके वाग्मी गमक इति ये केचन गुणै-
रखर्वं गर्वेयुः परपरिभवारम्भसुभटाः ।
समायोगे तेषां सह सदसि **गोपालकविना**
कथङ्कारं तिष्ठेदशिथिलमहङ्कारगरिमा ॥"

(पृ० १८१)

इति **साहित्यचूडामणि**गते समाधिगुणोदाहरणपद्ये घटितो **गोपालकविः** किमयमेव **श्रीभट्टगोपालः** आहोस्विदन्य एव वेति निर्धारणाय न विशदो मार्ग उपलभ्यते । असाधारणेन कवित्वेन, तदनुगुणेन पाण्डित्यप्रकर्षेण च स्वयं वृतेऽस्मिन्नायकत्वस्यैव न्याय्योऽवसर इत्यस्माकमभिमानः । अस्याभिमानस्य

समुत्तम्भिकास्तास्ताः कवितावितासमुभाषितावल्य इहैव तत्र तत्र विदुषा-मपरोक्षाः । तत्र तत्र ममैवेत्युपक्रम्य नैकविधसन्दर्भानुरूपाणि पद्यान्युदाहरता स्वस्य बहुग्रन्थकर्तृत्वे निगम्यमानेऽपि

"यथाचोक्तं मया चमत्कारचिन्तामणौ वस्तुचेत्तत्कथमित्यारभ्य —

रजतानुभवे शुक्तिर्न चिन्तामधिरोहति ।
शुक्तिप्रतीतौ च + + दूरे रजतवासना ॥
बाधेन मेलके भाव्यं स कदाचिल्लभ्यते(?) ।
एवं बाधस्य दौर्बल्याद् भ्रान्तत्वं संविदो वृथा ॥"

(उत्तरभागः पृ० ४०२)

इति कथयता चमत्कारचिन्तामणिनामकः साहित्यनिबन्धोऽनेन नामग्राहं गृह्यते ।

अस्य ग्रन्थस्य परिशोधनमादर्शान् द्वादश समाश्रित्य निरवर्ति । तत्र

**काव्यप्रकाशस्य** समुचितपाठभेदसंघटनार्थम्

**अनन्तशयनमहाराजग्रन्थशालीयौ** क-ख-संज्ञौ द्वौ, **पन्तलराजस**-म्बन्धी ग-संज्ञ इति त्रयः । एषु प्रथमौ चतुश्शतवर्षीपर्युषितौ तृतीयश्च द्विशतसंवत्सरवृद्धः ।

**सम्प्रदायप्रकाशिन्याः** —

१. **अनन्तशयनमहाराजग्रन्थशालीयः** क-संज्ञः,
२. **किटङ्ङूर् श्रीमद्रामपिषारोटिस्वामिकः** ख-संज्ञः,
३. **चङ्ङारप्पळ्ळि ब्रह्मश्रीपरमेश्वरनूपोत्तिस्वामिकः** ग-संज्ञः,
४. **मुञ्चिरस्वामियार्मठग्रन्थशालीयः** घ-संज्ञः,
५. **चिरक्कल्राजसम्बन्धी** ङ-संज्ञः,

इति पञ्च । तेषु त्रिशतवर्षवृद्धौ ख-ङ-संज्ञौ । अपरे त्रयश्चतुश्शतवर्षस्थवीयांसः ।

**साहित्यचूडामणेः** —

१,२. **कैलासपुरगोविन्दपिषारोटिस्वामिकौ** क-ख-संज्ञौ,
३. **पन्तलराजसम्बन्धी** ग-संज्ञः (आदौ किञ्चिन्न्यूनः),
४. **मीनाच्चिल् अन्तिनाट्टुवार्यत्तु श्रीमच्चन्द्रन्रामवार्यर् ग्र**-न्थशालीयः घ-संज्ञः (आदितः सप्तमोल्लासान्तः)

इति चत्वारः । सर्वे एते चतुश्शतवर्षज्येष्ठाः ।

एवमनेन व्याख्याद्वयसमेतेन काव्यप्रकाशोत्तरभागेणानन्तशयनसंस्कृतग्रन्थावलेः प्रथमशतकं सोपानं परिपूर्णं प्रसाधितमिति सोऽयमस्माकं शुभोदर्कः कोऽप्यसामान्यो धन्यवादावसरः । परिपूर्णश्च प्रकाशो ग्रन्थावलिमिमां द्वितीयशतकसोपानमस्खलद्गति समधिरोपयितुमनुकूलो जात इत्यहोनुखलु!! दिष्ट्या सर्वं सुसम्पन्नम् ।

२७-३-०५. के. साम्बशिवशास्त्री.

---

# विषयानुक्रमणी ।

| विषयः | पृष्ठम् |
|---|---|

| विषयः. | पृष्ठम्. |
|---|---|

| विषयः. | पृष्ठम्. |
|---|---|

| विषयः. | पृष्ठम्. |
| --- | --- |

| विषयः. | पृष्ठम्. |
|---|---|
| प्रत्यनीकम् | ३८८ |
| मीलितम् | ३९० |
| एकावली | ३९२ |
| स्मरणम् | ३९३ |
| भ्रान्तिमान् | ३९५ |
| प्रतीपम् | ३९६ |
| सामान्यम् | ३९९ |
| विशेषः सप्रकारः | ४०२ |
| तद्गुणः | ४०५ |
| अतद्गुणः | ४०६ |
| व्याघातः | ४०८ |
| संसृष्टिः | ४१० |
| अङ्गाङ्गिभावसङ्करः | ४१३ |
| सन्देहसङ्करः | ४१९ |
| सन्देहसङ्करस्थलनिणर्यः | ४२२ |
| एकवाचकानुप्रवेशसङ्करः | ४२५ |
| अलङ्काराणां शब्दार्थगतत्वविषयप्रतिनियमः | ४२६ |
| अलङ्कारदोषाणामुक्तदोषेष्वन्तर्भावप्रदर्शनम् | ४२९ |
| तत्रानुप्रासदोषाः तेषामन्तर्भावश्च | ,, |
| यमकदोषः तस्यान्तर्भावश्च | ४३१ |
| उपमादोषः तेषामन्तर्भावश्च | ४३२ |
| उपमायां क्वचित् लिङ्गादिभेदस्यादुष्टता | ४३७ |
| कालादिभेदे उपमाया दुष्टता | ४३८ |
| असादृश्यासम्भवयोरुक्तदोषेष्वन्तर्भावप्रदर्शनम् | ४४२ |
| उत्प्रेक्षादोषः तस्योक्तिष्वन्तर्भावप्रदर्शनं च | ४४३ |
| समासोक्तिदोषस्तदन्तर्भावप्रदर्शनं च | ४४५ |
| अप्रस्तुतप्रशंसादोषस्तदन्तर्भावप्रदर्शनं च | ४४६ |
| ग्रन्थोपसंहारः | ४४८ |

॥ श्रीः ॥

# श्रीमम्मटभट्टकृतः

# काव्यप्रकाशः

## श्रीविद्याचक्रवर्तिप्रणीतया

## सम्प्रदायप्रकाशिन्याख्यया बृहट्टीकया

## श्रीभट्टगोपालप्रणीतया

## साहित्यचूडामण्याख्यया व्याख्यया च समेतः ।

(द्वितीयो भागः ।)

## अथ षष्ठ उल्लासः ।

**शब्दार्थचित्रं यत् पूर्वं काव्यद्वयमुदाहृतम् ।**
**गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः[1] ॥ १ ॥**

सम्प्रदायप्रकाशिनी

### अथ षष्ठ उल्लासः ।

क्रमे[2]प्राप्तं चित्रकाव्यं लिलक्षयिषुः शब्दार्थहे[3]तुकतया[4] द्वैविध्यं तावदनुस्मारयितुं सूत्रमेवावतारयति — शब्दार्थचित्रमिति । शब्द-

साहित्यचूडामणिः

### अथ षष्ठ उल्लासः ।

अथ परिपाटीप्राप्तं तृतीयं काव्यं प्रकटयिष्यन्नल्पप्रमेयतया कारिकामेव पठति— शब्देति । नन्वादिमोल्लासपर्यन्ते द्वैरूप्येण तृतीयं काव्यमुदाजह्रे । किमत्र पौनरुक्त्येन । उच्यते । आलङ्कारिकेषु केचन शब्दालङ्कारैकतात्पर्यशालिनः केचिदर्थालङ्कारैकप्रवणाः एके तदुभयावश्यम्भावभव्यबुद्धय इति त्रैविध्यम् । तत्रैकैकपक्षोपक्षेपानुगुण्यादाद्योल्लासोदाहरणद्वयं, यतः "स्वच्छन्दोच्चलदि"त्यादौ न काचिदर्थस्यालङ्कारस्य शङ्का, "विनिर्गतमि"त्यादौ न

१. 'तिः शब्दार्थचित्रयोः' क. पाठः. २. 'मेण चि' ख. ग. पाठः. ३. 'तुत' क. ख. घ. पाठः. ४. 'या वैचित्र्यं ता' ग. पाठः.

G. P. T 4800. 500. 9-4-1102. B

नतु शब्दचित्रेऽर्थस्याचित्रत्वम्, अर्थचित्रे वा शब्दस्य। तथाचोक्तं—

सम्प्रदायप्रकाशिनी

चित्रमर्थचित्रं चेति यत् प्रथमोल्लासे काव्यद्वयमुदाहृतम्, उभयत्रापि तत्र प्रत्येकमुभयवैचित्र्येऽपि गुणप्राधान्यतो विभागः एकत्र शब्दस्य साक्षाद् वैचित्र्यम् अर्थस्य तद्द्वारा, अन्यत्र पुनरर्थस्य साक्षात् शब्दस्य तद्द्वारेति गुणप्रधानभावेन निमित्तेनानुप्रासादि शब्दचित्रमुपमादिस्त्व-र्थचित्रमिति शब्दार्थयोर्वैचित्र्यविभागेनावस्थानम्। यत एवं शब्दा-र्थयोश्चित्रा स्थितिरतश्चित्रं काव्यं द्विधोपदर्शनीयमिति कारिकार्थनि-ष्कर्षः।

तदेतदुपपादयितुमुपक्रमते — नतु शब्दचित्र इति। मिथः प्रतिबद्धत्वादित्यर्थः।

किं शब्दार्थयोर्मिलितयोरेव वैचित्र्यादविभागेन चित्रकाव्यमेक-माहोस्विद् विभागशो द्विरूपमिति सन्देह उद्भावितः, येन सान्दिग्धेऽर्थे प्रवर्तनार्हाणां पूर्वाचार्यन्यायकारिकाणामवतरणिका कृता भवतीति कारिकाः समवतारयति—तथाचोक्तं रूपकादिरित्यादिना। तिसृ-ष्वेतासु कारिकासु लिलक्षयिषितस्य चित्रकाव्यस्य स्वरूपतः सिद्धिरर्था-लङ्कारैकात्मकत्वं च प्रथमकारिकया दर्शितम्। अथ द्वितीयकारिकाप्रथ-मार्धेन तु शब्दार्थयोर्वैचित्र्यस्य मिथः प्रतिबन्धादविभाग इति, रूपका-दिरलङ्कारोऽपि अनुप्रासादिवद् बाह्य एवेति प्रतिपादितम्। इत्थं पूर्वप-क्षमुत्थाप्य समनन्तरया त्वर्धान्तरसहितया कारिकया बाह्याभ्यन्तरत्वे-नालङ्कारभेदः सोपपत्तिकं दर्शित इति कारिकात्रयस्य पिण्डितार्थः। अथ

साहित्यचूडामणिः

शाब्दस्य। इह तु तदुभयमेलकानुसारो ग्रन्थकारस्य, यत्र प्राधान्याप्राधान्य-विवेकः परिशिष्यते। गुणेति। उद्रिक्ताङ्गोपादानात् क्वचित् केनचिद् व्यप-देश इति शब्दार्थयोरपि वैचित्र्यं प्रसिद्धमित्येतद् वादिविप्रतिपत्तिपूर्वं संवाद-यति— तथाचेति। रूपकादिरित्यर्थालङ्कारप्राधान्यवादिनां पक्षः। रूपका-

१. 'न्ध ख. ग. पाठः. २. 'व्यात्मक' ग. पाठः. ३. 'ति—रू' ख. पाठः.

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनितामुखम् ॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥

सम्प्रदायप्रकाशिनी

शब्दसङ्गत्या व्याकुर्मः—रूपकादिरर्थालङ्कारवर्गः । तस्य काव्यस्यान्यैराचार्यैर्बहुधोदितः नानाप्रकारमुपदर्शित इत्यनेन शब्दालङ्कारानभ्युपगमः सूचितः । ननु रसप्रकर्षशालिनस्तदनुगुणगुणसमवायोपशोभिनः संघटनासमुन्मीलितसौभाग्यातिशयस्य काव्यस्य किं रूपकाद्यलङ्कारयोगेनेति प्रत्यवतिष्ठमानान्[1] व्यतिरेकदृष्टान्तेन प्रत्याचष्टे—न कान्तमपीति । नहि कान्तं सदपि वनितामुखमलङ्कृतवदनलङ्कृतं[2] विशिष्य भाति । अनेन शोभापौष्कल्यसिद्ध्यर्थमलङ्काराणामवश्यपरिग्राह्यत्वप्रदर्शनेनालङ्कारात्मनश्चित्रकाव्यस्यारम्भणीयत्वमुपपादितम्, उपपादयिष्यमाणस्य च गुणालङ्कारविभागस्य बीजमप्युपक्षिप्तम् । अथ शब्द[3]चित्रमर्थचित्रं चेति विभागमसहमानैरन्यैरर्थालङ्कारवर्गापलापै[4]: पूर्वपक्ष उत्थाप्यत इत्याह—रूपकादिमिति । यो ह्ययं रूपकादिरर्थालङ्कारस्तमनुप्रासादिशब्दालङ्कार[5]वत्[6] केचिद् बाह्यमाचक्षते । तत्र मिथो वैचित्र्यप्रतिबन्धरूपो हेतुः स्फुटत्वात् कारिकया नो[7]पात्तः । अथ सिद्धान्तयति—सुपां तिङां चेति । यदेतदाभ्यां मिथो वैचित्र्यप्रतिबन्धमात्रेण शब्दार्थचित्रयोरविशेषेण बाह्यत्वमाभ्यन्तरत्वमेव वाशङ्कितं[8], न तदुपपद्यते । शब्दार्थ[9]वैचित्र्ययोर्विजातीयत्वात् । वाचां वैचित्र्ये[10] हि सुपां तिङां च व्युत्पत्तिः । सुपां तिङां च तत्तद्विविच्छित्त्यनुगुणतया[11] वाचि विनिवेशनं हि शब्दालङ्कारः । अतः शब्दधर्मत्वात् शब्दालङ्कार एवायम् । तमिमं

साहित्यचूडामणिः

दिमिति पुनः[12]रितरेषाम् । तदेतत् सुप्तिङ्व्युत्पत्तिरूपम् । ईदृशी शब्दस्वरूप-

१. 'ननम्' ख. पाठः. २. 'पीति व' क. ग. पाठः. ३. 'ब्दस्य चि' ग. पाठः.
४. 'पः क्रियत' ख. ग. पाठः. ५. 'रादिव' क. ग. घ. पाठः. ६. 'द् वा' ग. पाठः.
७. 'नोक्तः । अ' ख. ग. पाठः. ८. 'तं त' ग. पाठः. ९. 'र्थचित्रयो' क. घ. पाठः.
१०. 'र्म्यं' क. ख. घ. पाठः. ११. 'या वि', १२. 'नरे' ग. पाठः.

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥"

इति ।

शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत् ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।

सम्प्रदायप्रकाशिनी

शब्दधर्मत्वेनैवामनन्तीत्याह— **तदेतदाहुः सौशब्द्यमिति** । योऽयं सुप्तिङ्व्युत्पत्त्यात्मा शब्दालङ्कारस्तमिमं सौशब्द्यं सुशब्दत्वमेवामनन्ति । कविशब्दत्वमेव शब्दालङ्कार इति निष्कर्षः । नहि सुशब्दत्वमर्थधर्म इति कश्चित् सचेतनः शङ्कते । तर्ह्यर्थवैचित्र्यं कीदृगित्यत आह— **नार्थव्युत्पत्तिरीदृशीति** । नेदृशी शब्दव्युत्पत्तिसधर्मा न भवति । शब्दव्युत्पत्तिर्हि समुचिततिङ्सुब्व्युत्पत्तिरूपा । अर्थव्युत्पत्तिस्तु जातिगुणादिधर्मविशेषविच्छित्तिविवेचनरूपा । अतोऽनुप्रासादिरूपायाः शब्दधर्मविच्छित्तेरन्यैव ह्यौपम्यादिरर्थधर्मविच्छित्तिरिति सिद्धम् । यत इत्थं वैचित्र्यभेदः, ततः स्वसिद्धान्तं निगमयति— **शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः इति** । शब्दालङ्कारोऽर्थालङ्कारश्चेति भेदसम्भवादुभयमपि चित्रकाव्यमस्माकमभिमतम् ।

एतासु कारिकास्वर्थं परिच्छेत्तुमपारयन् ।
पदेपदे पलायिष्ट सान्धिविग्रहिकः स्खलन् ॥

**प्रथममरुणेति** । अत्र तावत् ततस्तदन्वित्यादौ केवलव्यञ्जनसाम्याद्[3] वृत्त्यनुप्रास एवार्थवैचित्र्याद् विशिष्य भातीति शब्दचित्रम् ।

साहित्यचूडामणिः

पर्यवसिता । अर्थव्युत्पत्त्या च काव्यम् । काव्ये द्वयं शाब्दार्थी च व्युत्पत्तिरित्यैकैकपक्षव्युदासाय ।

**प्रथममिति** । ततः सरसबिसिनीकन्दच्छेदच्छविरित्यन्वयः । अत्रानुप्रासः प्रधानम्, उपमोपसर्जनम् । ओजश्च गुणः ।

१. 'ति । अतो ने' ख. ग. पाठः. २. 'दिवि', ३. 'मान्याद्' ग. पाठः.

उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

अर्थचित्रं यथा —

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानं, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्

सम्प्रदायप्रकाशिनी

**ते दृष्टीति** । नीचाः अवाक्स्वभावाः तुच्छशीलाश्च । अलीकलग्नाः ललाटावलम्बिनः अनृताभिरताश्च । अत्र समुच्चयादेरर्थालङ्कारस्य प्राधान्यम् ।

नन्वनयोरप्युदाहरणयोः सूक्ष्मेक्षिकया निरूपणे रसादिरूपं व्यङ्ग्यमस्त्येव । अतः कथं चित्रत्वमित्यत आह — **यद्यपीति** । ननु चित्रमपि ध्वनिगुणीभूतव्यङ्ग्यन्यायेन निरवशेषं किं न प्रदर्शित-

साहित्यचूडामणिः

त इति । नीचाः प्रलम्बाः अधमाश्च । अलीकं ललाटं, दैर्घ्येऽपि सौशक्यमित्याप्ताः । तत्र सविलासं लग्नाः । अपिच यदलीकमसत्यं तत्र सौजन्यनाटितकपूर्वं लग्नाः । कालत्वं कुटिलता चाकारहृदययोर्यथासङ्ख्यम् । अत्र समुच्चयस्य प्राधान्यम् अनुप्रासस्योपसर्जनत्वं, माधुर्यं च गुणः ।

ननु शब्दचित्रे चन्द्रोदयस्योद्दीपनस्य वर्णनीयतया शृङ्गारो व्यङ्ग्यः । अर्थचित्रे च कामिनीलक्षणस्यालम्बनस्येति कथमव्यङ्ग्यमिति चेत् तत्राह — **यद्यपीति** । **स्फुटस्येति** । विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः । यदाह—

"रसभावादिविषयविवक्षाविरहे सति ।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः ॥

१. 'कद्दशी', २. 'तनिर' ख. ग. पाठः. ३. 'दर्था' क. ख. पाठः. ४. 'त्रचित्रम' ५. 'षं न प्र' क. पाठः. ६. 'वैदग्ध्येऽपि सौ' ग. पाठः.

काव्यद्वयमुक्तम्। अत्र तु[1] शब्दार्थालङ्कारभेदाद् बहवो भेदाः। ते चालङ्कारनिर्णये निर्णेष्यन्ते।

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम
षष्ठ उल्लासः।

सम्प्रदायप्रकाशिनी

मित्यत आह— अत्र तु शब्दार्थेत्यादि[2]। अलङ्काररूपधर्ममात्रप्रा[3]णकं हि चित्रं धर्मिप्रस्तावादिह दिङ्मात्रेण दर्शितम्। अलङ्कारनिर्णये[4] तु प्राप्तावसरतया निरवशेषं निर्णेष्यते॥ १॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यां
काव्यप्रकाशबृहट्टीकायां
षष्ठ उल्लासः।

साहित्यचूडामणिः

रसादिषु विवक्षा तु स्यात् तात्पर्यवती यदा।
तदा नास्त्येव तत् काव्यं ध्वनेर्यत्र न गोचरः॥"

इति। इत्थमस्य काव्यस्याधमत्वमनुसन्धेयं, न सर्वथा। यदाह—

"रसभावाङ्गभावस्तु यमकादेर्न वार्यते।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते॥"

इति। अलङ्कारनिर्णये नवमे दशमे चेति सिद्धम्॥ १॥

शब्दार्थचित्रघटनापटवः कवीन्द्राः संस्थानवर्णगतिबन्धविभक्तशोभाम्।
अल्पोदरामनुदरामिव राजकन्यामल्पध्वनिं भणितिमध्वनिमामनन्ति॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
षष्ठ उल्लासः।

---

१. 'च' ख. पाठः. २. 'दि। रसाल' ग. पाठः. ३. 'प्रमाणकं' क. घ. पाठः.
४. 'योऽप्रा' क., 'ये निर्णे' ख. ग. पाठः. ५. 'यां चित्रविवेचनः ष' क. ख. पाठः.

# अथ सप्तम उल्लासः।

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः।**

सम्प्रदायप्रकाशिनी

## अथ सप्तम उल्लासः।

इत्थं धर्मिणि प्रदर्शिते धर्माणां सम्प्रति निरूपणावसरः। तत्र दोषलवोऽप्यकाव्यतायै कल्पत इत्यवश्यहेयतां[1]ज्ञापनाय दोषनिरूपणमेव प्राथम्यमर्हतीत्यभिप्रायेणाह वृत्तिकारः— काव्यस्वरूपं निरूप्येत्यादि। सामान्यलक्षणमिति। विशेषलक्षणानां तन्मूलत्वात्।

मुख्यार्थहतिरिति। रसस्यापकर्षो दोषः। स विभावानुभावव्यभिचारिणा[2]मयथायथं विनिवेशात् साक्षादेव भवतीति रसदोषो महान् दोषः। रसाश्रयत्वेन द्वारा भवतीत्यर्थदोषस्तदपेक्षया निकृष्टः, अर्थाश्रयत्वात्। पदपदैकदेशदोषाः परिपाट्या दविष्ठा इति निकृष्टतराः। सङ्केतितो[3]र्थो हि लक्ष्याद्यपेक्षया मुखमिव प्राग् भवतीति कृत्वा मुख्य इत्युक्तं प्राक्। इहापि तथा भ्रमो मा भूदित्युक्तं रसश्च मुख्य इति। मुख्यः प्रधानभूत इत्यर्थः। चोऽवधारणे। ननु यदि रस एव मुख्योऽर्थस्तदा वाच्याद्यपकर्षस्यादुष्टता प्राप्तेत्यत आह—तदाश्रयाद् वाच्य

साहित्यचूडामणिः

## अथ सप्तम उल्लासः।

अकलङ्कशशिच्छाया जीयाद् देवी सरस्वती।
यया कविचकोराणां पारणा परिपूर्यते॥

उल्लाससङ्गतिमासूत्रयति— काव्येति। दोषाणामिति। 'तद्दोषौ शब्दार्थावि'त्युक्तक्रमेण दोषाणां गुणानामलङ्काराणां च लक्षणीयत्वात्। सामान्यलक्षणमिति। तदुपक्रमत्वाद् विशेषलक्षणस्य।

मुख्येति। मुख्यार्थस्य हतिर्दोषः। ननु स मुख्योऽर्थ इत्युक्तयुक्त्या किं साक्षात्सङ्केतितस्यार्थस्य, नेत्याह—रसश्चेति। चस्त्वर्थे। गुणवृत्तिरमुख्यो

१. 'तया ज्ञा' ग. पाठः. २. 'णा य' क, 'णां य' ख. पाठः. ३. 'तो' ग. पाठः. ४. 'वि' क. घ. पाठः. ५. 'च्याप' क. पाठः.

**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥ १ ॥**

हतिरपकर्षः। शब्दाद्या इत्याद्यग्रहणाद् वर्णरचने ॥१॥

विशेषलक्षणमाह—

**दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।**

---

सम्प्रदायप्रकाशिनी

इति । रसाश्रयभूतत्वाद् वाच्योऽपि मुख्यार्थ इति तदपकर्षो दोष एव । तदुभयाश्रयत्वात् पदपदैकदेशादेरपि दुष्टता बोद्धव्या ।

तदेतद् यथोपयोगं व्याचष्टे— हतिरपकर्ष इत्यादि ॥ १ ॥

तत्र रसो वाक्यार्थप्रतीतिपूर्वकः, वाक्यार्थप्रतीतिर्वाक्यात्, वाक्यं च पदारब्धं, पदैकदेशादयोऽपि पदपूर्वका इति प्रथमतः पददोषलक्षणमारभते— दुष्टं पदमित्यादि । श्रुतिकटु च्युतसंस्कृतीत्यादिषु षोडशसु लक्ष्यपदेषु दुष्टमिति प्रत्येकमभिसम्बन्धः ।

साहित्यचूडामणिः

व्यापारः अभिधाव्यञ्जनयोरुभयोरपि मुख्यत्वमिति भावः । तदाह— "यद-मुख्यतया व्यापारो गुणवृत्तिर्व्यञ्जनं तु मुख्यतये"ति । यद्वा वाच्यस्य मुख्यत्वं लक्ष्यादेरर्थात् प्राथमिकत्वं, रसस्य तु सर्वाकारेण प्राधान्यम् । तस्य च विवक्षितरसभावादिप्रतीतिविघ्नविधायित्वं नाम सामान्यलक्षणमिति व्यक्तिविवेक-युक्त्या रसचमत्कारतिरोधानं दोष इति यावत् । ननु 'व्यभिचारिरसे'त्यादि-वक्ष्यमाणक्रमेण कतिपय एव रसदोषाः, अपुष्टत्वादयस्त्वर्थभागभागिन इत्य-प्यव्याप्तिर्लक्षण(स्य) इति चेत् तत्राह— तदाश्रयादिति। रसाश्रयभूतत्वाद-भिधेयो(क्तरापवक्त ? रसोपरक्त)रूपमुख्यभूतः । औपचारिकं तन्मुख्यत्वमिति भावः । तेन हि शब्दादिविषयेषु (तावतादिषु ? तावद)व्याप्तिरित्याशङ्क्याह— उभयेति । रसस्य वाच्यस्य चोपयोगिनः व्यञ्जकत्ववाचकत्वादिनोपकारकाः शब्दवर्णादयः । तेन हेतुना तेषु शब्दादिष्वपि स दोषो दृश्यते । अयं भावः प्रतिकूलविभावादिग्रहादिवद् दुष्टत्वादयोऽपि रसस्यैव दोषाः । उपचारादर्थ-शब्दादीनामिति ।

हतिशब्दो लक्षणीय इत्याह— अपकर्ष इति ॥ १ ॥

---

१. 'ताद्' ग. पाठः. २, ३. 'ख्या', ४. 'णं—दु' क. ख. घ. पाठः. ५. 'ध्यते म' ख. ग. पाठः. ६. 'धान्यम्' घ. पाठः.

**निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम् ॥**
**सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥ ३ ॥**

श्रुतिकटु परुषवर्ण*रूपम् । यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥

अत्र कार्तार्थ्यमिति ।

---

**सम्प्रदायप्रकाशिनी**

यथोपयोगं लक्ष्यपदं विवृण्वन् क्रमेणोदाहरति — **श्रुतिकटु परुषवर्णरूपं यथे**त्यादिना । परुषवर्णस्यार्थपर्यालोचननैरपेक्ष्येण श्रवणमात्राद् रसभङ्गहेतुत्वमिति निर्देशे प्राथम्यम् ।

**अनङ्गे**ति । अनङ्गमङ्गलगृहभूते अपाङ्गे या एता भङ्ग्यः वक्रिमोत्तरा विच्छित्तिविशेषाः तासां तरङ्गितैरालिङ्गितः कटाक्षैर्वीक्षित इत्यर्थः । कार्तार्थ्यं कृतार्थता । एवम्प्रायं श्रुतिकटु रौद्रादावपि न शोभत इति शृङ्गारे सुतरां दोषः ।

**साहित्यचूडामणिः**

तत्र दुष्टस्थलोपलक्षणीयत्वाद् दोषाणां दुष्टादिपदान्युद्दिशति — **दुष्टमिति** । पदवाक्यतदुभयार्थादिभेदादमीषां बाहुविध्यं स्वयमनुसन्धेयम् ।

तत्तत्संज्ञया विशेषलक्षणमूहनीयमित्याशयादाह — **श्रुतिकट्विति** । यस्य कष्टमिति व्यपदेशान्तरम् ।

**कार्तार्थ्यमिति** । आदिवृद्धिप्रयुक्तं कष्टत्वम् ।

**च्युतेति** । संस्कृतिर्व्याकरणलक्षणं, सा गलिता यस्माद् असाधुरपशब्दश्चेति । तदुक्तम्—

"असाधुरपशब्दश्च द्विधा शब्दः प्रकीर्तितः ।
तत्रासाधुरसाध्यो यः प्रकृतिप्रत्ययादिभिः ॥

---

१. 'श' ख, ग. पाठः. २. 'य' क. घ. पाठः.

* 'रूपं कष्टं यथे'ति मूलकोशपाठः.

च्युतसंस्कृति व्याकरणलक्षणहीनम् । यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोद*रापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत् पल्लीपतिपुत्रि! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥

---

सम्प्रदायप्रकाशिनी

**च्युतसंस्कृतीति** । संस्कृतिर्व्याकरणलक्षणम् । अप्रयुक्तापेक्षया तत्रानौचित्यप्रतीतिः स्फुटेति प्राथम्यम् । एवं सर्वत्र क्रमे विवक्षानुसन्धेया ।

**एतन्मन्देति** । भोः पल्लीपतिपुत्रि! मन्दविपक्वतिन्दुकफलवदुदरे श्यामं प्रान्तभागे (आ)पाण्डरं तवैतत् कुचयुगं पुलिन्दयूनां करोपलालनार्हं दृश्यते । अनेनास्याः प्राथमिकसम्भोगार्हता व्यज्यते । तस्मात् साहित्यचूडामणिः

शब्दादपेतोऽपशब्दः शब्दनाकरणात्मनः ।
शब्दना हि परामर्शो वाच्यार्थविषयोऽस्य यः ॥
एवञ्चासाधुशब्दोऽपि नापशब्दत्वमर्हति ।
न सोऽप्यम्ये(त्वा? त्य)साधुत्वं तयोर्विषयभेदतः ॥"

इति ।"अस्मान् प्रति पुनरविषये प्रयुज्यमानः शब्दोऽपशब्द एवे"ति व्यक्तिविवेकयुक्त्या प्रकृतिप्रत्ययाद्यसिद्धस्यासाधुत्वं, गुणसामग्री(क? ह)तस्य तत्राप्यविषयप्रयुक्तस्यापशब्दत्वम् । तद्वैविध्यं तु विधायैवमुक्तिर्यस्मादसाधोरप्यनुमानाद् वाचकत्वमस्ति । यदाहुः—

"असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।
वाचकत्वाविशेषेऽपि विशेषः पुण्यपापयोः ॥
अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।
निमित्तभेदात् सर्वत्र साधुत्वं च व्यवस्थितम् ॥"

इति ।

**कुम्भाभयेति** । कुञ्जराणां कुम्भेष्वेव पुलिन्दशरपातौचित्यात् पत्रावृतं मा कृथाः । अनावृते हि कुचकुम्भे पुलिन्दसुन्दराणां रणरणकवशात्

---

१. 'द्वेरस', २. 'था' घ. पाठः.

---

* '[illegible]' इति मूलकोशपाठः.

अत्रानुनाथत इति । 'सर्पिषो नाथत' इत्यादावाशिष्येव नाथतेरात्मनेपदं नियमितम् 'आशिषि नाथः' (वा० १.३.२१)

सम्प्रदायप्रकाशिनी

कुम्भाभयाभ्यर्थनादीनं कुञ्जरकुलं त्वां याचते । तदेतत् कुचयुगं पत्रैर्मा संवृणु । पत्रावरणरहितं कुचयुगं करस्पर्शेनेनोपलालयत्सु पुलिन्दसुन्देरेषु मृगयाभावात् कुम्भाभयं भवेदित्यभ्यर्थनया दीनं कुञ्जरकुलं त्वां याचते । अतो मा संवृणित्यर्थः ।

अत्रानुनाथते इति । च्युतसंस्कृतीति शेषः । च्युतसंस्कृतित्वं समर्थयति — सर्पिष इत्यादिना । 'सर्पिषो नाथते' 'मधुनो नाथत' इत्यादावाशिष्येवार्थे नाथतेरात्मनेपदं व्यवस्थापितम् 'आशिषि नाथः' (वा० १.३.२१) इति सूत्रेण । इह त्वर्थो याचनमिति च्युतसंस्कृतित्वम् । यत्तु सान्धिविग्रहिकेण 'आत्मनेपदिनः पुनरात्मनेपदविधानमाशिषि नियमार्थं याचनादौ तु विकल्पो ज्ञाप्यत इति नैतत् च्युतसंस्कृत्युदाहरणमि'ति उदाहरणान्तरं दर्शितं, तदतीव साहसम्, आचार्यहृदयापरिज्ञानात् । तथाहि — 'आशिष्येवात्मनेपदं नियमितमि'ति वदन् यत्रानियमनेऽर्थान्तरेऽर्थाक्षिप्तं कामचारं नहि न वेदा-

साहित्यचूडामणिः

क्षीणशक्तित्वेन गजकुम्भविदारणपटीयस्त्वं न भवतीत्यर्थः । अनुनाथत इत्येतदसाधु 'आशिषि नाथ' इत्याशिष्येव स्वाभिलषितवस्त्वाशंसनलक्षणायामात्मनेपदस्य नियन्त्रितत्वाद्, तत्प्रयोगे चापशब्दप्रसङ्गो दोषः । यथोक्तं—

"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥"

इति । अपशब्दो वैतदुदाहरणमस्तु आशीर्विधायकस्यात्मनेपदस्य सामग्रीवैगुण्यशालिनो याचने प्रयुज्यमानत्वाद्, यथा 'मधुकरैरपवादकरैरिव' (मा० ६.९) इत्यादौ च रजितशब्दः ।

---

१. 'नया दी' ख. ग. पाठः. २. 'त्यर्थनादी', ३. 'त इ', ४. 'दमा' ग. पाठः. ५. 'त्र च नि' क. पाठः. ६. 'मेनार्थो' ख. पाठः. ७. 'रे आक्षि' ख. ग. पाठः. ८. 'रं न वेदाचार्यः । नाथत इत्यादौ कष्टकल्पया गतिरस्तीति नहि' क. घ. पाठः.

**इति। अत्र च याचनमर्थः। तस्माद् 'नाथति *स्तनयुगमि'ति पठनीयम्।**

**अप्रयुक्तं तथाम्नातमपि कविभिरनादृतम्। यथा—**

---

सम्प्रदायप्रकाशिनी

**चार्यः। किन्तु यत्र दोषत्वे विवादस्पदं दोषत्वेनोदाहृतं साक्षाद् दुष्टं दुष्टतया कैमुत्येन सिध्यतीत्यभिप्रायेणैवमाद्युदाहरति, रसप्रतीतिपरिस्खलनस्याविशेषात्। इतरथा वाक्यदोषेषु हतवृत्तत्वं साक्षात् छन्दोभङ्गाभावेऽपि तद्बुद्धिजनकतया नोदाहरिष्यत्, तथा विसन्धित्वमपि। नहि प्रमाणविरुद्ध एव दोषः, अपि[3]तु प्रतीतिपरिस्खलनहेतुः। प्रतीति[2]परिस्खलनहेतुत्वं च प्रकृते परिस्फुटं, विवादादेर्वै। तारतम्यप्रदर्शनायैव च पाठान्यथीकरणं 'नाथति स्तनयुगमि'ति। अतः च्युतसंस्कृतित्वादेर्नित्यदोषत्वाद् विशिष्योज्जागरितव्यं कविनेत्युपदिष्टं भवति। इत्थमाचार्यहृदयान्वेषणमेवैतदादौ शोभते व्याख्यातॄणां, नतु दूषणम्। नहि कश्चिन्महाभाष्यकृ[5]ति म(न्मथा? म्मटा)चार्ये च स्खलनोद्भावनं प्रेक्षावाननुमन्यत इत्यलम्।**

**अप्रयुक्तमिति। तथाम्नातं तेन रूपेणाभिधानकोशादिषु पठितमपीत्यर्थः।**

साहित्यचूडामणिः

नचा(त्र? त्रा)शि(वो? षो)ऽर्थ इत्याह—**अत्र चेति**। आशीर्याचनयोरेकार्थताभ्रान्तिरविदग्धानाम्। 'आशिषि नाथः' (२.३.५५) इति सूत्रेण नाथनीयस्य सर्पिरादेः षष्ठ्या हि भवितव्यम्। सम्भाक्तिं चैतद्, यद् विशेषलक्षणानवसायादात्मनेपदप्रयोगेणापशब्दत्वमिति। अन्यथा "बाधति स्कन्ध" इत्यादौ कवेः शब्दवृत्तवर्णानभिज्ञत्वप्रसङ्गः। गुणीकाराय प्रयास इति यत्रत्यः परिहारः। श्लोकस्य (सोष्मवान्? सौष्ठवाय) पाठं परिवर्तयति—**तस्मादिति**। बन्धदार्ढ्याद् गुणान्तरलाभश्च।

**तथाम्नातमपीति**। यथाशास्त्रं लक्षणयोग इति भावः।

---

१. 'ति. सरप्र' क. घ. पाठः. २. 'तिस्ख' क. पाठः. ३. 'टम्। प्रतीतिता' ख. ग. पाठः. ४. 'व। विप्रतीतिता' घ. पाठः. ५. 'ति आचा' क. घ. पाठः. ६. 'वार्तान' ख. पाठः.

यथायं दारुणाचारः सर्वदैव[*] विभाव्यते ।

तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥

अत्र दैवतशब्दो 'दैवतानि पुंसि वा' इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते ।

असमर्थं यत् तदर्थं पठ्यते नच तत्र[†] तस्य शक्तिः । यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः ।

सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ॥

अत्र हन्तीति गमनार्थम् ।

---

सम्प्रदायप्रकाशिनी

**यथायमिति । सर्वदा क्रूराचारत्वाद्[1] दैवतपिशाचराक्षसेष्वन्यतमेन[2] नूनं गृहीतो[3] भवेदित्यर्थः ।**

**असमर्थमिति । तदर्थम् अभिमतार्थप्रतिपत्त्यर्थमित्यर्थः ।**

**तीर्थान्तरेष्विति[4] । सत्कृतं सुकृतम् । कस्यचिच्छ्रोत्रियस्य परोक्षश्लोकेऽत्र[5] सुरस्रोतस्विनीगमनमुत्प्रेक्ष्यते ।**

**गमनार्थमिति । गमनवचनतामभिमेत्य प्रयुक्तं हन्तीति पदं हिंसालक्षण एवार्थे समर्थम् ।**

साहित्यचूडामणिः

**यथेति** । यथातथयोर्ज्ञाप्यज्ञापकभावोऽर्थः । दैवत इति पुल्लिङ्गशब्दः कविभिर्न प्रयुक्तः ।

पुंस्त्वस्य शास्त्रसिद्धतां द्योतयितुं 'वृन्दारका दैवतानी'त्यादौ च यावदुपयुक्तं तावदुपादत्ते — **दैवतानीति** ।

सोऽर्थो[6] **यस्तदर्थम्** । पठ्यते धातुपारायणादौ । तत्र अर्थे । तस्य शक्तिर्वाचकत्वरूपा शक्तिः[7] । परीक्षया विना पाठविश्वासात् पदं न योज्यमिति यावत् ।

**हन्तीति** । 'हन हिंसागत्योरि'ति पाठः । हिंसायामेवास्य शक्तिः न गमने ।

---

१. 'दु' ख. ग. पाठः. २. 'मत्वेन' क. ख. घ. पाठः. ३. 'मत', ४. 'ष्वपीति' क. घ. पाठः. ५. 'त्र त्रिस्रोत' ग. पाठः. ६. 'समर्थः यस्य तत् तद', ७. 'क्तिपरीक्षयाद् वि' ग. पाठः.

निहतार्थं यदुभयार्थमप्रसिद्धे प्रयुक्तम् । यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिरभ्य चुम्बिता सहसा ॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते ।

अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो
रणाश्वमेधे पशुतामुपागताः ॥

अत्र पशुपदं कातरतामभिव्यनक्तीति अनुचितार्थम् ।

---

सम्प्रदायप्रकाशिनी

**निहतार्थमिति** । अप्रसिद्धो ह्यर्थः प्रसिद्धेन निहन्यते ।

**यावकरसेति** । अत्र साध्वसतरलेत्येतदपि रुधिरार्थमेव प्रसाधयति ।

**अथानुचितार्थं— तपस्विभिरिति** । सत्रिभिर्याज्ञिकैः । महावीराणां स्वर्गावाप्तिः सुलभेति तात्पर्यार्थः ।

साहित्यचूडामणिः

**उभयार्थमिति** । प्रसिद्धाप्रसिद्धार्थवत् ।

**उज्ज्वलीकृतत्वमरुणीकृतत्वम्** । **व्यवधीयत इति** । पादप्रहृते शिरसि रुधिरस्य सम्भावितत्वात् मतिविरोधश्च तदनुगुणा मुग्धा साध्वसतरलेति वाक्यच्छाया ।

**अनुचितेति** । प्रस्तुतचमत्कारभञ्जकत्वात् ।

**पशुपदमिति**। नहि कातर्ये सुगतिसिद्धिः । "रणे चाभिमुखो हत" इत्युक्तत्वात् ।

---

१. 'र्गप्राप्तिः' ख. ग. पाठः.

निरर्थकं पूरणमात्रप्रयोजनं च्वादिपदम् । यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि! ।
अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन ॥

अत्र हिशब्दः ।

अवाचकं यथा—

अवन्ध्यकोपस्य निहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः ॥

सम्प्रदायप्रकाशिनी

**निरर्थकमिति ।**

उत्फुल्लेति । अत्र हीत्यस्य न कुत्रचिदर्थवत्ता । गौरद्युते हीति, गौरि हीत्यादि प्रतिपदं योजनेऽपि नैरर्थक्यात् ।

अथावाचकम्—अवन्ध्यकोपस्येति । निहन्तुरापदाम् अवन्ध्यप्रसादस्य चेत्यर्थः । अमर्षशून्येनेति अवन्ध्यकोपतायाः प्रति-

साहित्यचूडामणिः

पूरणेति । न पुनर्द्योतनीयार्थोपक्षीणम् ।

हिशब्द इति । पादपूरणफलत्वात् । अवकरभूता(दि?) निपाताः शोकादीन् द्योतयन्ति वक्तृगतान् । त(त्रा ? त्र) द्योतनीयार्थावे(क्ष ? क्षा)या (अ)भावे(ति ?) निपाता न प्रयोज्या इति भावः । किञ्च प्रसिध्यत्विति प्रोपसर्गोऽवाचकः । भगवतीत्येकवचनेन सम्बोध्य युष्मत्प्रसादेनेति बहुवचनमप्यनुचितमित्यलमप्रासङ्गिकचिन्तया ।

अवन्ध्येति । शत्रुपक्षे फलपर्यन्तक्रोधस्य आपदां दौर्गत्यादीनां प्रतिकर्तुर्वर्णनीयस्य देहिनो मित्रादयः स्वयमेव वश्या भवन्ति । यस्मादमर्षशून्येन

१. रा, क, ख, घ, पाठः.

अत्र जन्तुपदमदातर्यर्थे विवक्षितम् । तत्र च नाभिधायकम् । यथावा —

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विश्लेषरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः कुशले सदैव विधुरो धाता नचेत् तत् कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥

सम्प्रदायप्रकाशिनी

**योगी, जन्तुनेति निहन्तुरापदामितीत्यस्य । यो ह्यपराधं दृष्ट्वाप्यमर्षशून्यस्तेन विद्विषापि न दरः भयं नास्ति । यस्तु जन्तुरदाता तेन जातहार्देनापि आदरो नास्तीत्यर्थः ।**

**हा धिक् सेति । तादृग्यामवतीमयः यस्यां यामवत्यां दृष्टा सा, तथाविधयामवतीमय इत्यर्थः । पूर्वोदाहरणे गुणद्वारापि जन्तुपदस्य**

साहित्यचूडामणिः

बन्ध्यकोपेन जन्तुना जननमात्रधर्मत्वादापत्प्रतिक्रियायामकुशलेनेति योजना । द्वयी हि पुंसां गतिर्जातहार्दः सुहृद्भूतः विपक्षभूतश्च । तयोरादिमेन नादरो नास्था द्वितीयेन तु न दरो न भीतिः । पञ्चम्यभावश्चिन्त्यः । तृतीयापि नौचित्यवती ।

**जन्तुपदमिति** । विपत्प्रतीकारस्य दातृत्वोपायकत्वात् । यथोक्तम् —

"अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।"

इति । केवलं विवक्षैवास्मिन् नच सामर्थ्यमित्याह — **तत्रेति** । नामिधायकम् अस(स्मि ? ङ्केति)तत्वादिति भावः । लक्षणीयत्वपक्षे नेयार्थत्वं वक्ष्यते ।

सङ्केताभावविषयतया किञ्चिद् भेदा(वु?यो)दाहरति — **हा धिगिति** । शशिमुख्यां दृष्टायामपि तदा तस्या रात्रेस्तामसीत्वम् अन्धकारितस्य च कथं दिनत्वमिति तादृश्या यामवत्या प्रकृतो जीवलोको दिनमित्यस्य प्रकाशमयमित्यत्रार्थे सङ्केताभावः । अविनाभावसम्भावनायाश्च कल्पनामात्रपरि-

१. 'च्छेदरु' ख. पाठः. २. 'वि' ख. ग. पाठः. ३. 'नू' क. पाठः. ४. 'ना' क. घ. पाठः. ५. 'स', ६. 'थास्या' घ. पाठः.

अत्र दिनमिति प्रकाशमयमित्यत्रार्थे अवाचकम् ।
यच्चोपसर्गसंसर्गादर्थान्तरगतं यथा —

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

अत्र दधदित्यत्रार्थे विदधदिति ।

त्रिधेति, व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात् । यथा —

---

सम्प्रदायप्रकाशिनी

नाभिमतार्थे संस्पर्श इत्यवाचकत्वम्, अत्र गुणद्वारा संस्पर्शोऽपीत्युदाहरणद्वयम् ।

अवाचकं प्रकारान्तरेणापि दर्शयति — यच्चोपसर्गेति[3] ।
जङ्घाकाण्डेति । निजेति देव्यपेक्षया, नतु दण्डपादापेक्षया ।
अत्र दधदित्यत्रेति । व्युपसृष्टो हि दधातिः करोत्यर्थः ।
अथ 'त्रिधाश्लीलमि'त्युक्तं त्रैविध्यं विभज्य दर्शयितुं प्रतीकमुपादत्ते — त्रिधेति[6] ॥

साहित्यचूडामणिः

कल्पितत्वात् । तर्ह्यस्य दिनं चेत् प्रकाशमयमिति यथा तामसीति प्रकृत्यंशे(न) रात्रेरप्रकाशमयत्वम् एवं दिनशब्देन प्रकाशबहुलत्वं निर्वाह्यम् । तच्च न शक्यं शक्त्यभावात् ।

यच्चेति । तदप्यवाचकम् ।

दण्डपादः ऋज्वायतोर्ध्वप्रसारितैः (दार्जवादि ?)…. । विपूर्वस्य दधातेः करोत्यर्थत्वाद् धारणं प्रत्यवाचकम् । तथा शोभामन्यदीयां करोति न स्वयं वहतीति स्यात् । किञ्च दण्डपादस्य समासोक्त्या कमलसाधर्म्यनिर्वाहस्यानौचित्यं, किं वार्थ्यं समासोक्त्यपेक्षायां च कथञ्चिद् रूपकस्यानुगुण्यं यत्रोरुनाल-

---

१. 'त्वर्थान्तरे वि' ख. पाठः. २. 'म् । प्र' ग. पाठः. ३. 'श्चो' क. ख. ग. घ. पाठः. ४. 'या । अ' ग. पाठः. ५. 'त्र' क. घ. पाठः. ६. 'त्वे' ख. पाठः. ७. 'ति । सा' ग. पाठः. ८. 'तत् आर्ज' घ. पाठः.

साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥

लीलातामरसाहतोऽन्यवनितानिश्शङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाथवा* नतिमृते तेनानिशं चुम्बिता ॥

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निस्सपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे कं[1] हरेदेष बर्हीं ॥

---

सम्प्रदायप्रकाशिनी

**व्रीडाव्यञ्जकत्वेनोदाहरति — साधनमिति ।** साधनशब्दः सेनाभिप्रायेण प्रयुक्तः पुंव्य[2]ञ्जनं[3] व्यनक्ति ।

**जुगुप्साद्योतकत्वेनो[4]दाहरति— लीलातामरसेति ।** भ्रान्त्या तदीयेन मौग्ध्येन । धूर्ततया स्वकीयया । उभयमपि नतिं विना चुम्बने हेतु[6]ः ।

**अमङ्गलद्योतकत्वेनाप्युदाहरति — मृदुपवनेति ।** कं हरेत् कं नाम प्रीणयेत् इत्यर्थः ।

साहित्यचूडामणिः

त्वादिविशेषणानामनौन्मुख्यं दोषभूयिष्ठत्वं च । एतदुपर्यपि तत्र तत्रोदाहरिष्यते ।

**साधनं** बलम् । अरालितां कुटिलिताम् ।

**निश्शङ्कदष्टेति ।** कृतमस्माकमस्य स्वभार्याकलहचिन्तयेति । इवेति । तथा नाटयन् । (भवत्विति वीप्सयासूया द्योत्यते । दृष्टमिति । सोल्लुण्ठं ?) ।

**कुसुमसनाथे ।** अन्यथा पिञ्छसादृश्यासिद्धिः ।

---

१. 'किं करोत्वेष' ख. पाठः. २. 'नं तु व्य' घ. पाठः. ३. 'क्ति । ली' ग. पाठः. ४. 'नाप्युदा' ख. पाठः. ५. 'म' क. घ. पाठः. ६. 'तुः । मृ' ग. पाठः. ७. 'न प्री' क. ख, 'नरं प्री' घ. पाठः.

एषु* साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः ।

सन्दिग्धं यथा —

आलिङ्गितस्तत्रभवान् †सम्पराये जयश्रिया ।

आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र वन्द्यां किं हठहृतमहिलायां किं वा नमस्यामिति[1] सन्देहः ।

---

सम्प्रदायप्रकाशिनी

उदाहरणत्रयेऽपि लक्ष्यांशं दर्शयति — एषु साधनेति[2] ।

अथ सन्दिग्धम् — आलिङ्गितस्तत्रेति ।

सन्देहं विविच्य दर्शयति—अत्र वन्द्यामिति । नमस्यां वन्दनीयाम् ।

साहित्यचूडामणिः

उदाहरणं व्याचष्टे — एष्विति । साधनशब्देन पुंव्यञ्जनप्रतीत्या व्रीडा । मुखमारुतप्रदाने पर्दनप्रतीत्या जुगुप्सा । विनाशादिति विश्लेषदशायां मरणानुस्मरणादमङ्गलातङ्कशङ्का । एतेन व्रीडादिवाचकत्वं कैमुत्येन परिहर्तव्यतया व्याख्यातम् । यथा —

यः खण्डेन्दुकिरीटकैटभजितोः काम[3]श्रियं कर्षति ।

पर्दते हदते स्तुत्य वमत्येष स्तनन्धयः ।

[4]मुहुः कौतुकिनी [5]पैत्यत्तगहा पुनर्वधूः (?) ।

पाहि विसमुत्तं वि [6]अण्ण कुमारटि एव चद्ध उदे ।

[7]बमैदं [8]तु खण्डि अनेनि [9]आखि ऊणसुम् [10]असव इमा आ (?)

इति ।

**वन्द्यां** बलात्कारपरिगृहीतायामङ्गनायां कृपां कुरु, किं कृत्वा, आशीःपरम्परां कर्णे कृत्वेति किं योजना, उत वन्द्यामभिवाद्यां नमस्यामाशीःपरम्परां कर्णे कृत्वा कृपां कुरु तदुचिते विषय इति सन्देहवस्तुवृत्त्या न सप्तमीसन्देहः अर्थद्वयेन बाधितत्वात् (?) । तस्मात् 'स एष हि महादेव' इत्यादि शुद्धमुदाहर्तव्यम् ।

---

१. 'ति । अ' ख. पाठः. २. 'ति । आ', ३. 'ट' ग. पाठः. ४. 'मुहुरुत्कौतुकिनीषु प' ग. पाठः. ५. 'पत्यगुहा', ६. 'बणं ज सुमारि ए पञ्उदे', ७. 'बं मेदं', ८. 'तुरखडि अ', ९. 'थणि आवि ऊ', १०. 'सु अस्सव इमा आचति' ख. पाठः.

---

* 'अन्न मा' इति. † 'माया' इति ग पुस्तकेपाठः

अप्रतीतं यत् केवले[1] शास्त्रे प्रसिद्धम् । यथा —

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत् कर्म बन्धनम् ॥

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः ।

ग्राम्यं केवले[2] लोके स्थितम् । यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥

अत्र कटिरिति ।

नेयार्थं 'काश्चिन्नैव त्वशक्तित' इति यन्निषिद्धं लाक्षणिकम् । यथा —

---

**सम्प्रदायप्रकाशिनी**

**अप्रतीतमिति** ।

**सम्यग्ज्ञानेति** । आशयः संस्कारः ।

**ग्राम्यमिति** । केवले लोके, नतु शास्त्रादौ ।

**राकाविभावरीति** । कटिरिति शास्त्रादौ न प्रसिद्धः ।

**नेयार्थमिति** । सर्वा एव ह्यरूढा लक्षणाः प्रयोजनादेव भवन्ति ।

**साहित्यचूडामणिः**

**सम्यगिति** । कञ्चित् पारदारिकं[3] माविनये नियुञ्जानस्य सुहृद इयमुक्तिः । समीहितेन ज्ञानमहाज्योतिषा खण्डित आशयो यस्य तस्य भावस्तत्ता तां जुषमाणस्य । सुपरिदृष्टोपायघटितत्वाद् दुरशङ्काङ्कुरगोचरीकारायोग्यस्येति यावत् । योगेऽपि "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इत्युक्तत्वात् ।

यथा केवलशास्त्रप्रसिद्धमप्रतीतं दोषः इत्थं केवललोकप्रसिद्धं **ग्राम्यमिति** ।

**कटिरिति** । नितम्बवाचिपदं ग्राम्यमव्युत्पन्नत्वाच्छास्त्रे ।

**नेयार्थमिति** । बुद्धिबलादाक्षेप्तव्यो नतु स्वारसिकलक्षणासन्धुक्षितोऽर्थो यस्य । 'निरूढा लक्षणा' इत्यादौ यत् सामर्थ्यवैकल्यान्निषिद्धम् ।

---

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि! चपेटापातनातिथिम् ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।

'अथ समासगतमेव दुष्टमि'ति सम्बन्धः । अन्यत् तु केवलं समासगतं च । क्लिष्टं य(थो ? तो ऽ)र्थप्रतिपत्तिर्व्यवहिता । यथा —

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल! तव चेष्टितम् ॥

अत्रात्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः ।

---

सम्प्रदायप्रकाशिनी

मुख्ये प्रयोगासामर्थ्यात् तु सर्वा एव निषिद्धा इत्यशक्तिकृतं लाक्षणिकं नेयार्थमुच्यते, अर्थस्योन्नेयत्वात् ।

शरत्कालेति । मुखं कर्तृ । चपेटः प्रसृतो हस्तः ।

अथ क्लिष्टादित्रयं समस्तत्वेनैव दुष्टम्, अन्यत् तु समस्तं व्यस्तं च । तत्र यतः पदार्थप्रतिपत्तिर्व्यवधीयते तत् क्लिष्टम् ।

अत्रिलोचनेति ।

क्लिष्टत्वं दर्शयति — अत्रात्रिलोचनेत्यादि ।

साहित्यचूडामणिः

शरदिति । त्वन्मुखं पूर्णचन्द्रमधःकरोतीति यावत् । चपेटस्य हस्तविशेषस्यापातनमर्पणं तत्रातिथिं पूर्वभोक्तारं करोति ।

अथशब्दः क्लिष्टादित्रयस्य समासगामित्वमवस्थापयति । एवकारं व्याचष्टे—अन्यत्त्विति । केवलमसमस्तम् । क्लिष्टमिति । अर्थप्रतीतिव्यवधानादृते कोऽन्यः क्लेशः ।

अत्रीति । तव चरित्रं कुमुदैः सदृशं शोभते ।

---

१. 'पेटनाति', २. 'पेटने', ३. 'ष्टं यथा' क. पाठः. ४. 'द्रु नि' ग. पाठः.

**अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् ।**

**यथा—**

**मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-**
**धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।**
**कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां**
**दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः ॥**

**अत्र मिथ्यामाहिमत्वं नानुवाद्यम्, अपितु विधेयम् ।**

**यथा च —**

---

सम्प्रदायप्रकाशिनी

अविमृष्टविधेयांशं निर्वक्ति— **अविमृष्टः प्राधान्येनेत्यादि ।**

**मूर्ध्नामिति** । इयं रामा[1]वरुद्धलङ्कारक्षणप्रस्तावे दशकन्धरस्योक्तिः ।

**अत्र मिथ्यामहिमत्वमिति** । नहि मिथ्यामहिमत्वं पूर्वसिद्धम्, अपितु सत्यमहिमशालिनामेव मूर्ध्नां सम्प्रति मिथ्यामहिमत्वं जायत इति विधेयमेव सदनुवाद्यत्वेनोपनिबद्धमिति मिथ्यामहिम्नामिति पदमविमृष्टविधेयांशम् ।

साहित्यचूडामणिः

विधेयाविमर्शं दोषमुन्मेषयति—(**अविमृष्ट इति** ।) द्विविधा हि वाक्ये प्रमेयपरिकल्पना विधेयश्चानुवाद्यश्चेति । तयोरनुवाद्याद् विधेयस्य प्राधान्येन विमर्शः कर्तव्यः । यदकरणं दोषः ।

**मूर्ध्नामिति** ।

**मिथ्यामहिमत्वं** नानुवाद्यम् अपितु विधेयम् । तथाच समासानुपपत्तिरित्याकूतम् । समासे च विधेयो भागो न विमृष्ट इति तस्यानुवाद्यत्वमात्रं परिशिष्येत । तथाच लङ्कोपरोधादेः प्रागपि शिरसां मिथ्यामहिमत्वप्रसङ्गः । तच्च वाक्यादेवावसीयते, न वृत्तेः, तयोः साध्यसिद्धविषयभिन्नार्थ[3]कत्वात् । तदिदं विधेयाविमर्शस्य रहस्यम् । भविष्यति चैतद् वाक्यदोषोन्मेषे "द्विविधो विधेयाविमर्शः पदवाक्यवृत्तिभेदादि"ति । नेदं नेदीयः ।

---

१. 'र' क. पाठः. २. 'मह' ख. पाठः. ३. 'र्थत्वा' घ. पाठः.

स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण
द्वितीयमौर्वीमिव कार्मुकस्य ॥

अत्र 'मौर्वीं द्वितीयामि'ति द्वितीयत्व*मात्रमुत्प्रेक्ष्यम् ।

यथा च —

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥

---

सम्प्रदायप्रकाशिनी

**समासान्तरगतत्वेनापि** दर्शयति — **स्रस्तां नितम्बादिति** ।

**अत्र 'मौर्वीं द्वितीयामि'ति** पाठं विपर्यासयता प्रतीतौ तारतम्यं दर्शितम् । उत्प्रेक्ष्यमिति ण्यता विधेयत्वं द्योतितम् ।

अत्रैव समासे प्रत्ययान्तरव्यवधानादप्यविमृष्टतां विधेयस्य दर्शयति — **वपुर्विरूपाक्षमिति** ।

साहित्यचूडामणिः

अर्थशिक्षायै भूय उदाहरति — **स्रस्तामिति** । न्यासीकृतां निक्षिप्ताम् ।

**द्वितीयत्वमात्रमिति** । प्राचीनाया मौर्व्या निक्षेप्तव्यत्वानौचित्यात् । ततश्च समासो नोपपद्यते । उत्तरपदार्थप्रधानो हि तत्पुरुषः । पूर्वपदार्थे च द्वितीयत्वमात्रे प्राधान्यौचित्यमिति समासे किमुक्तं स्यात् । ततश्च 'मौर्वीं द्वितीयामि'ति पठनीयम् । उपजात्यनुप्रवेशेन न वृत्तभङ्गशङ्का ।

**वपुरिति** ।

---

१. 'र्वीमि' क. ग. घ. पाठः. २. 'सतया प्र' क. घ. पाठः. ३. 'सायता' क. घ., 'ति वि' ग. पाठः. ४. 'षतायां द' ख. ग. पाठः.

---

* 'यात्व' इति मूलकोशपाठः.

अत्र 'अलक्षिता जनिरि'ति वाच्यम् । यथा च—

आनन्दसिन्धुरतिचापलशालिचित्त-
सन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता
तान्तिं तनोति तव सम्प्रति धिग्धिगस्मान् ॥

---

सम्प्रदायप्रकाशिनी

अत्र 'अलक्ष्यजन्मे'[1]त्युक्ते[2]ऽपि विधेयावमर्शः । 'अलक्ष्यजन्मते'ति तला प्रत्युत विधेयत्वं[3] तिरोधीयते । न केवलं तलो विधेयाविमर्शहेतुता, अपितु प्रक्रमभेदहेतुत्वं चेत्यभिप्रेत्य तलं परित्यज्यैव पाठमन्यथा दर्शयति— अलक्षिता जनिरिति वाच्यमिति ।

नञ्समासगतत्वेनापि दर्शयति—आनन्दसिन्धुरिति । अत्र 'न मुक्ते'ति निषेधस्य विधेयत्वात् 'अमुक्ते'ति[4] न पर्युदासो[5] न्याय्यः । पर्युदासे हि विधेरेव प्राधान्यं, न निषेधस्य । यदाह—

साहित्यचूडामणिः

''कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मृष्टान्नमितरे जनाः ॥''

इति नीत्या वरगुणेषु गवेषणीयेष्वपि साकल्यं तावदास्तां नैकदेशिकोऽपि लाभोऽस्यास्तीत्युक्तं व्यस्तमपीति । यथा वपुरित्यनूद्य विरूपाक्षत्वं पृथग् विहितं व्यासेन, एवं जन्मेत्यनूद्य विधे(यमशं ? येंऽशे) विग्रह(व्यं ? व्ये) समासो नाङ्गीकार्य इति 'अलक्षिता जनिरि'त्यर्थशिक्षार्थः पाठः, कालिदासपरिचिताया बन्धच्छायाया (अ)विघटमानत्वात् । किन्तु 'न लक्षिता जनिरि'ति वाच्यं, नञ्समासेऽपि विधेयाविमर्शस्यानन्तरमेवाभिधीयमानत्वात् ।

तत्रैव दर्शयति—आनन्देति । अन्यस्त्रीविरहविह्वलं नायकं काचिदसूयाशालिन्युपालभते ।

---

१. 'न्मतेत्यु' ग. पाठः. २. 'क्ते वि' क. घ. पाठः . ३. 'धेराधित्वं', ४. 'तिपं', ५. 'सो नाय्यः' क. घ. पाठः.

अत्र 'न मुक्ते'ति निषेधो विधेयः, यथा—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥

इत्यत्र । नत्वमुक्ततानुवादेनान्यदत्र किञ्चिद् विहितं, यथा—

सम्प्रदायप्रकाशिनी

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"

इति । प्रसज्यप्रतिषेधे तु निषेधस्यैव प्राधान्यं, न विधेः । यदाह—

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥"

इति ।

तदेतदभिप्रेत्याह—अत्र 'न मुक्त'ति ।

उक्तमर्थं प्रत्युदाहरणेन द्रढयति—नवजलधर इति ।

यद्यमुक्ततानुवादेन विधेयान्तरं स्यात्, तदा न दोषः । प्रकृते तदपि नास्तीत्याह—नत्वमुक्ततानुवादेनेत्यादि ।

साहित्यचूडामणिः

नञ्समासवैशसव्युदासेन निषेधो विधातव्यतया विमृष्टव्य इत्याह—न मुक्तेति । यथेति । व्यासौचित्यं दृष्टान्तेन दृश्यत इति यावत् ।

न दृप्तनिशाचर इत्यादौ यथा व्यासलक्षणं सौभाग्यं तद्वदत्रापि कार्यम् ।

नन्वमुक्तेत्यनुवाद एवास्तु का हानिरित्यत्राह—नत्विति । न खल्वमुक्तत्वं तस्यानुभाष्य किञ्चिदन्यद् विधीयते । तत्रापि समासौचित्यं दृष्टान्तेन दृश्यत इत्याह—यथेति ।

१ '—' ख. पाठः. २. 'ना समासे स', ३. 'मृष्ट इ' घ. पाठः.

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥

इत्यत्रात्रस्ततानुवादेनात्मनो गोपनादि ।

---

सम्प्रदायप्रकाशिनी

एतदपि प्रत्युदाहरणेन द्रढयति — जुगोपेति । आत्मनो गोपनादीति । विहितमिति शेषः ।

साहित्यचूडामणिः

जुगोपेति । आत्मरक्षापुरस्सरं त्रिवर्गप्रतिपत्तिमन्वभूदिति यावत् । यथा ह्यत्रस्त इत्यनुवादपूर्वकमात्मनो गोपनं विहितम्, एवममुक्ततानुवादेन न कस्यचिदप्यर्थस्यात्र विधानम् । किन्त्वानन्दसिन्धुत्वाद्यनुवादेनामुक्तत्वस्यैव वाक्यार्थे विधेयत्वात् । अन्यथा तद्वृत्तैनरपेक्ष्येण पूर्णवाक्यतापत्तेः । अयं भावः— अमुक्तेति नञा सह समासो नोपपन्नः, तस्य पर्युदासैकविषयत्वाद्, यथा "जुगोपात्मानमत्रस्त" इति । प्रसज्यप्रतिषेधानुकूलश्चायं प्रयोगः यत्र समासानौचित्यं, यथा "नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचर" इति । पर्युदासस्य हि स विषयः यत्र विधौ प्राधान्यं न प्रतिषेधे । तदुक्तं —

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"

इति । तद्विपरीतः प्रसज्यप्रतिषेधः । तच्चोक्तम् —

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥"

इति । एवञ्च न मुक्तेति प्रसज्यप्रतिषेधोचिते प्रयोगे यदमुक्तेति पर्युदसनं तत् खलु कवेरुक्तेरकौशलमुल्लिङ्गयति असामञ्जस्यप्रसङ्गादर्थस्य, यदत्र मुक्तताप्रतिषेधो विवक्षितः नत्वमुक्ताविधिः । तदुक्तं —

"नञर्थस्य[३] विधेयत्वे निषेधस्य विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ॥"

इति । समासे सति तस्य विध्यनुवादभावस्यास्तङ्गमनप्रसङ्गः । तदुक्तं —

"क्रियाकर्त्रंशभागर्थो वाक्येऽपोह्यो नञा यदि ।
क्रियांश एवापोह्यः स्यान्नेष्टवानितिवत् तदा ॥

---

१. 'त्मगो' क. पाठः. २. 'स्तानु' क. ख. ग. पाठः. ३. 'ञ्त', ४. 'ध्य' घ. पाठः.

विरुद्धमतिकृद् यथा —

सुधाकरकराकारविशारदविचेष्टितः ।

अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥

अत्र कार्यं विना मित्रमिति विवक्षितम् । अकार्येषु मित्रमिति तु प्रतीतिः । यथा वा—

चिरकालपरिप्राप्तिलोचनानन्ददायिनः ।

कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥

अत्र कण्ठग्रहमिति वाच्यम् । तथा —

सम्प्रदायप्रकाशिनी

अथ विरुद्धमतिकृत् — सुधाकरकरेति ।

विरुद्धमतिकृत्त्वं दर्शयति — अत्र कार्यं[1] विनेत्यादि । कार्यं विना मित्रम् अकार्येषु मित्रं चेति समासभेदादिह विरोधः ।

समासैक्येऽपि दर्शयति — चिरकालेति । 'गलग्रहे'त्येतत् कण्ठालिङ्गने विवक्षितं रोगविशेषे धियं जनयतीत्यतः 'कण्ठग्रहे'ति पठनीयम् ।

साहित्यचूडामणिः

अकुम्भकार इतिवद् वृत्तौ तु स्याद् विपर्ययः ।"

इति । कर्तृग्रहणं कर्मणोऽप्युपलक्षणमित्याकूतम् ।

"प्रसज्यप्रतिषेद्धव्यं विषयं विग्रहोचितम् ।

समस्य पर्युदस्यन्तमव्युत्पन्नं विदुः कथम् ॥"

इति सङ्ग्रहश्लोकः ।

विरुद्धेति ।

कार्यं प्रयोजनं विना मित्रमकृत्रिमसुहृदित्यभिधातुमिच्छा अकार्येषु अन्याय्येषु कर्मसु मित्रमिति विरुद्धां बुद्धिमुत्पादयति । अयमार्थो मतिविशेषः ।

शाब्दमप्याह — चिरकालेति । गलग्रहो रोगविशेषः ।

कण्ठग्रहमालिङ्गनम् । अपर्यनुयोज्या हि शब्दशक्तिः ।

१. 'र्थः । क' ग. पाठः.

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद् भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद् विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे* प्रतीतिं करोति । तथा —

सम्प्रदायप्रकाशिनी

अवान्तरप्रत्ययमुखतोऽपि विरुद्धमतिकृत्त्वं[1] दर्शयितुमुदाहरति— **न त्रस्तमिति** । भूतकरुणासन्तानः[2] प्राणिषु कृपाया अविच्छिन्नप्रसरता । व्यारुजता दलयता । विदलितशङ्करशरासनं दाशरथिं निशम्य कुपितस्य भार्गवस्योक्तिरेषा ।

**पत्यन्तरे इति** । भवस्य स्त्रीत्यस्मिन्नर्थे अनुशासनात् पतिशब्दात् पत्यन्तरप्रतीतिः । ननु भवान्याः पतिरित्युक्तेऽप्ययमेव दोष इति कथं 'समासगतमेवे'त्युक्तम् । सत्यमेतत् । किन्तु व्यासे वाक्यदोष एव स्याद् नतु पददोषः । अत्र[3] पदं यदि दुष्टं स्यात्, तदा समासगतमेवेति[4] नियमः । एवं क्लिष्टे । अविमृष्टविधेये तु व्यासे दुष्टमेव न भवतीति[5] नियमः । ननु तर्हि 'न्यक्कारो ह्ययमेवे'त्यादौ कथं व्यासेऽप्यविमृष्टविधेयांशता[6] । प्रकारान्तरेणेति ब्रूमः । नहि 'न्यक्कारो ह्ययमेवे'त्यादौ समासव्यासनिबन्धनो विधेयाविमर्शः, अपितु[7] पाठापेक्षया विध्युद्देश्यविपर्यासनिबन्धन इति । सर्वदा हि[8]शिरस्कतया विधिप्रतिबन्धात् । यदाहुः— 'यद्यादयो विधिप्रतिबन्धका' इति ।

साहित्यचूडामणिः

**न त्रस्तमिति** । भवस्य पत्नी भवानी तस्याः पतिरित्युक्तः स एव भवो न भवितुमर्हति वैयर्थ्यप्रसङ्गात् । भवानीशब्दस्य गौर्यादिपर्यायत्वेऽपि भवस्य पत्नीति शब्दस्वरूपतात्पर्यं परिहीयेत 'पुंयोगादाख्यायाम्' (४ - १ - ४८) इत्युक्तत्वात् ।

---

१. 'णिनि कृ' ख., 'णिकृ' ग. पाठः. २. 'अवद' ख. पाठः. ३. 'तः' क. ख. घ. पाठः. ४. 'वेत्यादौ कथं व्यासेऽप्यविमृष्टविधेयांशादौ व्या' ख. ग. पाठः. ५. 'च्चेति' ख., 'वेति' क. घ. पाठः. ६. 'से वाक्यदोष एव स्यादवि', ७. 'तु हि' ग. पाठः. ८. 'श' ख. पाठः.

---

* 'रुद्र' इति मूलकोशपाठः.

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः।
निकटे निरहङ्कारः पायाद् वः सोऽम्बिकारमणः॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति।

श्रुतिकटु समासगतं यथा—

सा दूरे च सुधासान्द्रतरङ्गितविलोचना।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः॥

---

सम्प्रदायप्रकाशिनी

क्वचिद् वाच्यमुखान्मतिविरोधाविर्भाव इत्याह— **गोरपीति**। अत्र गोरपीति सोऽपीति च अपिशब्दाभ्यामघटनीयघटनादतर्क्यमहिमत्वम्।

दोषत्रयस्य समासगतत्वनियमानुशासनात् तदितरस्य कामचार आसूचित इति श्रुतिकटुत्वादि समासगतत्वेनापि दिङ्मात्रतो दर्शयति — **श्रुतिकटु समासगतं यथेति**।

**सा दूर इति**। नह्यत्र बर्हीत्यादौ समास इवं व्यासेऽपि श्रुतिकटुत्वम्।

साहित्यचूडामणिः

**गोरपीति**। बलीवर्दस्यापि सतः। स इति प्रसिद्धौ। यथा किल—

"संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यैव स जातिमात्रनियतो[3] हेवाकलेशः किल।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी॥"

इति।

**विरुद्धामिति**। अम्बिकाशब्दस्य वेदभाषयोः स्वसृजननीवाचकत्वात्।

अन्यत्तु केवलं समासगतं चेति यदुक्तं तत्र कैवल्येनोदाहारि। समासेनोदाह्रियते — श्रुतिकटु समासगतं यथेति। मयूरकेकानुकूल इत्यर्थे बर्हिनिर्ह्रादनार्ह इत्युक्तत्वाद्।

---

१. 'वाक्यविरोधान्म', २. 'वतया द्विधा प्रदर्श्य त एवैते वाक्ये व्या (?)' क. घ. पाठः. ३. 'विहितो' घ. पाठः.

**एवमन्यदपि ज्ञेयम् ॥ २, ३ ॥**

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥४॥**

---

सम्प्रदायप्रकाशिनी

अनया दिशा दोषान्तरमपि समासगतत्वेन स्वयमुन्नेयमित्याह— **एवमन्यदपीति** ॥ २, ३ ॥

इत्थं पददोषान् यथायोगं व्याससमासविषयतया द्विधा प्रदर्श्य त एवैते वाक्ये पदांशे च यथायोगं संभवन्तीत्याह— **अपास्य च्युतेत्यादि** । नहि वाक्यमेव च्युतसंस्कृतित्वेनासमर्थत्वेन नैरर्थक्येन वा सम्भवति । वाक्यस्यैव च्युतसंस्कृतित्वे वाचकशब्दात्मकत्वमेवं न स्यात् । असमर्थत्वे तु सत्यपि वाचकत्वे न तदभिव्यक्तिः । निरर्थत्वे पुनर्वाचकत्वाभिव्यक्तावप्युन्मत्तोक्तिप्रायतैवेति त्रिधापि काव्यतैव न

साहित्यचूडामणिः

**एवमन्यदपीति** । तत्र च्युतसंस्कृतिर्यथा—'अन्यकारकवैयर्थ्यमि'ति । 'अषष्ठ्यतृतीयास्थस्या—' (६-३-९९) इत्यादिना दुक्प्रसङ्गात् । अश्लीलं यथा— "तत्परस्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखमि"ति । अत्र प्रशस्तस्त्रीव्यञ्जनप्रतीतिरिति ॥ २, ३ ॥

एते च कतिपयव्यतिरेकेण वाक्येऽपि विद्यन्त इत्याह— **अपास्येति** । च्युतसंस्कारत्वं वाक्ये न सङ्गच्छते, पदद्वयस्य युगपदसाधुत्वासम्भवात् । सम्भवेऽपि ययोरन्योन्यमन्वयस्तत्र पदस्य दोष इति युक्तं वक्तुं स्यान्न वाक्यस्येति । एतेन यदुक्तं शब्दहीनसंज्ञया भोजेन—

"गाण्डीवी विकटशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः"

इत्यत्र हन्तेः स्वाङ्गकर्मकादात्मनेपदस्य व्यक्षवक्षस्सम्बन्धनिबन्धनत्वाद् वाक्यप्रयुक्तमसाधुत्वमिति, तत् प्रत्युक्तं, यतो युक्तिचिन्तायामाजघ्न इति पदस्यैवात्रा-

---

१. 'सूत्रे' क. घ. पाठः. २. 'या प्र' ख. पाठः. ३. 'वं', ४. 'त्वं स' क. घ, 'त्वेन स' ख. पाठः, ५. 'त्वेन तदनभि' क. ग. घ. पाठः, ६. 'तिः ॥' क. ख. पाठः,

केचन, न पुनः सर्वे। क्रमेणोदाहरणानि —

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनताप्सीत् सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च॥

स रातु वो दुश्च्यवनो भावुकानां परम्पराम्।
अनेडमूकताद्यैश्च द्यतु दोषैरसम्मतान्॥

अत्र दुश्च्यवन इन्द्रः। मूकबधिरः अनेडमूकः।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः।
अब्जरुचिभास्वरस्ते भातितरामवनिप! श्लोकः॥

सम्प्रदायप्रकाशिनी

स्यात्। अतो दोषत्रयमिदं वर्जयित्वा दोषान्तराणि[1] वाक्येऽपि सन्ति पदस्यांशे[2] तु यथासम्भवम्।

सोऽध्यैष्टेति। अत्र हि वाक्यमेव श्रुतिकटु।

स रातु व इति। रातु ददातु। भावुकानां कल्याणानाम्। द्यतु अवसादयतु।

अप्रयुक्ततां दर्शयितुं व्याचष्टे — दुश्च्यवन इन्द्र इत्यादि।

अथ निहतार्थं — सायकसहायेति।

साहित्यचूडामणिः

साधुत्वम्। असमर्थमपि पदमेव। यत् पुनर्वाक्यमन्वयवैयाकुल्यादसमर्थं तद्भवन्मतयोगादौ पर्यवस्यति। निरर्थकं च्वादिपदं पदतयैव दुष्टमिति स्पष्टम्।

सोऽध्यैष्टेति। क्रियाकारकव्यासत्वादयं वाक्यदोषः।

रातु ददातु। भावुकानां भद्राणाम्। द्यतु अवखण्डयतु। दुश्च्यवनादिशब्दानामिन्द्रादिपर्यायत्वेऽपि महाकविभिरुपेक्षितत्वादप्रयुक्तमेतद् वाक्यम्।

सायकमकरध्वजक्षमाब्जश्लोकाः शरमदनसहिष्णुत्वपद्मपद्यार्थतया प्रसिद्धाः खड्गादिपर्यायतया प्रयुक्ता इति निहतार्थाः।

१. 'ण्यपि वा', २ 'शे हि तु' क. घ. पाठः.

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशः-पर्यायाः शराद्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो! ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह* ॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्य-मानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थत्वम्[1] ।

प्राभ्रभ्राड् विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥

सम्प्रदायप्रकाशिनी

उभयार्थानां पदानामप्रसिद्धानर्थान्[2] प्रत्येकं, प्रसिद्धांस्तु प्रतीको-पादानेन दर्शयति — अत्र सायकादय इत्यादि ।

अथानुचितार्थं — कुविन्द[3] इति[4] । कुविन्दो भुवं लब्धवान् तन्तुवायश्च । पटयसि पटुं करोषि पटं करोषि च । गुणग्रामं शौर्यादि-गुणसार्थं सूत्रसंघातं च । नग्ना वन्दिनो दिगम्बराश्च । विगताच्छादनं निष्प्रतिबन्धम्[5] अपगतवसनं च[6] ॥

अथावाचकं — प्राभ्रेति । प्रकृष्टैरभ्रैर्भ्राजमानं विष्णुधाम व्योम

साहित्यचूडामणिः

कुविन्द इति । कुः पृथिवी तां लब्धवान् । गुणग्रामम् औदार्यादीनां गुणानां गणम् । पटयसि पटुं करोषि । नग्नाश्चारणाः । कुविन्दस्तन्तुवायः । गुणानां ग्रामं समूहम् । पटयसि पटं करोषि । नग्ना दिगम्बराः । सर्वाङ्गेति वराङ्गपर्यन्तम् । विगताच्छादनं विलसदङ्गं यथा भवति इत्येवमर्थं प्रतिपादयन् वर्ण्यमानस्य वैजात्यकार्पण्यादिप्रयुक्तमश्लाघ्यत्वमभिव्यनक्ति ।

प्राभ्रेति । सूर्यः पद्मानि विकासयतीति यावत् । प्राभ्रभ्राडिति प्रकृष्टे

१. 'र्थम् ।' क. पाठः. २. 'न् प्र' क. ग. पाठः. ३. 'टु' क. ख, 'टी' ग. पाठः. ४. 'षि । गु', ५. 'न्धनम्', ६. 'च । प्रा' ग. पाठः.

* 'व' इति मूलकोशपाठः.

अत्र भ्राभ्रभ्राड्विष्णुधामविषमाश्वनिद्रापर्णशब्दाः प्रकृष्टजलदगगनसप्ताश्वसङ्कोचपत्राणामवाचकाः ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥

अत्रोपसर्पणप्रहणनमोहनशब्दा व्रीडाव्यञ्जकत्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्तनम्[२] ॥

सम्प्रदायप्रकाशिनी

प्राप्य[३] विषमाश्वो रविः सहस्रपर्णानां[४] निद्रां पद्मानां सङ्कोचं पलायनपरायणां करोति अपसारयती[५]त्यवाचकता ।

अथाश्लील[६]त्रयं— भूपतेरिति । उपसर्पणं समीपावाप्तिः रतार्थमुपगतिश्च । कम्पना सेना कम्पवती च । वामलोचना प्रतिकूलदृष्टिः वनिता च । प्रहण[७]नं शस्त्रघातो वक्षस्ताडनादि च । मोहनं व्याकुलता सुरतं च । अत्र व्रीडाव्यञ्जकता ।

तेऽन्यैरिति । उत्सर्गः उच्छि[८]ष्टः कुत्सितवायुविसर्गश्च । अत्र जुगुप्साद्योतकत्वम् ।

साहित्यचूडामणिः

जलदे भ्राजत इत्यस्यावाचकत्वम् । पदशब्दार्थे धामपदम् । सप्तसङ्कोचशब्दवाच्ययोर्विषमनिद्राशब्दौ लाक्षणिकौ, यत्र नेयार्थता । पर्णशब्दो जीर्णपत्रे निरूढ इति सर्वेषामवाचकत्वम् ।

कम्पना सेना । उपसर्पन्ती विपक्षव्यूहमभियुञ्जाना । प्रहणनं खड्गादिप्रहारः । उपसर्पणं दम्पत्योः सम्भोगारम्भः, प्रहणनं च तत्रत्यं हस्तास्फालनादि, मोहनं भावप्राप्तिरिति व्रीडादायित्वम् ।

वान्तमश्नन्ति उत्सर्गं पुरीषं प्रवर्तनं मलोदीरणमिति जुगुप्सावाचकानि । प्रवर्तनमित्यत्र किञ्चिद् व्यञ्जकत्वसम्भावना । तस्मादिदं न शुद्धमुदाहरणम् ।

१. 'दायित्वा' ख. पाठः. २. 'ना' क. पाठः. ३. 'व्या' क. घ. पाठः. ४. 'नां पद्मानां नि' क. पाठः. ५. 'वसायय' ग., 'पासय' घ. पाठः. ६. 'लत्वत्र', ७, 'रणं शब्दघा' क. घ. पाठः. ८. 'च्छेषः कु' ख. ग. पाठः. ९. 'कत्वम्' ग. पाठः,

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतात्रमङ्गलार्थत्वम्[1] ।

सुरालयोल्लासपरः* प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विराजते ॥

†अत्र सुरादिशब्दाः किं देवसेनाशरविभूत्यर्थाः, किं मदिराद्यर्था इति सन्देहः ।

सम्प्रदायप्रकाशिनी

**पितृवसतिमिति[2]** । पितृवसतिः जनककुलं श्मशानं च । पावकान्वये[3] पावनकुले अग्निसंयोगे च । अत्रामङ्गलद्योतकता ।

**सुरालयेति** । सुरालयो देवकुलं पक्वर्णश्च[4] । मार्गणा बाणाः मार्गणं तत्तदर्थगवेषणं च । भूति(विभूति)र्भस्म[5] चेति सन्दिग्धम् ।

साहित्यचूडामणिः

**पितृभवनमिति** कस्याश्चन स्नुषाया उक्तिः । तातस्य भवनं व्रजामि । ..धनवंशे हृदयं यत्र निश्शेषितश्वश्रूपारतन्त्र्यादिक्लेशं भवतीति विवक्षिते पितृभवनं प्रेतभूमिः पावकान्वये चिताग्निसंस्पर्शे सत्यशेषितं निरवशेषीकृतं शोकशल्यं गृहकर्मादिदुःखग्रन्थिर्यस्येत्यमङ्गलार्थत्वमित्याह — **श्मशानादीति** ।

सुरादिशब्दाः सुरकम्पनमार्गणप्रभृतयः । **किं देवेति** । देवानां सुराणामालयस्योद्भावने तात्पर्यवान् अधिगतपूर्णसेनो यः सायकेष्वनुरक्त उज्ज्वलैश्वर्य इति किं योजना, किं वा मदिरागृहोल्लासपरः प्राप्तपूर्णचलनः अर्थार्जनव्यापृतः उज्ज्वलभस्मेति च सन्देहः ।

१. 'लत्वम्' क. पाठः. २. 'ति । पा' क. घ. पाठः. ३. 'ना' ग पाठः. ४. 'णकश्च' ग, 'णं च । मा' क. ख. पाठः. ५. 'स्मेति' ख. पाठः.

* 'कर' इति, † 'अत्र किं सुरादिशब्दा दे' इति च मूलकोशपाठः.

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिप्रियः प्राप्तौ यत्नः स फलितः सखे! ॥

अत्र अधिमात्रोपायादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

सम्प्रदायप्रकाशिनी

अथाप्रतीतं—तस्याधिमात्रेति। योगिनो ह्युपायभेदात्त्रिधा—मृदूपायो मध्योपायोऽधिमात्रोपाय इति यमनियमाद्युपायानां मन्दमध्यमप्रकृष्टतावशात् । त एते योगभूमिकाधिरोहणाभिनिवेशतारतम्यात् प्रत्येकं पुनस्त्रिधा—मृदूपायमृदुसंवेगो मृदूपायमध्यसंवेगो मृदूपायतीव्रसंवेग इति प्रक्रियया । नवस्वेतेषु योऽधिमात्रोपायतीव्रसंवेगस्तस्यासन्नतमा सिद्धिः । तदेतदभिप्रेत्योक्तम्—अधिमात्रोपायस्य तीव्रसंवेगताजुष इति । तस्य यत्नो योगाभिनिवेशविशेषः । कीदृशः, दृढभूमिप्रियः । तस्यैव यत्नस्य दीर्घकालनैरन्तर्यासेवनेन तपोब्रह्मचर्यविद्याश्रद्धाभिरुपबृंहणेन च व्युत्थानसंस्कारैर्द्रागित्येवानभिभूतविषया संस्कारवत्ता दृढभूमिः तत्प्रियः तदेकपरः । प्राप्तौ फलितः स्वरूपस्य साक्षात्सिद्धौ सफलोऽभूत् ।

साहित्यचूडामणिः

तस्येति कस्यचिन्नायकस्य नायिकया सह सङ्घटनार्थं मिथः सुहृदोरुक्तिः । अतिलोकयत्नस्य प्रबद्धवैराग्यवत्त्वसेवितुः सर्वात्मना यो यत्न उत्साहः स फलित इति । एतद् योगशास्त्रप्रसिद्धत्वादप्रतीतम् । तथाहि 'योगश्चित्तवृत्तिनिरोध' इति नीत्या शुभाशुभफलकरणवृत्त्यौ नियन्त्र(णा ? णया) पश्यति । 'तदा *द्रष्टे स्वरूपेऽवस्थानम्'(यो. सू. १. ३ ) इति स्थित्या कूटस्थशून्यसाक्षिचैतन्यमात्राबस्थानपरमार्थस्य पुरुषार्थस्य यो यत्नोऽभ्यासपर्याय उपायः तस्यातिमा(त्रं ? त्रत्वं) मृदुमध्यातिक्रान्तत्वम् । उक्तं हि 'मृदुमध्यातिमात्रत्वात् ततो विशेष' इति । संवेगः परमं वैराग्यं तस्य तीव्रत्वं सद्यःकार्यकारितया । यदाहुः—

१. 'गि' क. पाठः. २. 'ति', ३., ४. 'भ्यु' क. घ. पाठः. ५. 'तत ए' क. ख. घ. पाठः. ६. 'ध्यमतीव्रसं' क. घ. पाठः. ७. 'ति क्रि' ग. पाठः. ८. 'क्रिया', ९. 'रः यतः प्रा', १०. 'तं' क. घ. पाठः. ११. 'स्यपदसे' ग. पाठः. १२. 'लोक' घ. पाठः १३. 'त्त्यादिनि' ख. पाठः.

* 'द्रष्टुः' इति मुद्रितपुस्तकपाठः.

ताम्बूलभृतगल्लोऽयं तल्लं जल्पति मानुषः[1] ।
करोति खादनं पानं सदैव तु यथा तथा ॥

अत्र गल्लादयः शब्दा ग्राम्याः ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रयुद्धं वेदय[2] साम्प्रतम् ॥

अत्राम्बररत्नपादैः हततमाः[3] अचला भूः कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता ।

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशाबाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥

सम्प्रदायप्रकाशिनी

ताम्बूलेति[4] । तल्लं शोभनमित्यर्थः । इदं ग्राम्यम् ।

वस्त्रवैदूर्येति[5] । वस्त्रवैदूर्यमित्यम्बररत्नं तेन चार्क इति लक्षितलक्षणा । एवं चरणा इति पादास्तैः[6] अंशवः । सत्त्वरजोभ्यां परं तमः अन्तःकरणधर्मः तेन तिमिरम् । निष्कम्पेत्यचला ततो भूः । युद्धमिति द्वन्द्वाख्यो युद्धविशेषः तेन द्विसंख्या[7] । तेन नेयार्थमिदम् ।

अथ धम्मिल्लस्येति क्लिष्टम्[8] ।

साहित्यचूडामणिः

'तीव्रसंवेगो नामासन्न' इति । दीर्घकालनैरन्तर्यात् सद्भिरासेवितो दृढभूमिरिति ।

गल्लादयः शब्दाः केवललोकोपलालितत्वाद् ग्राम्याः ।

वस्त्रेति । वस्त्रेणाम्बरं लक्ष्यते । एकार्थवाचकत्वं सम्बन्धः । वैदूर्येण तत्सामान्यं रत्नं सम्भूयादित्यः तस्य चरणाः पादाः किरणाः । सत्त्वरजसोः परो गुणस्तमः तत् क्षतं यस्याः । निष्कम्पा अचला भूः । रचिता कृता । युद्धं युगलम् । वेदनं बोधना विकासमिति ।

धम्मिल्लस्येति । पूर्वमविद्यमाना बन्धस्य ग्रथनस्य व्युत्पत्तिश्चातुर्यं यस्य ।

१. 'नवः ख. पाठः. २. 'बोधय' क पाठः. ३. 'माः अचला भूः' ख. पाठः. ४. 'भ', '५. 'र्यमिति' क. ग. घ. पाठः. ६. 'स्तैनांश' क. घ., 'ते अंश' ग. पाठः. ७. 'ख्या । ने' ग. पाठः. ८. 'ष्टम् । न्य' ख. ग. पाठः.

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसभटाञ् जीवत्यहो रावणः ।
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

सम्प्रदायप्रकाशिनी

अथाविमृष्टविधेयांशं—न्यक्कारो ह्ययमिति । अत्र[1] हि 'धर्मिणमुद्दिश्य धर्मो विधीयत' इति नीत्या न्यक्कारलक्ष(णे ? णो) धर्मः 'अयमेव हि न्यक्कार' इति धर्मिसमनन्तरमेवोपादनमर्हति, विधेयत्वात् । न्यक्कारो विधेयः । स तु हिशिरस्कतया प्रागुपात्त इत्युद्देश्यधियं जनयति । तथा दोष्णामुच्छूनत्वमात्रमनुवाद्यं, न वृथात्वविशेषितम् । तस्मादविमृष्टविधेयांशता ।

साहित्यचूडामणिः

क्लिष्टतां स्पष्टयितुं कविविवक्षितमन्वयमाह—धम्मिल्लस्येत्यादिना । एवं सम्बन्धे यथानिर्दिष्टस्य वाक्यस्य क्लिष्टत्वम् । अत्र चैतत् प्रतीतिमात्रं व्याकुलयति । क्वचित् पुनरर्थानौचित्यमुत्थापयति । यथा—

"तव कण्ठासृजा सिक्ता करवाललता द्विषाम् ।
प्रसूते समरारण्ये यशःकुसुमसम्पदम् ॥"

इति । अत्र युष्मदर्थस्य लडर्थस्य च पौर्वापर्यविपर्ययो न्याय्यः । तदुक्तं—

"पदानामभिसम्बन्धस्यान्यथाभावमात्रतः ।
यत्र नेष्टा प्रतीतिः स्याद् रचनां तां परित्यजेत् ॥"

इति ।

धिग्धिगिति । प्रबोधितं प्रबोधनं तद्वता तत्कर्मभूतेनेति मत्वन्तो निर्देशः । अयमेवेत्यनुभूयमानमरातिसद्भावमनूद्य तस्य न्यक्कारता विधेया । तद्विपरीता च वाक्यवृत्तिरासीदिति विधेयाविमर्शः । तदुक्तं—

१. 'वि' क. पाठः. २. 'त्र न्यक्कारो' ख. ग. पाठः. ३. 'दाहृत इ' ग. पाठः.

अत्रायमेव न्यक्कार इति वाच्यम् । उच्छूनत्वमात्रं चानुवाद्यं, न वृथात्वविशेषितम् । अत्र *तु शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो, न वाक्यार्थस्य । यथा वा—

अपाङ्गसंसङ्गि[1] तरङ्गितं दृशो-
र्भ्रुवोररालान्तविलासि वेल्लनम् ।
विसारिरोमाञ्चनकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे! †समागतः ॥

**सम्प्रदायप्रकाशिनी**

नन्वर्थपर्यालोचनायत्तो विध्युद्देश्यभाव इति कथमयं वाक्यदोष इत्यत आह—अत्र[2] तु शब्दरचनेत्यादि[3] ।

अथ प्रकारान्तरेणापि विधेयाविमर्शं दर्शयितुं यत्तत्प्रघट्टकमारभते—अपाङ्गसंसङ्गीति । अत्र तनोति यः असौ समागत इत्यन्वयः ।

साहित्यचूडामणिः

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् ।
नह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति ॥"

इति । अवयवविपर्यासलक्षणमप्राप्तकालमिदं निग्रहस्थानमिति नैयायिकाः । नियमकथायामेतन्निग्रहस्थानं न सर्वदेति चेत् । सत्यं[6] । मत्विति (?) स्थिता हि[7] निर्वा(हा? ह्या) काव्यगुर्म्फ[8]नेति कविसमयः ।

प्रसङ्गात् पदगतमप्याह—उच्छूनत्वमात्रमिति । मिथ्यामहिमत्ववत् । ननु वाक्यार्थस्य दोषोऽयं न वाक्यस्येत्यत्राह—अत्र चेति । शब्दरचनाया एव वैपरीत्यम् अर्थस्य तादवस्थ्यात् ।

तद् व्यक्तिविवेकरीत्या भूय उदाहरति—अपाङ्गेति । तरङ्गितं तरङ्गणम् । रोमाञ्चनं रोमाञ्चकरणम् ।

१. 'गिं' क. पाठः. २. 'त्र श' क. घ. पाठः. ३. 'दि । प्र', ४. 'करणान्तरे' ख. ग. पाठः. ५. 'त' क. घ. पाठः. ६. 'त्यं त्विता निर्वहा', ७. 'पि', ८. 'म्फे', ९. 'या' ख. पाठः.

* 'च' इति, † 'तवाग' इति च मूलकोशपाठः.

अत्र 'योऽसावि'ति पदद्वयमनुवाद्यविधेयार्थतया विवक्षितमनुवाद्यमात्रप्रतीतिकृत् । तथाहि — प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते । क्रमेणोदाहरणं —

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥

सम्प्रदायप्रकाशिनी

विधेयाविमर्शमुद्भावयति — अत्र योऽसावितीति । अनुवाद्यमात्रेति[2] । करोति योऽसावित्यतो हि पूर्ववाक्यस्यैव पारिपूर्ण्यं प्रतीयते । आगत इत्युत्तरवाक्यं तु तच्छब्दसव्यपेक्षमेव । अत इदमविमृष्टविधेयांशम् । ननु यत्तदोर्नित्य[3]मभिसम्बन्धात् तच्छब्दोपादानमन्तरेणापि पारिपूर्ण्यमेवेत्याशङ्क्य विषयविशेष एवान्यतरानुपादाने पारिपूर्ण्यं नतु प्रकृतोदाहरण इति दर्शयितुं तच्छब्दस्य यच्छब्दोपादाननैरपेक्ष्यमुपदर्शयति तावत् — तथाहि प्रक्रान्तप्रसिद्धेत्यादि । प्रक्रान्तार्थविषयः प्रसिद्धार्थविषयोऽनुभूतार्थविषयश्च तच्छब्दो[4] यच्छब्दोपादाननैरपेक्ष्येणैव पारिपूर्ण्यं लभते ।

कातर्यं केवलेत्यत्र स इति प्रक्रान्तराजविषयस्तच्छब्दो यच्छब्दोपादाननिरपेक्षः ।

साहित्यचूडामणिः

पदद्वयमिति । दृशोः तरङ्गितादिकं यस्तनोति असावागत इति यद्वृत्तमनुवाद्यार्थमदोवृत्तं च विधेयार्थमिति कविविवक्षा । तदुभयं सम्भूयानुवाद्यमात्रस्य प्रतीतिं करोति । प्रस्तुतशिक्षायै यत्तदादिकं निस्तुषयितुमाह — तथाहीति । प्रक्रान्तः प्रकृतः, प्रसिद्धः प्रख्यातः, अनुभूतः स्वानुभवैकगोचरः । एवं त्रिधार्थविषयस्तच्छब्दो यत्तदोर्नित्यसम्बन्धापवादेन यच्छब्दोपादानं नापेक्षते ।

कातर्यमिति । स इति प्रकृतोऽतिथिर्नाम राजा । नात्र यद्वृत्तोपादानापेक्षा ।

१. 'यत' क. पाठः. २. 'त्रे विधेयं क' ग. पाठः. ३. 'त्याभि' ख. ग. पाठः. ४. 'ब्दोऽयं य' क. घ. पाठः.

इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि ॥

यच्छब्दस्तूत्तर*वाक्यगतत्वेनोपात्तः सामर्थ्यात् पूर्व-†वाक्यगतस्य तच्छब्दस्योपादानं नापेक्षते । यथा—

सम्प्रदायप्रकाशिनी

**इयं गतं सम्प्रति शोचनीयताम्** इत्यत्र प्रसिद्धार्थविषयः।

**उत्कम्पिनी भयेति** । धूमान्धितेन दग्धासि । स एव यदि[2] स्वधूमान्धो न भवेत्, तदा त्वां त्रिजगदेकरत्नभूतां न दहेदित्याशयः। अत्र **ते लोचने** इत्यनुभूतार्थविषयः ।

इत्थं तदो विषयत्रये यदुपादाननैरपेक्ष्यं प्रदर्श्य यदस्तु तदुपा-दाननैरपेक्ष्यमेकत्रैवेति दर्शयति — **यच्छब्दस्तूत्तरेत्यादि** । साम-

साहित्यचूडामणिः

**कला च सेति** शशिकलायाः प्रसिद्धत्वान्न यदपेक्षा ।

**उत्कम्पिनीति** । वासवदत्तादाहाकर्णनप्रवृद्धशोकस्य वत्सराजस्येय-मुक्तिः । ते सातिशयविभ्रमायतने अपि विधुरे लोचने कान्दिशीकतया कस्त्राता कात्रेति निर्लक्षं क्षिपन्ती । अत्र तद्वृत्तव्यङ्ग्यलोचनगोचराणां वाचामगोचराणां गुणानां स्मरणं रसस्यासाधारणं निबन्धनम् । एवं 'तद्गेहं नतभित्ती'त्यादावपि द्रष्टव्यम् ।

एवं तदो यदनपेक्षामुक्त्वा यदोऽपि तदनपेक्षामाह—**यच्छब्दस्त्विति** । **उत्तरेति** । पूर्ववाक्यार्थगतस्य यद्वृत्तस्य तद्वृत्तापेक्षायाः साधयिष्यमाणत्वात् ।

१. 'न्वि' क. पाठः. २. 'दि धू', ३. 'व द' ख. ग. पाठः. ४. 'स्य', ५. 'ण' ख. पाठः.

* † 'वाक्यार्थग' इति मूलकोशपाठः.

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः। यथा ह्यत्रैव श्लोके आद्यद्वितीयपादयोर्व्यत्यासे। द्वयोरुपादाने

सम्प्रदायप्रकाशिनी

थ्यात् शब्दशक्तेरिति शेषः। पूर्ववाक्यगतस्येति । पूर्ववाक्यगतत्वेनोपादानं[2] नापेक्षत इत्यर्थः ।

साधु चन्द्रमसीति । अत्र हि 'मीलितं यदि'त्युत्तरवाक्यार्थगतो यच्छब्दः 'साधु चन्द्रमसीति' पूर्ववाक्ये तदित्युपादानं नापेक्षते ।

पूर्ववाक्यार्थगतत्वेनोपात्तस्त्वपेक्षत एवेत्याह — प्रागुपात्तस्त्विति । अत्रापि प्रागुदाहरणमेव वाक्यवैपरीत्यादुदाहर्तव्यमित्याह—यथा ह्यत्रैव श्लोक इति । उभयोपादाने त्वविवाद एवेत्याह—

साहित्यचूडामणिः

साध्विति । चन्द्रमसि विषये पद्मैरुचितमाचरितामिति पूर्वो वाक्यार्थः। यतो रामणीयकोत्तरे तत्र सति[3] मीलितं सङ्कुचितं तिरोहितं च । अत्र यच्छब्दस्य भविष्यदर्थस्य तच्छब्दापेक्षा न सम्पद्यते । एवम्

"आत्मा जानाति यत् पापं माता जानाति यत् पिता ।"

इत्यादावप्यवगन्तव्यम् । तदात्मा जानाति यत् पापभूतं माता जानाति, यत्[4] पितृभूत इति ।

अपेक्षोचितं स्थानमाह — प्रागिति । पूर्ववाक्यार्थवर्ती यच्छब्दः तच्छब्दोपादानमन्तरेण साकाङ्क्षः न वाक्यार्थपर्यवसायी । आद्येति । प्रथमद्वितीयपादयोर्व्यत्यासे

"मीलितं यदभिरामताधिके साधु चन्द्रमसि पुष्करैः कृतम् ।"

१. 'योपा' क. पाठः. २. 'त्वोपा' ग. पाठः. ३. 'संमी', ४. 'यः पि' घ. पाठः.

तु निराकाङ्क्षत्वं प्रसिद्धम् । अनुपादानेऽपि द्वयमपि क्वचिद् सामर्थ्याद् गम्यते । यथा —

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

---

सम्प्रदायप्रकाशिनी

**द्वयोरिति** । क्वचिदनुपात्तयोर्द्वयोरप्यर्थात् सिद्धिरित्याह — **अनुपादानेऽपीति** ।

**ये नाम केचिदिति** ।

साहित्यचूडामणिः

इति विमुखोद्धते पाठे । द्वयोरिति । यत्तदोरुभयोरुपादाने निराकाङ्क्षत्वं वाक्यार्थस्य खण्डिकोपाध्यायैरभ्युपगन्तव्यम्[1] । यथा —

"यदुवाच न तन्मिथ्या यद् ददौ न जहार तद्"

इति । एतद् यदुपक्रमं तदुपसंहारं च वाक्यम् । विपर्ययेण यथा 'सा न काचिद्[2] या न भवसी'ति । उभयमेकत्र यथा ममैव —

"ये शिलाशकलशङ्कया रसस्राविणीषु करकासु निःस्पृहाः ।
अर्थिनश्च सलिले त एव ते ये हि विश्वविमुखास्त्वदुन्मुखाः ॥"

इति । **अनुपादानेऽपीति** । द्विविधो हि यत्तदोरुपक्रमोपसंहारक्रमः शाब्द आर्थश्चेति । तत्र द्वयोरुपादाने शाब्दः । एकतरोपादाने आर्थः । द्वयोरनुपादा[3]नेऽप्यार्थ इति चतुर्थः प्रकारः ।

**ये नामेति** । प्रमुखे विनयप्रदर्शनम्, अन्ततः कवित्वगर्वौद्धत्यं च । साधर्म्यशाली य उद्भविष्यति तं प्रति प्रकरणारम्भसंरम्भ इति यत्तद्युगलमर्थसामर्थ्यलभ्यम् ।

---

१. 'भ्यु', २. 'दन्या भ' घ. पाठः. ३. 'रुपा' क. ग. पाठः.

अत्र य उत्पत्स्यते, तं प्रतीति । *एवञ्च तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वं प्रसिद्धम् । नचासाविति तच्छब्दार्थमाह ।

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥

सम्प्रदायप्रकाशिनी

अत्र प्रथमार्धवाक्यगतयत्तद्वृत्तसमभिव्याहारमहिम्नैवमर्थो भवतीत्याह — अत्र य उत्पत्स्यत इति । इत्थं तदो विषयत्रये केवलस्योपादानं, यदस्तूत्तरवाक्यगतस्यैव, क्वचिदुभयमप्यर्थात् सिध्यतीति न्यायव्यवस्थायां प्रकृते साकाङ्क्षत्वमेवेत्याह — एवञ्च तच्छब्देति । ननूपात्तप्राय एवेह तच्छब्दः, तदर्थधुरन्धरस्यादसः प्रयोगादित्यत आह — नचासावितीति ।

कथं[1] न तच्छब्दार्थमाहेत्यतः प्रत्युदाहरति — असौ मरुच्चुम्बितेति । असाविति प्रकृतं वसन्तकालमभिनयेन निर्दिशति । केसरशब्द एकदा वकुलवचनः अन्यदा तु स्कन्धसटावचनः । एवं ताराधिपश्चन्द्रमाः सुग्रीवश्च । मण्डलं बिम्बं राष्ट्रं च । रामाः स्त्रियः रामो दाशरथिः ।

साहित्यचूडामणिः

प्रस्तुतं प्रमेयं प्रत्यवेक्षते—एवञ्चेति । 'योऽसौ सुभगे! तवागत' इत्यत्र यत्पदमेकमेवावलोक्यते न तत्प्रतिसम्बन्धि तत्पदं, तदनुपादाने च वाक्यस्य साकाङ्क्षत्वम्[3] । ननु यदः केवलस्यात्र प्रयोगः न तद इति कोऽयं दोषः । यावता तदभिन्नार्थमदोवृत्तं प्रयुज्यत इत्याशङ्क्याह— नचेति ।

तददश्शब्दयोर्भिन्नार्थत्वं प्रकटयति— असाविति । मरुता मलयानिलेन चुम्बितानि चारूणि केसराणि[4] वकुलकुसुमानि यत्र । प्रसन्नः स्वच्छः ताराधिपस्य चन्द्रमसो मण्डल एवाग्रणीः प्रधानभूतो यस्य । वियुक्तानां

१. 'थं तच्छब्दमाहेति प्र' ग. पाठः. २. 'ति प्र' ख. पाठः. ३. 'ङ्क्षितत्वम् ।' ग. पाठः. ४. 'णि वकुलानि' घ. पाठः.

* 'एवं त' इति मूलकोशपाठः ।

अत्र हि न तच्छब्दार्थप्रतीतिः। प्रतीतौ वा,

करवालकरालदोस्सहायो
युधि योऽसौ विजयार्जनैकमल्लः।
यदि भूपतिना स तत्र कार्ये
विनियुज्येत ततः कृतं कृतं स्यात्॥

अत्र स इत्यस्यानर्थक्यं भवेत्। अथ—

सम्प्रदायप्रकाशिनी

प्रतीत्येकशरणत्वाच्छब्दशक्तेरनपह्नवनीयां प्रतीतिं प्रमाणयितुमाह—अत्र हि (न) तच्छब्दार्थेति।

प्रतीत्यपलापसाहसमपि यद्यङ्गीकरोषि तदा तवैतदनिष्टं स्यादित्याह—प्रतीतौ वा करवालकरालेति। योऽसौ करवालकरालदोर्मात्रसहायः सन्नेव विजयार्जने निष्प्रतिद्वन्द्वः, स चेत् कार्ये नियुज्येत तदा कृतं कृतं स्यादिति।

अत्र निस्सामान्यत्वप्रकाशनपरस्यादसो यदि तच्छब्दार्थत्वं,

साहित्यचूडामणिः

विरहिणीनां रामाणां रमणीयानाम् आतुरया दृष्ट्या वीक्षितो वसन्तकालः। अथच मरुता तातेन चुम्बिता आघ्राताः चारवः केसराः स्कन्धरोमाणि यस्य। प्रसन्नस्य वालिवधेन विगलितविरोधस्य ताराधिपस्य सुग्रीवस्य यन्मण्डलं सेनाचक्रं तस्याग्रणीः प्रथमगः। वियुक्तस्य सीताविप्रलम्भिनो रामस्यातुरया दृष्ट्या वीक्षितो हनुमान्। स इवासावागत इति प्रत्यक्षेण निर्दिश्यमानत्वात् कथं तच्छब्दार्थप्रतीतिः। तस्माददसस्तदभिन्नार्थतानुपपत्तिः।

यदि च तामपह्नुत्य गतानुगतिकत्वादनयोरेकार्थत्वभ्रमः, तदभ्युपगम्यापि ब्रूम इत्याह—प्रतीतौ वेति।

विजयस्यार्जने सम्पादने प्राधान्येन समर्थः।

स इत्यस्यानर्थक्यमिति। अदश्शब्देनैव तत्कार्यसिद्धेः। नन्विदं-

१. 'त्यै' ग. पाठः. २. 'थ' ख. पाठः. ३. 'दै' क. घ. पाठः. ४. 'चैव का', ५. 'णाम्, आ', ६. 'तरो', ७. 'णो', ८. 'ह' घ. पाठः.

योऽविकल्पमिदमर्थमण्डलं
पश्यतीश! निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जग-
त्यस्य[1] नित्यसुखिनः कुतो भयम् ॥

सम्प्रदायप्रकाशिनी

तदा 'स तत्रे'ति तच्छब्दः पुनःप्रयोगार्हतामेव नासादयेदिति दर्श-यति — अत्र स इतीत्यादि ।

ननु[3] वयमीदृशि विषये तदर्थत्वमदसो ब्रूमः, अपित्वन्यत्रेति दर्शयितुमारभते — अथ योऽविकल्पमिति । ईश! ईशितव्यजनाधि-पते! इदमर्थमण्डलम् अनाश्रितादिभूम्यन्तामिमं[4] तत्त्वग्राममखिलं तत्त-द्भुवनभोगायतनभोग्याद्यवान्तरप्रभेदसध्रीचीनं यः अविकल्पं[5] भवद्वपुः पश्यति निस्सन्देहं त्वदात्मकमित्यवधारयति, अस्य त्वदेकशेषीभूते जगति वस्त्वन्तरासम्भवान्नित्यसुखिनः कुतो भयं भयस्य कारणमेव किं, यतो निस्तरङ्गचिदर्णवसद्भावाविर्भूतनिजानन्दनिह्नुतचराचरव्यव-

साहित्यचूडामणिः

शब्दस्य[6] तच्छब्दस्य सादृश्यादभियुक्तप्रयोगोऽस्ति, तद्वददश्शब्दस्यापि भवतु इदमेतददसां समानयोगक्षेमत्वादित्याशङ्कते — अथेति ।

य इति । हे ईश! परमेश्वर! इदं सर्वसंवादेन साक्षात्क्रियमाणम् अर्थ-मण्डलं प्रमेयप्रपञ्चम् अविकल्पं हानोपादानादिप्रवृत्तिरहितं कृत्वा भवद्वपुः पश्यति; ओदनं पचतीतिवत्; संवित्स्वभावमेव यथा भवति तथानुसन्धत्ते, स्वस्य[7] यौगिकस्यात्मनो यः पक्ष ऐक्यप्रथा तेन परितः पूरिते

"संप्लुतेदम्पदद्वीपे प्रासैकध्ये चिदम्बुधौ ।
मज्जतां नैव चेत्यानामस्ति हस्तावलम्बनम् ॥"

इतिस्थित्या स्वात्माभेदमात्रपात्रीकृते जगति नित्यसुखिनो भेदशङ्काकलङ्कत्रोट-

१. 'हन्त सु' क. पाठः. २. 'तां ना' क. घ. पाठः. ३. 'नु' क. ख. घ. पाठः. ४. 'दं' क. घ. पाठः. ५. 'ल्पनं भ', ६. 'स्य सा' घ. पाठः. ७. 'त' क. पाठः.

इतीदंशब्दवददश्शब्दस्तच्छब्दार्थमभिधत्त इत्युच्यते, तर्ह्य-त्रैव[1] वाक्यान्तरे उपादानमर्हति, न तत्रैव। यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति। यथा—

सम्प्रदायप्रकाशिनी

हारस्य वस्त्वन्तरकथैव स्वप्नप्राया, भयं नामैतद्द्वारकं कुतो लभ्यत इत्यर्थः।

अत्राद[2]स्समानयोगक्षेमकतामवधार्येदमस्तदर्थ[3]त्वं दर्शयति — इ-तीदंशब्दवदित्यादि। परिहरति — तर्ह्यत्रै[4]वेति। शब्दशक्तेरयं महिमा यद् वाक्यान्तरोपात्ता इदमादयस्तच्छब्दवद् यच्छब्दाकाङ्क्षां पूरयन्ति। सामानाधिकरण्येन यच्छब्दनिकटस्थितास्तु प्रसिद्धिमात्र-मेव द्योतयन्तीति तच्छब्दः पृथगुपादेय एव।

साहित्यचूडामणिः

नात् परमाह्लादचमत्कारवनस्य कुतो भयं, न कुतश्चिदपि। "द्वितीयाद् वै भयं भवती"ति श्रुतेः।

इदंशब्दवदिति। इदंशब्दो यद्वत् तच्छब्दार्थमभिधत्ते तद्वददश्शब्दो-ऽपि। एतदेतच्छब्दस्याप्युपलक्षणम्। दूषयति — तर्हीति। अत्रैव यथादर्शनं 'योऽविकल्पमि'त्यादाविव वाक्यान्तर उपादातुं युज्यते। न तत्रै[5]वेति। न तु[6] यत्र यद्वृत्तं तस्यैव समीपे। निकटोपादानमेव दोष इति यावत्। अयं भावः — 'योऽसौ सुभग' इत्यत्र यद्वृत्तेन सममदोवृत्तस्यैकवाक्यार्थत्वानुपपत्तिः, एव-मिदमेतदोरपि। उपपत्तौ वा यथादर्शनं व्यवहितानामेव, अव्यवहितत्वे वा भिन्नविभक्तिकानामेवोपादानं न्याय्यं, यथा—

"आजन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य।"

इति। विभक्तिर्लिङ्गस्याप्युपलक्षणम्। तेन भिन्नलिङ्गस्याव्यवहितत्वे न दोषः। यथा "शैत्यं हि यत् सा प्रकृतिर्जलस्ये"ति। ननु तत्रैवोपादाने को दोषः इत्यत्राह — यच्छब्दस्येति। निकटे अव्यवहिते स्थाने स्थितः सन् तच्छब्दः प्रसिद्धिं परामृशति, नतु प्रतिसम्बन्धितां प्रतिपद्यते।

१. 'त्रै' क. पाठः. २. 'दसस्स', ३. 'र्थं द' ग. पाठः. ४. 'त्रै' ग. घ. पाठः. ५. 'त्रै' क. ग. पाठः. ६. 'यत् तत्र य' क. पाठः.

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥

**इत्यत्र** तच्छब्दः । ननु कथं,

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते!
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव! प्रसीद ।
यद्यत् पापं प्रतिजहि जगन्नाथ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्! भूयसे मङ्गलाय ॥

---

सम्प्रदायप्रकाशिनी

का कथेदमादीनां, यावता यच्छब्दनिकटस्थितस्तच्छब्दोऽपि प्रसिद्धिमात्रे पर्यवस्यतीति तच्छब्दान्तरमुपादेयमेवेति दर्शयति — **यथा यत्तदूर्जितमिति** । अस्य युधिष्ठिरस्य यत्तदूर्जितं तेजः अक्षैर्दीव्यता तदपि हारितं, न केवलं राज्यम् । अत्र हि यत्तदिति तच्छब्दोऽपि प्रसिद्धिमात्रे पर्यवस्यति । 'तदपि[1] हारितमि'ति तदः पुनरुपादानं कथमितरथा संगच्छते ।

पूर्ववाक्य[2]गतो यच्छब्द उत्तरवाक्ये तच्छब्दोपादानं नियमेनाकाङ्क्षतीति यत् सिद्धान्तितं, तत्र व्यभिचारमाशङ्कते — **ननु कथं कल्याणानामिति** ।

साहित्यचूडामणिः

**यत्तदिति** । राज्यादिवत् तदपि तेजो हारितमिति यच्छब्दानिकटे तिष्ठंस्तच्छब्दः प्रसिद्धमेव परामर्ष्टुं प्रगल्भते, इतरथा पुनः स्वशब्दप्रयोगानौचित्याद्, यस्मादत्र तदो द्विरुपादानं सकृच्च यदः ।

ननु 'यत्तदोर्नित्यसम्बन्ध' इति न्याया[3]पवादोऽयं यथा भवति प्रयोग इत्याह — **नन्विति** ।

**यद्यत्पापमिति** । यतः कारणभूतस्य पापकर्मलक्षणस्य दुरितस्य प्रतिघातः ततो हेतोरखिलमपि कुशलजातीयं विश्राणय । यत् श्रुतिः ''विश्वानि-

---

१. 'पि तं हा' क. घ. पाठः. २. 'क्यार्थग' क. पाठः. ३. 'यभावोऽयं' ख. घ. पाठः.

*अत्र हि यद्यदित्युक्त्वा तन्मे इत्युक्तम् । उच्यते । यद्यदिति येनकेनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तं, तथाभूतमेव तच्छब्देन परामृश्यते । तथा —

सम्प्रदायप्रकाशिनी

अत्र व्यभिचारमुद्भावयति — अत्र हीति । यद्यदिति द्विरुपादानादुत्तरवाक्येऽपि तत्तदिति युक्तम् । अतोऽन्यतरस्य यदः प्रतियोगित्वेन तच्छब्दान्तरानुपादानात् सव्यभिचारस्त्वया दर्शितो नय इत्याक्षेपनिष्कर्षः । परिहरति — उच्यते यद्यदित्यादि । यद्यदिति द्विरुपादाने हि विवक्षा द्विधा दृश्यते प्रत्यर्थनिष्ठतया सर्वार्थनिष्ठतया च । यदा प्रत्यर्थनिष्ठतया, तदा तदोऽपि नियमेन द्विरुपादानम् । यदा तु सर्वार्थनिष्ठतया, तदेकेनैव तदा पारिपूर्ण्यम् । क्वचित् सामानाधिकरण्येन यच्छब्दसंनिकृष्टस्यापि तदो विभागव्यवस्थापकप्रमाणान्तरसद्भावे यच्छब्दप्रतियोगित्वमेव, नतु प्रसिद्धिमात्रे पर्यवसानम् । यथा—

"न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ।"

इति । अत्र 'न केवलं य' इति पूर्ववाक्येनैव साकमभिसम्बन्धस्य प्राक्प्रतीतत्वाद् 'यः स' इति सन्निधानेऽपि तदो न प्रसिद्धिपर्यवसान-

साहित्यचूडामणिः

देवसवितरि" इत्यादि । तदनुवदति — यद्यत्पापमिति । वीप्सया यदो द्विरुपादानं सकृच्च तदः । तत्र विज्ञायते एकस्य यद्वृत्तस्य नैराकाङ्क्ष्यम् अन्यस्य विपर्यय इति ।

परिहरति — उच्यत इति । सर्वात्मकं सर्वाकारेण प्रक्रान्तम् । अतो द्वितीयतच्छब्दानपेक्षा, वीप्सया सर्वात्मकस्यैव सतः पापस्य तच्छब्देन परामर्शात् ।

१. 'त्पा' ख. ग. पाठः. २. 'दितीति' क. घ. पाठः. ३. 'ति द्विधा विवक्षा दृ' ग. पाठः. ४. 'धा वीप्सा दृ' क. घ. पाठः. ५. 'न यदा य', ६. 'स्स' क. घ. पाठः. ७. 'तीतिकत्वा' ग. पाठः. ८. 'द्धिमात्रप' क. घ. पाठः.

* 'अत्र य' इति मूलकोशपाठः.

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृत

मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।

मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-

र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥

अत्रार्यस्येति तातस्येति च वाच्यम् । नत्वनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेष्वप्युदाहार्यम् ।

---

सम्प्रदायप्रकाशिनी

मिति पारिपूर्ण्यमेव । ईदृशी यत्तद्वृत्तवैचित्र्यविचारसूक्ष्मेक्षिका व्यक्तिविवेकव्याख्यायां रुचकेन वितत्य कृता । इहानुपयोगान्न लिख्यते ।

किं लोभेनेति । रामनिर्वासनहेतुं विमृशतः शत्रुघ्नस्योक्तिरेषा । मात्रा उपायभूतया । येनैवं कृतमित्यर्थः । अत्र तातसम्बन्धान्मातुः, आर्यानुजत्वाद् भरतस्य च प्राधान्यं विवक्षितमिति न तौ समासेन गुणीभावमर्हतः । नचेह समासगतत्वमात्रादवाक्यदोषत्वं शङ्क्यम् । वाक्यपर्यालोचनायत्तत्वात् प्राधान्यस्य । अतो वाक्ये कामचारः, पदाश्रयत्वे समासगतत्वमेवेति नियम्यते ।

साहित्यचूडामणिः

प्रकारान्तरेण विधेयाविमर्शमेवोदाहरति—किमिति । स भरतः प्रख्यातसौशील्यः लोभेन राज्यश्रद्धया किमाक्रान्तः । येन पुत्रलोभरूपेण हेतुना मात्रा कैकेय्या एतद् रामाभिषेकप्रत्यूहरूपं कृतम् । यद्वा किमन्यस्य लोभादन्यस्यानौचित्यप्रवृत्त्या । माता कैकेय्येव किमेवं कृतवतीति वितर्कः । या स्त्रीणां प्रसिद्धा लघुता 'किं क्रूरं स्त्रीहृदयमि'ति नीत्या तां गतेति । अनयोश्चिन्तितयोरर्थयोर्द्वितयमपि मिथ्या बाधयोग्यम् । असौ यो लोभादाक्रान्त इत्यशङ्कि । आर्यस्य सुगृहीतनाम्नो रामस्यानुजः । एवं तातस्य दशरथस्य कलत्रम् ।

वाच्यमिति व्यासेन भाव्यम् । नन्वयमपि पददोषः पादद्वये वर्तत इत्येतावान् विशेषः इति चेत् । न । किंप्रयुक्तमेतदिति चिन्तायामिदमिदं वेति

---

१. 'त्र्यसू' ख. ग. पाठः. २. 'सहे', ३. 'आचार्या' क. घ. पाठः. ४. 'क्ष्यत इति' ग. पाठः. ५. 'से गु' क. ख. घ. पाठः. ६. 'दग्रा' क. पाठः. ७. 'प' घ. पाठः.

साहित्यचूडामणिः

द्वयोरन्वयानुप्रविष्टत्वम् । तद्वारा च तयोराचरितयोरेकार्थीभावात् । अतएव युगपदनयोरुपादानम् । नत्विति । यदि समासः, अवश्यमनयोर्गुणीभावः । विग्रहवाक्यवासनावशादविदग्धानां केषाञ्चिद्वैषम्यभ्रान्तिः । ननु विशेष्यं प्रधानं विशेषणमप्रधानमिति हि प्रसिद्धिः । तामवधूय विशेषणस्य प्राधान्येन भवितव्यमिति कोऽयं न्याय इति चेत् । उच्यते । द्विविधं प्राधान्यं शाब्दमार्थं च । तत्र विशेषणस्य शाब्दे गुणभावेऽप्यार्थं प्राधान्यं तथा विशेष्यस्य शाब्दे प्राधान्येऽप्यार्थो गुणभाव उत्कर्षापकर्षफलतया विधीयमानत्वादनूद्यमानत्वाच्च । तदुक्तं 'यत् कथञ्चिदपि प्रधानतया विवक्षितं न तन्नियमेनेतरेण सह समासमर्हति' । तथा —

"विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित् ।
तदर्थमेव कवयोऽलङ्कारान् पर्युपासते ॥
तौ विधेयानुवाद्यत्वविवक्षैकनिबन्धनौ ।
सा समासेऽस्तमायातीत्यसकृत् प्रतिपादितम् ॥
अत एव हि वैदर्भी रीतिरेकैव शस्यते ।
यतः समाससंस्पर्शस्तत्र नैवोपपद्यते ॥
सम्बन्धमात्रमर्थानां समासोऽप्यवबोधयेत् ।
नोत्कर्षमपकर्षं वा वाक्यात् तूभयमप्यदः ॥"

इति । विध्यनुवादभावोऽपि विशेषणविशेष्यभावसमानयोगक्षेम इति तत्रापि न समासार्हता । यथा 'चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेय' इति । प्रत्युदाहरणं तु

"हिमकरसितच्छत्रं + + + + + + + + ।
कृशतनुधनुर्वल्ली लीलाकटाक्षशरावलिः ॥"

इति । तदुक्तं —

"लोहितस्तक्षक इति समासो नोपपद्यते ।
लौहित्यस्य विधावुक्तन्यायात् तस्याप्रवृत्तितः ॥

१, 'कृतशतध्र' घ. पाठः.

साहित्यचूडामणिः

स्वरूपमात्रस्योक्तौ च लौहित्याव्यभिचारतः ।
उष्णोऽग्निरिति तत्पक्षो नचान्यस्तत्समन्वये ॥"

इति । एवमिति । विशेषणविशेष्यभावोपचितशरीरत्वं समासानां सामान्यलक्षणम्, अन्यथा सामर्थ्यानुपपत्तेः । तत्र तत्पुरुषे कर्तुर्यथा —

"यस्यावमत्य गुरुदत्तमिमं कुठारं
डिम्भोऽपि राम इति नाम पदस्य हर्ता ।"

इति । गुरुणा दत्तमिति व्यासः कार्यः । कर्मणो यथा —

"प्रदक्षिणक्रियातीतस्तस्याः कोपमजीजनः ।"

इति । प्रदक्षिणाक्रियामतीत इति वाच्यम् । एवं 'यथाकामार्चितार्थिनामि-त्यादि । करणस्य यथा —

"धात्रा स्वहस्तलिखितानि ललाटपट्टे
को वाक्षराणि परिमार्जयितुं समर्थः ।"

इति । स्वहस्तेनेति वाच्यम् । अपादानस्य यथा—'क्रौर्यं कृतान्ताधिकमि'ति । कृतान्तादिति वाच्यम् । एवम् 'आसमुद्रक्षितीशानामि'त्यादि । अधिकरणस्य यथा 'अन्यसङ्क्रान्तसौभाग्ये'ति । अ(न्य ? न्यस्मिन्) सङ्क्रान्तेति वाच्यम् । बहुव्रीहौ यथा —

"यः स्थलीकृतविन्ध्याद्रिराचान्तापारवारिधिः ।
यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः ॥"

इति ।

"येन स्थलीकृतो विन्ध्यो येनाचान्तः पयोनिधिः ।
वातापिस्तापितो येन"

इति वाच्यम् । न खल्वत्र किञ्चिदन्तरं प्रतिपत्स्यामह इति चेत् । सत्यम् । कवीनामेवैष विषयो न खण्डिकोपाध्यायानामिति । अव्ययीभावे यथा — 'निष्प्रत्यूहमुपास्महे' इति । प्रत्यूहाभावायेति वाच्यम् । द्वन्द्वे यथा —

"सीताया ऊर्मिलायाश्च सदृशौ रामलक्ष्मणौ ।"

इति । रामश्च लक्ष्मणश्चेति वाच्यम् । द्विगौ यथा —

"ब्रह्मा विष्णुश्च रुद्रश्च त्रिलोकीमधिकुर्वते ।" इति ।

१. 'चास्य ह्यन्यस्तत्समये' ख., 'चान्यस्तद्व्यन्वये' घ. पाठः.

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धार्थप्रतीतिः[१] ।

---

सम्प्रदायप्रकाशिनी

अथ विरुद्धमतिकृत् —श्रितक्षमा इति । क्षमा क्षान्तिः पृथ्वी च । रक्तभुवोऽनुरक्तमण्डला रुधिराश्रयभूताश्च[२] । शिवानि कल्याणानि शिवा जरज्जम्बुकाश्च । विग्रहो युद्धं वपुश्च । गतासुखाः अपगतदुःखाः उपरतप्राणेन्द्रियाश्च ।

अत्र यद्यपि जुगुप्साद्योतकत्वमपि, तथापि 'सुखं शेरत' इति विवक्षिते 'मृता' इति विरोधप्रतीतिरुद्धुरभावाद् विरोधमतिकृत्त्वमिति दर्शयति — अत्र क्षमादीति ।

साहित्यचूडामणिः

त्रीन् लोकानिति वाच्यम् । अन्यथा सङ्ख्यायाः सङ्ख्येयेषु निरवकाशता न प्रकाशेत । असुक्तेति नञ्समासो व्याख्यातः । तत्र यथा प्रसज्यप्रतिषेधे पर्युदासस्यानौचित्यम्, एवं विपर्ययेऽपि । यथा 'गृहीतं येनासीः परिभवभयान्नोचितमपी'ति । अनुचितमपीति वाच्यम् । इत्यलमेकप्रघट्टनोद्घाटनाटोपेन ।

श्रितेति । प्राप्तसहिष्णुभावा अनुरक्तभूमयो मङ्गलाश्लिष्टमूर्तयो विरोधविगलनेन क्षीणदुःखाः शेरत इति विवक्षिते शरीरपातात् प्राप्तभूमयः क्षतजार्द्रतया रक्तभूमयो गोमायुपरिगृहीतशरीरा विग्रहस्य शरीरस्य विनाशेन गतासुखाः असवः प्राणाः खानीन्द्रियाणीति विरुद्धोऽर्थः प्रतीयत इति । एतावता वाक्येऽपि दोषाः सन्त्येवेति[६] समर्थितम् ।

---

१. 'तिकृत्। प' ख. पाठः. २. 'क्तभूम', ३. 'स्पदभू' ग. पाठः. ४. 'त्वं त' क. घ. पाठः. ५. 'री' ग. पाठः. ६. 'ते इ' घ. पाठः.

पदैकदेशो यथासम्भवम् ।

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेन प्रियायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

अत्र त्वात् त्वादिति, यथा वा —

तद् गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥

अत्र द्ध्यै ब्ध्यै इति च श्रुतिकटु* ।

यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्ति ।
वलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥

---

सम्प्रदायप्रकाशिनी

**अथ पदस्यांश उदाहरणप्रस्तावः — अलमतीति तद् गच्छेति च । प्रत्ययविशेषयोः श्रुतिकटुत्वम् ।**

**यश्चाप्सर इति ।**

साहित्यचूडामणिः

अथ 'पदस्यांशेऽपि केचने'त्येतद् व्याचष्टे — पदेति । केचन, न सर्वे । अत आह — यथासम्भवमिति ।

अलमिति । स्वप्नश्चित्तवृत्तिमात्रपरिकल्पिता सृष्टिः । मन्त्रादेरविद्यमानार्थ-प्रकाशनं माया । त्वाच्छिरस्कः प्रयोगः श्रुतिकटुः । असकृदावृत्त्या दोषौल्बण्यम् ।

अर्थोऽयं देवकार्यकरणलक्षणः अर्थान्तरेण पार्वतीपरमेश्वरसङ्घटनारू-पेण भाव्यः लब्धसत्ताकः कार्यः । एवकारः कार्यनिष्कर्षमभिव्यनक्ति । आत्म-लब्ध्यै स्वरूपलाभाय । प्रत्ययं कारणम् । उदयादुच्छूनतारूपात् । द्धयै ब्ध्यै इत्यर्धद्वयेऽपि भावाद् दोषौल्बण्यम् ।

---

१. 'त्र सिद्ध्यै लब्ध्यै' क. पाठः. २. 'मिति' ख. ग. पाठः. ३. 'ति विरोधः अ' क. घ. पाठः.

---

* 'कष्टम्' इति मूलकोशपाठः ।

अत्र मत्ताशब्दः क्षीबार्थेन निहतार्थः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥

अत्र दृशामिति बहुवचनं *निरर्थकं, कुरङ्गेक्षणाया एकस्या एवोपादानात् । नच 'अलसवलितैः प्रेमार्द्रार्द्रैरि'त्यादिवद् व्यापारभेदाद् बहुत्वम् । व्यापाराणा§मनुपादानात् । नच

सम्प्रदायप्रकाशिनी

अत्र मत्तेति । क्षैब्यलक्षणेनार्थेनार्थान्तरं निहन्यत इति ।

आदावञ्जन इति । भल्लीनां भल्लकानाम् ।

नैरर्थक्यमुद्भावयति—अत्र दृशा[2]मिति । ननु व्यापारपरत्वे सार्थकत्वमित्यत आह— अनुपादानादिति । अत्र हि व्यापारवतो-

साहित्यचूडामणिः

मत्ताशब्द इति । धातुमतो भाव इति विवक्षायां क्षीबशब्दार्थेन निहतार्थः ।

आदाविति लोहकारसमाधिनोक्तिः ।

बहुवचनमिति । दृशोरिति द्विवचनस्यौचित्यम् । यथाह—'हस्तादीनां द्वित्वाविष्टा जातिरि'ति । ननु 'अलसवलितैरि'त्यादावीक्षणैरिति यथा बहुवचनम्, एवमत्रापीति चेत् तत्राह— नचेति । हृदयेऽन्तःकरणे निहितं निगूहितं भावरूपमौत्सुक्यलक्षणमाकूतमवहित्थानुभावं वमद्भिरिवेति योजना । व्यापारेति । न खल्व[3]लसा वा वलिता वा मुकुला वेति युक्तं वक्तुं भिन्नलक्षणत्वाद्

१. 'लीलादि । न', २. 'दित्यादि । अ' ग. पाठः. ३. 'ल्वस्यैव वलितावलितैवालसा मु' घ. पाठः.

* 'अनर्थकम्'. § 'मनुपात्तत्वात्' इति मूलकोशपाठः ।

व्यापारेऽत्र दृक्शब्दो वर्तते । अत्रैव 'कुरुत' इत्यात्मनेपदम-प्यनर्थकं, प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्रभिप्रायक्रिया-फलाभावात् ।

चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥

---

सम्प्रदायप्रकाशिनी

रेवोपादानम् । व्यापारोपादाने को दोष इत्यत आह — नच व्या-पारे[1]ऽत्रेति । व्यापारवृत्तित्वे ह्यञ्जनलेपनाद्यसम्भवः । च्युतसंस्कृतित्व-मप्युद्भावयति — अत्रैव कुरुत इत्यादि । कर्त्रभिप्रा[2]यताभावात् प्रत्ययांश एव दुष्ट इति पदैकदेशदोषोऽयम् । 'नाथत' इति तु आशिषि धातोरेवात्मनेपदित्वनि[4]यम इति पदमेव दुष्टम् ।

चापाचार्य इति ।

साहित्यचूडामणिः

दृष्टीनाम् । अत्रापि व्यापारबहुत्वमिति चेत् तत्राह — व्यापाराणामिति । नन्वञ्जनपुञ्जलेपादिर्व्यापार इत्यत्राह — नचेति । ईक्षणशब्दो यथा व्यापारे वर्तते न तथा दृक्शब्दः, प्रयोगाभावात् । कुरुत इत्यात्मनेपदमपीति । दृङ्निषेकलक्षणायाः क्रियायाः दृक्सम्बन्धमात्रसारत्वात् कुरङ्गेक्षणायाः सम्ब-न्धाभावे कर्त्रभिप्रायक्रियाफलाभावात् 'स्वरितञितः—' (१-३-७२) इत्यात्मने-पदनिमित्ताभावान्निरर्थकमात्मनेपदमिति ।

चापेति । हन्तकारः पूर्णभिक्षा । किमु किन्तु । विजेय इत्यस्य विजित इत्यत्र सङ्केतो नास्ति भूतत्रैकाल्यार्थयोर्निष्ठाकृत्यप्रत्यययोर्भिन्नार्थकत्वात् ।

---

१. 'रे' क. ग. घ. पाठः.   २. 'व्य' क. घ. पाठः.   ३. 'त्याशि' क. ख. घ. पाठः.   ४. 'त्वपरस्मैपदित्वनि' ग. पाठः.

अत्र त्रिजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥

अत्र पेलवशब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥

अत्र पूयशब्दः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग! तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥

---

सम्प्रदायप्रकाशिनी

**अवाचकतां दर्शयति — अत्र त्रिजेय इत्यादि ।**

**अतिपेलवमिति । अत्र पेलवशब्द एकदेशे व्रीडाद्योतकः पुरीषप्रतीतिकरणात् ।**

**यः पूयत इति । कीलनं दार्ढ्यम् । अत्र पूयशब्दो जुगुप्सां व्यनक्ति ।**

**विनयप्रणयेति । यः पूर्वं मय्यनुरक्तः स सम्प्रति तस्याः**

साहित्यचूडामणिः

**अतिपेलवमिति** । खलः खलु धीरोदात्तवदतिकोमलमतिपरिमेयाक्षरं च व्यवहरति, अन्तर्वृत्तचिन्तायां कालकूटेन कल्पितमिव हृदयं वहति। पेलव-शब्दो वर्चःस्मारकतया व्रीळादायी ।

**य इति** । पूयशब्दो व्रणनिःष्यन्दप्रत्यायकतया जुगुप्साव्यञ्जकः ।

---

१. 'मा', २. 'त्व' क. पाठः. ३. 'कं द' ख. पाठः. ४. 'कः ॥ यः' क, ख. घ. पाठः. ५. 'लजनः' ख. घ. पाठः.

अत्र प्रेतशब्दः ।

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्पततेतराम् ।

अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥

अत्र किं पूर्वं साधुरुत साधुषु चरतीति सन्देहः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।

सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥

अत्र वचश्शब्देन गीश्शब्दो लक्ष्यते । अत्र खलु न

सम्प्रदायप्रकाशिनी

सपत्न्या अभिप्रायास्पदमिति पूर्ववत् कथं विलोक्यतामित्यर्थः । अत्र प्रेतेत्यमङ्गलाभिव्यक्तिः ।

कस्मिन्निति ।

अत्र साधुचर इत्यंशे सन्देहं दर्शयति — अत्र किमिति । चरडजर्थयोः (?) सन्देहः ।

किमुच्यत इति । अत्र गीर्वाणैरिति प्रतिपत्तये वचश्शब्देन गीश्शब्दो लक्ष्यते ।

गीरेव येषां बाण इति योगेऽपि व्यवहारस्य व्युत्पत्तिप्रतिबन्ध[2]ताभावात् प्रयोगानुसारेण पर्यायपरिवृत्त्यनर्हता तदर्हता च भवतीत्यत[3] आह — अत्र खल्विति । न खलु 'गीःशरा' इत्यपि युक्तम् ।

साहित्यचूडामणिः

प्रेतशब्दो मरणप्रतिभासादमङ्गलार्थः ।

किं पूर्वं साधुरिति 'भूतपूर्वे चरट्' (५. ३. ५३), उत साधुषु चरतीति 'चरेष्टः' (३. २. १६) इति सन्देहः ।

वचोबाणैर्देवैरपि सुदुष्प्रापम् । वचसा गीर्लक्ष्यते । अतो वचोबाणशब्दो गीर्वाणार्थे नेयार्थः ।

प्रसङ्गात् प्रमेयान्तरं शिक्षयति — अत्रेति । गीर्वाणशब्दे न केवलं पूर्व-

१. 'चान्घजळयोरर्थयोः', २. 'त्तिवन्धको भा', ३. 'त्याह' ख. ग. पाठः.

केवलं पूर्वपदमेव, यावदुत्तरपदमपि पर्यायपरिवर्तनं न सहते। जलध्यादावुत्तरपदमेव। बडवानलादौ च पूर्वपदमेव। यद्यप्य-समर्थस्यैवाप्रयुक्तादयः केचन भेदाः, तथाप्यन्यैरलङ्कारकारै-र्विभागेन दर्शिता इति, भेदप्रदर्शनेनोदाहर्तव्या इति च विभज्योक्ताः॥ ४ ॥

**प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम्।**
**न्यूनाधिककथितपदं पतत्प्रकर्षं समासपुनरात्तम्॥ ५॥**

सम्प्रदायप्रकाशिनी

जलध्यादावुत्तरपदमेव परिवर्तनानर्हं, बडवानलादौ तु पूर्वपदमेव। मही-रुह इत्यादौ पुनरुभयस्यापि परिवर्तनार्हत्वं प्रसिद्धमिति न दर्शितम्। अथाप्रयुक्तनिहतार्थादेरसमर्थाद् वस्तुतो न भेद इत्याह — यद्यप्य-समर्थस्यैवेत्यादि ॥

इत्थं पदवाक्यपदैकदेशसाधारणान् दोषानुक्त्वा वाक्यैकनिब-द्धानाह — प्रतिकूलवर्णेत्यादिना सार्धेन कारिकायुगलेन। प्रति-कूलवर्णमुपहतविसर्गमित्यादीन्येकविंशतिर्दुष्टानि वाक्यानि। उपहत-

साहित्यचूडामणिः

पदमेव वचोरूपं पर्यायपरिवर्तनं न सहते। यावदिति। बाणरूपमुत्तरपदमपि न सहते। तेन वचोबाण इव गीःसायकोऽपि नेयार्थः। कीदृगेकैकपदं परि-वृत्त्यक्षममित्यपेक्षायामाह — जलध्यादाविति। जलनिधिदिनकरादावुत्तरपद-मेव, सलिलनिधिदिवसकरादेरदोषत्वात्। न पुनर्जलधरादिनामना(?)दावदुष्टत्वं समुद्रादित्ययोरवाचकत्वात्। बडवानलमलयोद्भवादौ पूर्वपदमेव पर्यायपरिवर्तनं न क्षमते। उत्तरपदं तु क्षमत एव।

नन्वसमर्थस्यैवायं प्रपञ्चः किमर्थमप्रयुक्तावाचकत्वादेः पृथक् परीक्षेत्य-त्राह — यद्यपीति। आदिपदान्निहतार्थादि। असमर्थस्य बहुविधं लक्षयितुं शक्यत्वात्॥ ४ ॥

अथ वाक्यविषयानेव दोषानुद्दिशति — प्रतिकूलेति। वाक्यमेव, न तु पदं तदेकदेशो वा। तथेति दुष्टमित्येव।

१ 'दं या', २. 'क्षमते' ख. पाठः. ३. 'ति वि' क. पाठः. ४. 'नार्हं' क. घ. पाठः. ५. 'न परिवर्तनार्हम्। म' क. पाठः. ६. 'दौ सामर्थ्याद्' क. घ. पाठः. ७. 'र्थत्वाद्' ख. पाठः. ८. 'पि स', ९. 'दप' ग. पाठः.

**अर्थान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।**
**अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥ ६ ॥**
**भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा ।**

रसानुगुणत्वं वर्णानां वक्ष्यते। तद्विपरीतत्वं प्रतिकूलत्वम्। **यथा शृङ्गारे —**

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि! माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥

---

सम्प्रदायप्रकाशिनी

लुप्तेत्यत्र विसर्गशब्दः, न्यूनाधिकेत्यत्र पदशब्दः, अपदस्थपदेत्यत्रा-पदस्थशब्दश्च प्रत्येकमभिसम्बध्यते। नच वाच्यं 'द्वन्द्वान्ते श्रूयमाणः प्रत्येकमभिसम्बध्यत' इति न्यायादादौ श्रुतस्यापदस्थपदस्य कथं प्रत्ये-कमभिसम्बन्ध इति। द्वन्द्वे हि आद्यन्तश्रुतयोर्द्वयोरविशेषेण प्रत्येकाभि-सम्बन्धदर्शनात्।

"प्रत्येकमभिसम्बन्धं[२] यदादौ[३] च श्रुतोऽर्हति।
तदन्ते श्रूयमाणत्वं[४] नयेऽस्मिन्नुपलक्षणम् ॥"

यथोपयोगं लक्ष्यपदं विवृण्वन् क्रमेणोदाहर्तुमाह — **रसानुगु-णत्वमित्यादिना**। वक्ष्यते, गुणविवेचनावसर इति शेषः।

अकुण्ठेति। शृङ्गारे टवर्गनिषेधादिह प्रतिकूलवर्णता।

साहित्यचूडामणिः

रसापेक्षया विरुद्धाक्षरं यद्वाक्यं तद् दुष्टं, किं तद् वर्णानामानुकूल्यं यद्विपर्ययो दोष इत्यत्राह — रसेति। वक्ष्यते उत्तरोल्लासे। तद्विपरीतमानुकूल्या-पेक्षया हि प्रातिकूल्यम्। शृङ्गार इति। यत्र माधुर्यं गुणः। माधुर्यगुणशिक्षा-याम् 'अटवर्गा' इति वक्ष्यते।

---

१. 'क्षयगतमे' क. पाठः. २. 'न्धः' क. ख. पाठः. ३. 'दौ हीति' क. पाठः. ४. 'तौ हीति', ५. 'त्वमन' ख. पाठः. ६. 'ति' ख. ग. पाठः.

**रौद्रे —**

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद् रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम् ।

**यथा —**

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलत्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥

सम्प्रदायप्रकाशिनी

रौद्रे ललितत्वमेव प्रतिकूलवर्णतेत्याह — देशः सोऽयमिति । विकटवर्णत्वं दीर्घसमासत्वं चेहोचितमिति प्रत्युदाहरणेन द्रढयति — प्रागप्राप्तेति ।

साहित्यचूडामणिः

व्यतिरेकव्युत्पत्तये रौद्र उदाहरति — **देशः सोऽयमिति** । अयमेव स देश इति यावत् उत्तरत्रावधारणनिर्वाहात् । शस्त्राणि शरासनादीनि । अस्त्राणि मन्त्रदेवतारूपाणि ।

**विकटवर्णत्व**मोजोनुगुणाक्षरत्वम् । **दीर्घेति** । वर्णपदेन वृत्तिरचने उपलक्ष्येते । तेन प्रतिकूलवृत्ति प्रतिकूलरचनं च वाक्यं दुष्टम् । रौद्रे खल्वोजो गुणः । यत्र 'टादिः शषौ वृत्तिदैर्घ्यमि'ति वक्ष्यते ।

व्यतिरेकोदाहरणमाह — **प्रागिति** । निशुम्भः परिभवः । द्वैधाविधा[2] द्वैधाकरणम् ।

१. 'लै त्व' ख. पाठः. २. 'द्वि' ग. पाठः.

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्द-प्रयोगः।

उपहत ओत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत्।

धीरो[1] विनीतो निपुणो वराकारो नृपोऽत्र सः।

यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः॥

सन्धेर्वैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वं च[2]। आद्यं यथा—

सम्प्रदायप्रकाशिनी

त[3]त्रापि चतुर्थपादे विकटवर्णत्वाद्यभाव एवोचित इति सोपपत्तिकमाह—यत्र तु न क्रोध इति।

उपहतविसर्ग[4] लुप्तविसर्गं[5] चोदाहर्तुमाह—उपहत ओत्वमिति।

धीरो विनीत इति। अत्र प्रथमं द्वितीयं चार्धं क्रमेणोदाहरणम्।

विसन्धित्वं चतुर्धा दर्शयितुमाह—सन्धेर्वैरूप्यमित्यादि[6]।

साहित्यचूडामणिः

ननु 'प्रागप्राप्ते'त्यादिपादत्रय इव 'येनानेन जगत्स्वि'त्यादौ तुरीयपादेऽपि भवितव्यं वर्णानामौद्धत्येनेत्यत्राह—यत्र त्विति। तथैव विकटवर्णव्यतिरेकेणैव। न खलु कामचारेण कवीनां वर्णगुम्फः, किंतर्हि, रसानुगुण्यात्। तेन यत्र क्रोधो न विद्यते तत्र तथैव शब्दप्रयोगः, यत्र न किञ्चिदौद्धत्यं तत्र खलु गुरुप्रशंसापरायणे कथं क्रोधौचित्यम्।

उपहत इति। सन्धिकार्यवशादोत्वं प्राप्तो विसर्गो यत्र। तथा लुप्तो विसर्गो यत्रेति द्वितीयम्। यथाह—

"यत्रालुप्तविसर्गान्तैः पदैः प्रोतैः परस्परम्।
ह्रस्वैः संयोगपूर्वैश्च लावण्यमतिरिच्यते॥"

इति। अर्धद्वयेऽपि बन्धशैथिल्यं दोषान्तरम्।

विसन्धिपदं त्रिधा व्याचष्टे—सन्धेरिति। व्युपसर्गार्थो वैरूप्यं, तस्य त्रैविध्यं—विश्लेषो विकर्षः (सं)हिताकरणम्, अश्लीलत्वमसभ्यत्वं, कष्टत्वं श्रुतिकटुत्वं च।

१. 'वी', २. 'च। य' क. पाठः. ३. 'अ' ख. ग. पाठः. ४., ५. 'र्गे' क. ख. घ. पाठः. ६. 'दि। अत्र ता' ग. पाठः. ७. 'पा' क. पाठः.

राजन्! विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितार्थवृत्ती[1]
आतन्वती विजयसम्पदमेत्य* भातः ॥

यथावा—

तत उदित उदारहार[2]हारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥

अत्र संहितां न करोमीति स्वेच्छया सकृदपि दोषः ।
प्रगृह्यादिहेतुकत्वेन त्वसकृत् ।

वेगादुड्डीय गगने चरण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिं कुरु ॥

सम्प्रदायप्रकाशिनी

राजन्! विभान्तीति । अत्र 'तानि इन्दोरि'ति इच्छया संहितापरित्यागः, 'दोर्बले अतितते' इत्यादौ तु प्रगृह्यादिहेतुकतया संहिताभाव इत्युभयथा वैरूप्यं दर्शितम् ।

विश्लेषं दर्शयति — तत उदि(ते ? त इ) ति ।

अत्रोदाहरणद्वये कविसमयमुपदिशति — संहि[3]तां नेत्यादि ।

अश्लीलं दर्शयति — वेगादुड्डी[6]येत्यादि । अत्र 'डुड्डी' 'चिंकु' इति च कश्मीरादिभाषापेक्षया, 'रण्डे'ति तु संस्कृतापेक्षयाप्यश्लीलत्वम् ।

साहित्यचूडामणिः

संहितां न करोमीति कामचारः सकृदपि दोषः । यथा—तानि इन्दोरिति । विसन्धिवशादसाधुत्वप्रसङ्गश्च । प्रगृह्यादिनिबन्धनत्वे पुनरसकृत् । यथा—धीदोर्बले इत्यादि । सकृत्तु न दोषः । यथा— "समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे" इति ।

१ 'त्ते', २. 'ता' ख. पाठः. ३. 'दि । वे' ख. ग. पाठः. ४. 'विं' क. ख. घ. पाठः. ५. 'च क्वचिदिति क', ६. 'ति सं' ख. पाठः. ७. 'त्वम् । उ' ग. पाठः.

* 'षु' इति मूलकोशपाठः.

अत्र सन्धावश्लीलता ।

> उर्व्यसावत्र तर्वाली मर्वन्ते[1] चार्वत्रस्थितिः ।
> नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥

हतं* लक्षणानुसरणेऽप्यश्रव्यम्[2], अप्राप्तगुरुभावान्तलघु, रसाननुगुणं च वृत्तं यत्र । क्रमेणोदाहरणम् —

> अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
> मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
> सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
> वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥

सम्प्रदायप्रकाशिनी

कष्टत्वं दर्शयति — उर्व्यसाविति । अत्र हि सन्धेरेव कष्टता ।

हतवृत्तं त्रिधाह[3] — हतं लक्षणेत्यादि ।

अमृतममृतमिति । अत्र स्वादुशब्दस्य त्र्यक्षरत्वात् मध्ये अयतेरभ्यनुज्ञानेऽप्यश्रव्यता[4] ।

साहित्यचूडामणिः

सन्धावश्लीलतेति । सन्धिरत्र पदयोर्मिथः संश्लेषमात्रं, न तु शास्त्रीया संहिता ।

उर्वीति । अत्र देशे ऋजु सरलं कृत्वा गन्तुं न युज्यते ।

हतवृत्तेऽपि त्रैविध्यमाह — हतमिति । सर्वत्र हतिरपकर्षः । शास्त्रानुधावनेऽप्यश्रव्यं वृत्तं यत्र तदेकम् । अन्तश्चायं लघुश्च अन्तलघुः । अप्राप्तं गुरुत्वं येन स तथोक्तः । तादृगन्तलघुपर्यन्तं द्वितीयम् । पादान्तवृत्तीनां 'वा पादान्त' इति नीत्या गुरुत्वं विभाषितम् । तथापि यत्र तेषां गुरुत्वं नास्ति तद् दुष्टम् । रसाननुगुणं वृत्तं यत्र तत् तृतीयम् ।

अमृतमिति । नान्यथा मधून्येव । रसान्तरविद् रसतारतम्यवेदी । यदिहान्यदित्येतद्यतिभङ्गे स्वरसन्धौ कृते सवर्णदीर्घलक्षणानुसरणेऽपि न श्रव्यत्वम् ।

१. 'ते', २. 'श्रा' क. पाठः. ३. 'धा उपदर्शयितुमाह', ४. 'त्वम्' ख. पाठः. ५. 'श्रा' क. घ. पाठः.

* 'हतवृत्तं ल' इति मूलकोशपाठः.

अत्र यदिहान्यत् स्वादु स्याद् इत्यश्रव्यम्। यथावा —

जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण।

अह णवर जस्स दोसो पडिवक्खेहिं पि पडिवण्णो॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ।

विकसितसहकारतारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः।

नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः॥

अत्र 'हारिप्रमुदितसौरभे'ति पाठो युक्तः। यथावा —

---

सम्प्रदायप्रकाशिनी

एतदेव (गु१ग)णापेक्षयोदाहरति — जं परिहरिउमिति।

यत् परिहर्तुं शक्यते मनागपि न सुन्दरत्वगुणेन।

अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः॥

सौन्दर्यगुणैः परिहर्तुमशक्यत्वात् प्रतिपक्षा अपि यस्य दोषमन्वमंसतेति मन्मथोपवर्णनमिदम्। अत्र द्वितीयतृतीयगणयोः सकारभकारत्वाद् यदेतद् वृत्तवैरूप्यं, तदन्यथात्वे तु या रुचिरता, तत्र सचेतसां प्रतीतिरेव निष्कर्षनिकषः।

विकासितेति।

अत्र 'वा पादान्त' इति गुरुत्वाभ्यनुज्ञानेऽपि वैरूप्यमेवेति पाठान्तरं दर्शयति — अत्र हारिप्रमुदितेति।

साहित्यचूडामणिः

प्रकारान्तरादुदाहरति — जं परीति। यः[3] सौन्दर्यगुणेन हेतुना परिहर्तुं[4] न शक्यते न पार्यते। यमिति द्वितीयया निर्देशः प्राकृतत्वात्। किञ्च यत्सम्बन्ध्य[5]पि दोष एव स च शत्रुभिरपि[7] प्रतिपन्नः। दोषान्वेषिणो हि शत्रवः। अत्र हरिउं इति सकारः अन्तगुरुत्वात्। तीरइ इति भकारः आदिगुरुत्वाद्। एवमार्यायां गणद्वययोगः शास्त्रसिद्धः अप्रतिषेधात्। अश्रव्यत्वं पुनर्दोषः। सकारभकारयोरेकतरस्य द्विगुणत्वा[8]पत्तौ श्रव्यत्वसंभवो वृत्तस्य। यत्र[10] न संरम्भः कवेः।

हारीति। पादान्तलघोरिकारस्य गौरवेण भाव्यं, तथाच कवेर्न संरम्भइति वृत्तहतिः। 'हारिप्रमुदिते'ति पाठे 'संयोगे गुरु'(१.४.११) इति गुरुत्वलाभः।

---

१. 'र' ग. पाठः. २. 'ष निष्कर्षः। वि' क. घ. पाठः. ३. 'यतः सौ' घ. पाठः. ४. 'तुं न पा' क. ख. ग. पाठः. ५. 'दि' क. पाठः. ६. 'न्ध्यप्रतिपदो', ७. 'पि न प्र' घ. पाठः. ८. 'गु' क. ख. पाठः. ९. 'स्या' क. पाठः. १०. 'त्र सं' घ. पाठः.

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥

अत्र 'अस्त्राणि वस्त्राण्यपी'ति पाठे लघुरपि गुरुत्वं भजते ।

हा नृप! हा बुध! हा कविबन्धो!
वीरसहस्रसमाश्रय! देव! ।
मुग्ध! विदग्ध! सभान्तररत्न!
क्वासि गतः क्व वयं च तवेते ॥

हास्यरसव्यञ्जकमेतद् वृत्तम् ।

न्यूनपदं यथा—

---

**सम्प्रदायप्रकाशिनी**

अन्त्यपादगतत्वेन दर्शयति—अन्यास्ता इति । अत्र 'वस्त्राणि चेति लघुनि परिसमाप्त्या धावतः सन्दर्भस्य स्खलनमिव प्रती'-यते । 'वस्त्राण्यपी'ति[1] पाठे तु मात्राधिक्याद् विलम्ब्य[2] परिसमाप्तौ प्रतीयते गुरुत्वम् ।

रसाननुगुणत्वं दर्शयति—हा नृपेति । अत्र हि[3] यतिविच्छित्ति[4]-वशाद् विदूषकनृत्तार्हता प्रतीयते, न करुणाङ्गता ।

साहित्यचूडामणिः

अन्या इति । मृदुपादानकारणम् । अत्र चतुर्थपादस्याप्राप्तगुरुभावान्त-लघुत्वं[5] दोषः । 'वस्त्राण्यपी'ति पाठे लघुरपि[6] पूर्वाक्षरस्य[7] संयुक्तत्वादुपश्लेहन्यायेन गुरुत्वमसदपि प्रतीतिसंवादादवलम्बते ।

हास्येति । नतु करुणोचितम् ।

पदशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वाद् न्यूनपदादीनि त्रीणि दुष्टानि ।

---

१. 'ति । स तु पाठे मा', २. 'प्यो', ३. 'हि वि' क. घ. पाठः. ४. 'तिवैकज्व्य' ग. पाठः. ५. 'लं', ६. 'रपू', ७. 'स्य यु' घ. पाठः.

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥

अत्रास्माभिरिति, खिन्ने इत्यस्मात् पूर्वमित्थमिति च ।

अधिकपदं यथा —

स्फटिकाकृतिनिर्मलः प्रकामं
प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अनिरुद्धसमन्वितोक्तियुक्तिः
प्रतिमल्लास्तमयोदयः स कोऽपि ॥

अत्राकृतिशब्दः । यथावा —

---

सम्प्रदायप्रकाशिनी

**तथाभूतामिति ।**
**पदद्वयस्य न्यूनतां दर्शयति — अत्रास्माभिरित्यादि ।**
**स्फटिकाकृतीति । अत्राकृतिपदमधिकम् ।**

साहित्यचूडामणिः

**तथाभूतेति** । अत्रास्माभिरिति पदं न्यूनं, वल्कलधैररिति विशेषणस्य वैयर्थ्यप्रसङ्गात् । इत्थमिति च न्यूनं, वाक्यावयवभूतत्वात् ।

तस्य स्थानं निश्चिनोति — **खिन्न** इति । नचैतदनभिहितवाच्यं, तस्य पदोपस्कारगोचरतया समर्थयिष्यमाणत्वाद्, अधिकपदस्य च निर्दोषत्वप्रसङ्गात् ।

**स्फटिकेति** । निर्मल इत्येतावतैव वाक्यं पूर्णम् । आकृतिशब्द उपलक्षणं, तेन प्रकाममिति प्रतीति तत्त्व इति युक्तिरिति उदय इति च पदानामवकरतैव शरणम् ।

इदमनुचितमक्रमश्च पुंसां
यदिह जरत्स्वपि मान्मथो विकारः।
यदपिच न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा॥

अत्र कृतमिति। कृतं प्रत्युत क्रमभङ्गमावहति। तथाच 'यदपिच न कुरङ्गलोचनानामि'ति पाठे निराकाङ्क्षैव प्रतीतिः।

कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला
परिमलननिमीलत्पाण्डिमा गण्डपाली।

---

सम्प्रदायप्रकाशिनी

न्यासेऽप्याधिक्यं दर्शयति—इदमनुचितमिति।

अत्र कृतमित्येतस्य न केवलमाधिक्यं, यावता दोषान्तरहेतुत्वं चेत्याह—अत्र कृतमित्यादि। तदप्रयोगे तूभयथापि निरामयत्वमिति पाठान्तरं दर्शयति—यदपिच न कुरङ्गेति।

कथितपदं पुनरुक्तपदम्।

अधिकरतलेति। अत्र द्वितीयलीलापदं कथितम्।

साहित्यचूडामणिः

इदमिति। अनौचित्यं जरत्सु स्त्रीणां भावबन्धानुपपत्तेः। अक्रमत्वं लोकगर्हितत्वात्। एवमुत्तरत्रापि। कृतमिति यत् प्रयुक्तं तदधिकं, पूर्वार्धे तथानुक्तेः।

प्रसङ्गाद् वक्ष्यमाणदोषान्तरमाह—प्रत्युतेति। तथाचेति। वाक्ये न्यूनत्वमिव पदस्याधिक्यमपि वैयाकुल्यं प्रयोजयति। पूर्वत्र प्रतीतिः साकाङ्क्षा, अत्रतु पाठे न तथा। अपि चेति निपातद्वयं क्लिष्टम्। तस्माद् 'यदपि न मृगशावलोचनानामि'ति पाठः श्रेयान्।

कथितं प्राक् प्रयुक्तं पदं यत्र।

अधीति। अत्र लीलेति पदं कथितं द्विः प्रयुक्तम्। उक्तञ्च—'नैकं

---

१. 'स्य' ख. पाठः. २. 'मि' क पाठः. ३. 'सेनापि पदाधि' ग. पाठः. ४. 'भिन्नत्वमितीव प' घ. पाठः.

सुतनु! कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिर्लीलायौवराज्याभिषेकम् ॥

अत्र लीलेति ।

पतत्प्रकर्षं यथा —

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत् सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥

समाप्तपुनरात्तं यथा —

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।

---

सम्प्रदायप्रकाशिनी

कः कः कुत्रेति । घुरी सूकरगर्जा । अत्र करिमाहिषसूकरवृत्ता-न्तानां क्रमोपस्थितावेत्र[1] सिंहीस्नेहे[2]प्रकर्षो[3] युक्तः[4] इति वैपरीत्यं पातः ।

क्रेङ्कार इति । अत्र तनोतु व इति समाप्तमपि वाक्यं नववय इत्यादिना पुनरुपात्तम् ।

साहित्यचूडामणिः

पदं द्विः प्रयोज्यं प्रायेणे'ति । 'स्मरनरपतिलक्ष्मी'ति पाठः श्रेयान् ।

पतन् पदात् पदमवरोहन् प्रकर्षो बन्धच्छाया यस्य ।

घुर्घुरायितं शब्दानुकारः । घुरी वाद्यविशेषः । सर्वोऽपि सूकरः करी महिषो वा सर्वत्र संक्षोभं कर्तुं क्षमः । अत्र विकटाक्षरत्वरूपः प्रकर्षश्चरणाच्चर-णमवरोहति । एवमर्थौज्ज्वल्यलक्षणस्यापि प्रकर्षस्य पातोऽनुसन्धेयः । यथा 'लीनेव प्रतिबिम्बितेव लिखितेवे'त्यादि । अत्रोपर्युपरि निश्चमत्कारत्वमौपम्यस्य सचेतोभिरनुचिन्त्यम् ।

समाप्तेति । संपूर्णमपि भूयः स्वीकृतम् ।

---

१. 'मावस्थि' क. ख. घ. पाठः. २. 'हः न प्र' क. घ. पाठः. ३. 'र्षः इ' ख., 'र्षयु' ग. पाठः. ४. 'क्तः प्रकट इति' क. घ. पाठः.

तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-

क्काणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥

द्वितीयार्धगतैकवाचकशेषं प्रथमार्धं यथा —

मसृणचरणपातं गम्यतां भूः सदर्भा

विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।

तदिति जनकपुत्री लोचनैरश्रुपूर्णैः

पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥

---

सम्प्रदायप्रकाशिनी

अर्धान्तरैकवाचकमवयवशो निर्भुवन्नुदाहरति — द्वितीयार्धेति । एक एव वाचकैशेषो[1] द्वितीयार्धगतो यस्य ।

मसृणचरणेति । अत्र यतः सदर्भा[2] तन्मसृणं गम्यतामित्यन्वयः[3] । प्रथमार्धगतैकवाचकमप्यनेन न्यायेन द्रष्टव्यम् । 'नार्धे किञ्चि*त्समासवाक्यं दुष्टम्' इति वामनः ।

साहित्यचूडामणिः

क्वङ्कार इति । तन्व्याः कञ्चुलिकापसारणे यद् दोर्लताविल्लनं तेन स्खलतः कङ्कणस्य क्काण इति विशेष्यं पदम् । अत्र प्रेम तनोतु व इत्येतावति श्रोतॄणां चित्तं विश्राम्यति । तथापि नववय इत्यादि यद् भूयो विशेषणं तन्न चमत्काराय ।

अर्धान्तरैकवाचकं द्विधा विभज्योदाहरति — द्वितीयेति । अर्धान्तरमन्यदर्धं तत्रासहायं पदं यस्य । यथाह — 'नार्धे किञ्चिद्वाक्यं समाप्तमि'ति । तद् द्विधा द्वितीयार्धगतैकवाचकं प्रथमार्धं, विपरीतं च । तत्र प्रथमं यथेति यावत् तदिति । यतो भूः सदर्भा तस्मान्मसृणचरणपातं गम्यतामिति । अत्र तदिति पदं पूर्वार्धैकशेषम् उत्तरार्धारम्भे सार्थभ्रष्टस्तनन्वयन्यायेनास्ते । विपरीतं यथा ममैव —

---

१. 'कविशे' ख. ग. पाठः. २. 'र्भता त' ग. पाठः. ३. 'यः । अभ' क. ख. घ. पाठः.

---

* 'दसमाप्तप्रायं वाक्यम्' (५. १. ६) इति मुद्रितपुस्तकपाठः.

अभवन् मत इष्टो योगः सम्बन्धो यत्र । यथा —

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ॥

अत्र 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वये यैरित्यत्र

---

सम्प्रदायप्रकाशिनी

अभवन्मतयोगं निर्वक्ति — अभवन्निति ।

येषां ता इति[1] । अत्र क्षपाचारिणामिति विशेष्यम्[2] ।

गुणवाक्यान्वयि गुणवाक्यान्तरेण[3] न समन्वयमर्हतीति न्यायतो दर्शयति — गुणानां चेत्यादि । परार्थत्वं समत्वं चासम्बन्धहेतुः । अनया नीत्या यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वये 'यैः पानभुवः कल्पिता' इति वाक्ये यैरित्यस्य किं विशेष्यमस्तु । प्रधान-

साहित्यचूडामणिः

वक्षःस्थलं मुकुन्दस्य कौस्तुभाङ्कं कपर्दिनः ।
चूडाङ्को बालचन्द्रेण जटाजूटश्च पातु वः ॥

इति । अत्र पूर्वार्धगतैकवाचकमुत्तरार्धम् ।

अभवन्निति । अभवन् अविद्यमानः इष्टः सम्बन्धो यत्र ।

येषां क्षपाचारिणामिति सर्वत्रान्वयः कार्यः । यदेतन्मध्ये यैरित्युक्तं तद्वाक्यशेष(ः ?) विशेष्यस्याप्रतीतेः षष्ठीतृतीययोः सम्बन्धः समान इति कवेरिच्छा तयोर्वाक्यार्थं घटयति ।

संवादपूर्वकं व्याचष्टे—अत्रेति । 'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति' इत्यत्र गुणानामारुण्यादीनां क्रयणार्थतया सम्ब(न्धत्वा ? न्धा)-दन्योन्यमन्वयो नास्तीति न्यायेन विशेष्यद्वारा वाक्यार्थपर्यवसायिनां यच्छब्द-

---

१. 'षामाकृत' ख. पाठः. २. 'ते विशेषः वि' क. घ. पाठः. ३. 'यी' ख. पाठः. ४. 'ण स' क. घ. पाठः. ५. 'रस' क. ख. घ. पाठः.

विशेष्यस्याप्रतीतिरिति । 'क्षपाचारिभिरि'तिपाठे युज्यते समन्वयः । यथावा —

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि[1] द्वन्द्वं दिष्ट्या तदिह सुभगे! संवदति वा-
मतः शेषं यत् स्याज्जितमिह तदानीं गुणितया ॥

अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति । 'चेत् स्यादि'ति युक्तः पाठः । यथावा—

सम्प्रदायप्रकाशिनी

वाक्यान्वयिनि तु विशेष्ये गुणवाक्येषु विशेष्यप्रतीतिः स्वारस्येन[2] जायत इति पाठमन्यथा दर्शयति — क्षपाचारिभिरित्यादि ।

**त्वमेव मिति** । अत्र हि यच्छेषं तच्चेत् स्यादिति योगो मतः ।

**तन्न भवतीति दर्शयति—अत्र यदित्यत्र तदिति तदानीमित्यादि** । इह न्यूनपदत्वभ्रमो मा भूदिति पाठमन्यथयति — **चेत् स्यादिति** । इदं यत्तद्वृत्तनैरपेक्ष्येण[3] दर्शितम् ।

साहित्यचूडामणिः

निर्देश्यानां विशेषणार्थानामन्वयस्याभावे क्षपाचारिणामित्येतद् येषामित्यनेन सम्बध्यते, नतु यैरित्यनेनापि । अत्र विशेष्यस्याप्रतिपत्तिः । 'क्षपाचारिभिरि'ति पाठे क्षपाचारिशब्दो गुणकक्ष्यामतिक्रम्य वाक्यार्थकोटिमध्यारोहति । तत्रास्य शाब्दः समन्वयः, गुणवाक्येषु पुनरार्थः, यथा पूर्वपाठे गुणवाक्येषु शाब्दः, प्रधानवाक्ये[4] त्वार्थः ।

त्वमिति । एवंसौन्दर्या अनपह्नवनीयाभिरूप्या । अतश्शेषं यदित्यत्र यद्वृत्तस्य तद्वृत्तं नास्ति । तदानींपदस्य वा यद्वृत्तं नास्ति इत्युभयतः पाशा रज्जुः ।

**चेत् स्यादिति** । यद्वृत्तस्थाने चेच्छब्दो निवेशनीयः । येन तदानींशब्दस्य नैराकाङ्क्ष्यम् ।

१. 'यि' क. पाठः. २. 'स्ये जा', ३. 'सद्वृ' क. घ, पाठः. ४. 'प्रथमवा' घ. पाठः.

सङ्ग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
 देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
 तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥

अत्राकर्णनक्रियाकर्मत्वे 'कोदण्डं शराने'त्यादि, वाक्यार्थस्य कर्मत्वे 'कोदण्डः शरा' इत्यादि प्राप्तम् । नच यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि । नच केन केनेत्यादिप्रश्नः ।

सम्प्रदायप्रकाशिनी

**सङ्ग्रामाङ्गणे**ति । अत्राकर्णनक्रियां प्रति कोदण्डादेः प्रत्येकं कर्मता, उत तदेतदाकर्णयेति वाक्यार्थस्यैव कर्मता । न तावदाद्यः, कोदण्डं शरान् इत्यप्रयोगात् । नापि द्वितीयः, कोदण्डः शरा इत्यप्रयोगात् ।

ननु[३] नोभयमपि, अपितु यद्यदिति प्रधानार्थपरामर्शिनो यच्छब्दस्यार्थ एव कोदण्डादिरित्यत आह — **नच यच्छब्दार्थ** इति[४] । कोदण्डेनेत्यादितृतीयान्तत्वेन निर्दिष्टस्य तथात्वासम्भवादिति भावः । तर्हि येन येनेति यच्छब्दार्थविशेषणमस्त्वित्यत आह — **तद्विशेषणं वे**ति । येन येनेत्यनेन रूपेण विशेषणत्वमपि न सङ्गच्छते, शरा इति[६] प्रथमान्ततयाँ निर्देशेन वैयधिकरण्यादिति भावः । ननु येन येन यद्यदासादितमिति सामान्योपक्रमे[८] केन केनेत्यादिप्रश्नोत्तरत्वेन विशेषा-

साहित्यचूडामणिः

**सङ्ग्रामे**ति ।

आकर्णनक्रियायाः किं कोदण्डादिपदार्थः कर्म, उत वाक्यार्थः । आद्ये दोषमाह — **कोदण्डमित्यादि** । कोदण्डं शरानित्यादिक्रमेण द्वितीया युक्ता नतु युक्ता कोदण्डेन शरैरेति तृतीयापि । द्वितीये दोषमाह — **वाक्यार्थस्ये**ति । कोदण्डः शरा इत्यादिक्रमेण सर्वत्र प्रथमाया

१. 'द्या' क. घ. पाठः. २. 'तूभ', ३. 'पीति अ', ४. 'ति । तृ' क. ख. घ. पाठः. ५. 'न्तस्य त' ख. ग. पाठः. ६. 'ति तु प्र' क. घ. पाठः. ७. 'या वै', ८. 'मे विशेषानुप्रयोगमर्हतीति के' क. ख. घ. पाठः. ९. 'सर्वत्र द्वि' घ. पाठः.

यथावा—'चापाचार्यस्त्रिपुरविजयी' इत्यादि[1] । अत्र भार्गवस्य निन्दायां तात्पर्यम् । 'कृतवते'ति परशौ सा प्रतीयते । 'कृतवत' इति पाठे मतयोगो भवति । यथावा—

> चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
> सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
> कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
> राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

सम्प्रदायप्रकाशिनी

नुप्रयोग[2]रूप उत्तरवाक्यार्थ[3] इत्यत आह—नन्व केन केनेत्यादि । विशेषजिज्ञासोत्थापकप्रश्नाभावादित्थमप्यनुपपत्तिरिति यावत् ।

चापाचार्य इति । अत्र[4] प्रकृतानुसन्धानाद् दुष्टत्वमिति दर्शयति—भार्गवस्येत्यादि ।

चत्वार इति ।

साहित्यचूडामणिः

एवौचित्यम् । अविभक्तिकत्वपरित्यागे सौशब्द्यमात्रस्य साध्यत्वात् । एवमभिहितः[6] सम्बन्धो न संभवति । किञ्च पूर्वार्धवर्तिभ्यां यद्वृत्ताभ्यामुत्तरार्धस्थानां कोदण्डादीनां विशेष्यतया विशेषणतया चान्वयो न घटत इत्याह—नचेति । ननु केन केनेत्यादिप्रश्नद्वारा उत्तरार्धस्यान्वय इति चेन्नेत्याह—नचेति ।

भार्गवस्येति । प्रहरणवतो निन्दायां चेत् तात्पर्यम् उक्तेऽत्रैव तदवश्यम(न्योऽयं न? न्व)यः न प्रहरणे वैयधिकरण्येन वैरस्यप्रसङ्गात् । अतः कृतवत इति षष्ठ्यन्तः पाठः यत्र मतयोगः स्यात् ।

सङ्ग्रामाध्वरेत्यादिसमासकर्दमनिर्मग्नस्याध्वरपदस्य योऽर्थस्तस्य सर्वैः

१. 'दि भा' क. पाठः. २. 'ग इ' ग. पाठः. ३. 'र्थः तेनेत्यादिप्रश्नोत्तरत्वेन विशेषानुप्रयोग इ' क. घ. पाठः. ४. 'त्र कृ' ख. ग. पाठः. ५. 'तानु' ख. पाठः. ६. 'मतस', ७. 'रस्तस्य' घ. पाठः.

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते ।

तथा— 'जङ्घाकाण्डोरुनाल' इत्यादि ।

अत्र दण्डपादगता निजतनुः प्रतीयते । भवानीसम्बन्धिनी तु विवक्षिता ।

अवश्यवक्तव्यमनुक्तं यत्र । यथा—

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैर्मम हृतस्य तथापि नास्था ।

---

सम्प्रदायप्रकाशिनी

अत्राङ्गानां प्रधानसमन्वयासम्भवान्मतयोगाभावं दर्शयति—**अत्राध्वरशब्द** इत्यादि ।

**जङ्घाकाण्डे**ति । अत्र निजतनुशब्दस्य पादविशेषणत्वस्य प्रतीतेः[२] भवानीयोगो न भवतीत्याह—**अत्र दण्डपादे**त्यादि ।

अनभिहितवाच्यं निर्वक्ति—**अवश्यवक्तव्यमि**ति[३] । अवश्येति ण्यदर्थोद्घाटनम् ।

**अप्राकृतस्ये**ति ।

साहित्यचूडामणिः

ऋत्विगादिभिः सम्बन्धो न घटत इति विधेयाविमर्शव्यतिरिक्तोऽयं दोषः । शुद्धे तत्र सङ्ग्रामाध्वरशब्दस्यैव दुष्टत्वम्, अत्र पुनः ऋत्विगादेरपीति विवेकः ।

भवानीसम्बन्धिनीति । निजतन्वित्यादौ भवान्याः पाद इत्यनयोः प्रधानेन पादेनैव निजशब्दस्यान्वयो न्याय्यः । गुणोभूतयापि भवान्या समन्वय इति कविविवक्षा । एवञ्च मतयोगो न स्यात् ।

अवश्येत्यनभिहितवाच्यमित्यस्य व्याख्या ।

अप्राकृतेति । लोकोत्तरस्य पौलस्त्यस्य चरितातिशयैः कैलासचालनादिभिः । कोऽप्येष इति रामं प्रत्युक्तिः । अप्रमेयानामाचिन्तनीयानां माहात्म्य-

---

१. 'णस्य' ख. ग. पाठः, २. 'तेरतो भ' क. ख. घ., 'तो भ', ३. 'ति । अप्रा' ग. पाठः.

कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥

अत्रापहृतोऽस्मीत्यपहृतत्वस्य विधिर्वाच्यः, तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः[1] । यथावा —

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप्य-
लक्ष्मीफलामसुरराजसुतां विधाय ॥

अत्र मनोरथानामपि दूरवर्तीति अप्यर्थो वाच्यः । यथाच —

सम्प्रदायप्रकाशिनी

वाच्यानभिधानं दर्शयति — अत्रापहृतोऽस्मीति । कथं विधेरवश्यवक्तव्यतेत्यत आह — तथापीत्यस्येति ।

एषोऽहमिति । इयमुप[2]रचितोषानिरुद्धघटनासन्तुष्टस्य मन्मथस्योक्तिः ।

अत्र वाच्य[3]स्यानभिधानमव्ययनिष्ठतया दर्शयति — अत्र मनोरथानामपीत्यादि ।

साहित्यचूडामणिः

साराणां महानुभावतासम्बन्धिनाम् उत्कृष्टांशानां यः समुदायः तत्प्र[4]कृत इति ।

अपहृतोऽस्मीति पृथग्वाक्यं कार्यम्, अन्यथा तस्य विधेरनुक्तत्वात् । एकवाक्यतायामपिशब्दस्यौचित्यं नतु तथापीतिनिपातसमुदायस्य ।

एष इति ।

अप्यर्थोऽपिशब्दस्यार्थो वाच्यः । सच तत्प्रयोगादृते न स्यात् । मनोरथानामपि दूरवर्तीति वक्तव्यत्वात् ।

---

१. 'त्वेनोप' क. पाठः. २. 'पचरितो' ग. पाठः. ३. 'च्यान' ख. ग. पाठः. ४. 'त्प्रा' घ. पाठः.

त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि
त्यजसि मानिनि! दासजनं यतः ॥

अत्रापराधस्य लवमपीति वाच्यम् ।

अस्थानस्थपदं यथा—

प्रियेण संग्रथ्य विपक्षसन्निधौ
निवेशितां वक्षसि पीवरस्तने ।
स्रजं न काचिद् विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥

---

सम्प्रदायप्रकाशिनी

**त्वयि निबद्धेति ।** अत्रा[1]प्यव्ययस्यैव प्रकारान्तरेणाभिधानम् । इतरथा पूर्णानपराधान् पश्यसीत्यपि स्यात् ।

**प्रियेणेति ।**

साहित्यचूडामणिः

**अपराधस्य लवमपीति ।** पूर्ववदप्यर्थस्य वाच्यत्वम्, इतरथा स्थूलो ममापराधो नेक्षित इत्यनौचित्यापातात् । [2]नैतन्न्यूनपदं, प्रधानपदस्य न्यूनत्वाभावात् । यावन्निपातस्यात्राप्रयोगः । अप्राकृतस्येत्यादौ सोऽपि पठ्यते । केवलमेकवाक्यताकरणं दोषः ।

**अस्थानेति ।** अपदस्थपदमपदस्थसमासं चेति द्वे । पदशब्दः स्थानवाची ।

तत्राद्यं यथा—**प्रियेणेति ।** पीवरस्तने अन्यथा सपत्नीनामसूयानौचित्यात् । अत्र हानक्रिया निषेध्या येन तदुपरागेण भाव्यं नका[3]रस्य । द्विविधं

---

१. 'त्र विभक्तेरव्ययस्य चान' क. ख. घ. पाठः. २. 'नैव त' घ. पाठः. ३. 'रेण । द्वि' क. ख. पाठः.

अत्र 'काचिन्न विजहावि'ति वाच्यम्। यथावा —

सम्प्रदायप्रकाशिनी

अस्थानस्थपदत्वं दर्शयति — अत्र काचिन्न विजहाविति[2]।
'न काचिदि'ति तूक्ते सर्वा[3] जहुरिति स्यात्।

साहित्यचूडामणिः

विशेषणमिष्टमन्तरङ्गं बहिरङ्गं च। तत्राद्यमव्यवहितम् अर्थक्रियाकारि च लाक्षादिवत् स्फटिकादेः। द्वितीयमुभयरूपम् अयस्कान्तमिव लोहस्य। तद्धि व्यवहितमपि लोहे स्वां शक्तिमुपदधाति। विशेष्यमपि द्विविधं धात्वर्थो नामार्थश्चेति। ततश्च नकारस्य जहावित्येतस्य सन्निकर्षेण भाव्यम्। यदि च क्रमविलङ्घनादन्वयः, तथापि शब्दवृत्तविपर्यासाद् वाच्यावस्थापरिस्खलच्चेतसां सचेतसां रसास्वादप्रत्यूहः। तदुक्तं—

"विशेषणं हि द्विविधमान्तरं बाह्यमेव च।
तत्राव्यवहितं यद्यदर्थकारि तदान्तरम्॥

स्फटिकस्येव लाक्षादि द्वितीयमुभयात्मकम्।
आयसस्येव तत्कान्तं तदपि द्विविधं मतम्॥

असमानसमानाधिकरणत्वविभेदतः।
विशेष्योऽपि द्विधा ज्ञेयो धातुनामार्थभेदतः॥

अतएव व्यवहितैर्बुधा नेच्छन्ति चादिभिः।
सम्बन्धं ते हि शक्तिं स्वामुपदध्युरनन्तरे॥

ततश्चार्थासमञ्जस्यादनौचित्यं प्रसज्यते।"

इति। इत्थं च न काचिद् विजहौ सर्वा एव विजहुरिति वाक्यार्थस्यासमञ्जसत्वप्रसङ्गः।

१ 'न्न ज' क. ग. पाठः. २. 'ति। का' ग. पाठः. ३. 'र्वा नज' क. घ. पाठः. ४. 'न्त इव', ५. 'तलो', ६. 'ब्दे', ७. 'सम्यगर्थ' क. ख. पाठः.

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥

अत्र 'नखलक्ष्मे'त्यतः पूर्वं 'कुटिलाताम्रे'ति वाच्यम् ।

अस्थानस्थसमासं यथा —

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणो-
त्फुल्लत्कैरवकोशनिस्सरदलिश्रेणीकृपाणं शशी ॥

---

सम्प्रदायप्रकाशिनी

लग्न इति । श्लथजटालम्बेनेन्दुशकलेन कपोले लग्नः इन्दुकला-मुद्रारूपोऽङ्कः पायादित्यन्वयः ।

अत्र कुटिलाताम्रेत्येतद् नखलक्ष्मशङ्काहेतुत्वेन ततोऽर्वागुपादेय-मित्याह — अत्र नखलक्ष्मेत्यादि ।

अथापदस्थसमासम् — अद्यापि स्तनेति । अत्र यत्र क्रोधः न तत्र समासः कृतः, अन्यत्र तु कृत इत्यपदस्थसमासता ।

साहित्यचूडामणिः

लग्न इति । पार्वतीकपोले हरशिरश्चन्द्रशकलमुद्राङ्कं प्रति सखीनां नख-लक्ष्मशङ्कायां यत् कारणं कुटिलाताम्रच्छवित्वं तन्नखलक्ष्मेत्यतः प्राग् वक्तव्यं, कार्योत्प(त्तिक ? त्तेः प)रं कारणोपन्यासस्य वैयर्थ्यात् ।

अस्थानेति । न खलु समासः कवीनां कामचारेण ।

(अद्यापीति ।) शशिनो मानस्य च नायकप्रतिनायकत्वसमाधिः ।

---

१. 'हे' क. पाठः. २. 'बन्धेने' ग. पाठः. ३. 'पा' क. घ. पाठः. ४. 'त्यत आह' ख. ग. पाठः. ५. 'दि । अद्या' ग. पाठः. ६. 'त्र इ' क. घ. पाठः.

अत्र क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृतः ।

सङ्कीर्णं, यत्र वाक्यान्तरपदानि वाक्यान्तरेऽनुप्रविशन्ति । यथा —

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि । इमं कण्ठे गृहाण । मनसस्तमोरूपं कोपं मुञ्च । एकवाक्यतायां* तु क्लिष्टमिति भेदः ।

गर्भितं, यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति । यथा —

---

सम्प्रदायप्रकाशिनी

**सङ्कीर्णं निर्वक्ति — यत्र वाक्यान्तरेति ।**

**किमिति न पश्यसीति ।**

**सङ्कीर्णतां दर्शयति — अत्र पादगतमित्यादि । ननु क्लिष्टाद् वाक्यदोषात् कोऽस्य भेद इत्यत आह — एकवाक्यतायां त्विति । पदैकवाक्यतायां क्लिष्टम् ।**

**गर्भितं निर्वक्ति — यत्र वाक्ये[२]ति ।**

साहित्यचूडामणिः

**क्रुद्धस्येति** । शशिनो बुद्धिरुत्प्रेक्ष्या । तस्य च क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृत इति समासस्यास्थानस्थत्वम् ।

**किमितीति** । मानिनीमानव्युदासाय सख्या उक्तिः ।

विवक्षितमन्वयमुपदर्शयति — **अत्रेति** । एतेन यथा[३]निर्दिष्टस्यान्वयस्य संकीर्णतया दुष्टत्वं स्पष्टीकृतम् । क्लिष्टाद् वाक्यादस्य भेदमाह — **एकेति** ।

---

१. 'तः । स' क. पाठः. २. 'क्ये गर्भिति' ग. पाठः. ३. 'थादर्शितस्य नि' घ. पाठः.

---

* 'यां क्लि' इति मूलकोशपाठः.

परापवादनिरतैर्दुर्जनैः सह सङ्गतिः ।

वदामि भवतस्तत्त्वं न विधेया कदाचन ॥

अत्र तृतीयपादो वाक्यान्तरमध्येऽनुप्रविष्टः । यथावा—

लग्नं रागावृताङ्ग्या सुदृढमिह यथैवासियष्ट्यारिकण्ठे

मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।

तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता

भृत्येभ्यः श्रीनियोगाद् गदितुमिति[1] गतेवाम्बुधिं यस्य

[कीर्त्तिः ॥

अत्र 'विदितं तेऽस्त्वि'ति । एतत् कृतं प्रत्युत लक्ष्मी-स्ततोऽपसरतीति विरुद्धमतिकृत् ।

---

सम्प्रदायप्रकाशिनी

**परा[2]पवादेति** ।

गर्भितत्वं दर्शयति— **अत्र तृतीयेति** ।

**लग्नं रागेति** ।

अत्र गर्भितत्वं दोषान्तरानुवर्त्तीति दर्शयति— **एतत् कृतं प्रत्युतेति** ।

साहित्यचूडामणिः

**तृतीयपाद** इति । वदामीत्यादिवाक्यान्तरं स्वतन्त्रं वाक्यं भूत्वानुप्रविष्टं वाक्यार्थप्रतीतिमकाण्डे खण्डयितुं प्रवृत्तम् ।

**लग्नमिति** । रागो रुधिरं स्नेहश्च । मातङ्गाः कुञ्जरा नीचजातयश्च । विदितमित्यादिवाक्यं महावाक्यमध्ये तदर्थप्रतीतिं खण्डयदुक्तम् । प्रसङ्गाद् दोषान्तरमप्याह— **प्रत्युतेति** । पूत्कुर्वाणाया इव श्रियो वचनेन सा वर्णनी-यापसरतीति विरुद्धमतिकृत् ।

---

१. 'तै' क. पाठः.　२. 'रोपकारेति',　३. 'बन्धीति' ग. पाठः.

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥

इति प्रसिद्धिमतिक्रान्तम् । यथा —

महाप्रलयमारुतक्षुभितपुष्कलावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वोदयः ॥

अत्र हि रवो मण्डूकादिषु प्रसिद्धः, नतूक्तविशेषणे सिंहनादे ।

भग्नः प्रक्रमः प्रस्तावो यत्र । यथा —

---

सम्प्रदायप्रकाशिनी

अथ प्रसिद्धिधुतं[1] लिलक्षयिषुः प्रसिद्धिप्रकारं वृद्धसंवादेन विवेचयति — **मञ्जीरादिष्विति** ।

**महाप्रलयेति** ।

प्रसिद्धिविरोधं दर्शयति — **मण्डूकादिष्विति**[2] ।

साहित्यचूडामणिः

प्रसिद्धिधुतं व्याख्यातुं प्रसिद्धिं प्रस्तौति — **मञ्जीरादिष्विति** ।

**महाप्रलयेति** । मण्डूकादिक्षुद्रसत्त्वोच्चारणीयस्य रवस्य यथोक्तविशेषणे[3] सिंहनादे प्रयोगानौचित्यात् । एवमन्यदुन्नेयम् । यथा 'त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्त' इत्यत्र मूर्तद्रव्यानुगुणश्रेणिशब्दः ।

**भग्न इति** । सर्वत्र शब्दार्थव्यवहारे लौकिकसरणिरनुसरणीया । लोकश्च मा भूद् रसास्वादपरिम्लानप्रसङ्ग इति यथाप्रक्रममाद्रियते । नान्यथा । स च प्रकृतिप्रत्ययादिभेदादनेकविधः ।

---

१. 'द्ध' क. ख. पाठः. २. 'ति । ना' ग. पाठः. ३. 'षसिं' क. ख. पाठः. ४. 'मुक्तद्' क. ख. ग. पाठः.

**नाथे निशाया नियतेर्नियोगादस्तंगते हन्त निशापि याता।**
**कुलाङ्गनानां हि दशानुरूपं नातःपरं भद्रतरं समस्ति ॥**

**अत्र 'गते'ति प्रक्रान्ते 'याते'ति प्रकृतेः। 'गता निशा-पी'ति युक्तम्। ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इत्यन्यत्र, कथितपदं दुष्टमितीहैव[1] चोक्तेः कथमेकस्य पदस्य द्विः प्रयोगः*। उच्यते। उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एक-**

सम्प्रदायप्रकाशिनी

**अथ भग्नप्रक्रमः— नाथे[2] निशाया इति।**

**प्रस्तावभङ्गं प्रकृत्यंशे दर्शयति — अत्र गतेत्यादि। ननु[3] प-दैक्ये पौनरुक्त्यं किं न स्यादिति चोदयति — ननु नैकं पदमि-त्यादि। अन्यत्र वामनालङ्कारे। परिहरति — उद्देश्येति। येन रूपे-णोद्देशस्तेनैव प्रतिनिर्देशान्नायं पौनरुक्त्यदोष इति यावत्।**

साहित्यचूडामणिः

**नाथ** इति। अत्र पतिमरणमनुमरणं च पत्न्या उद्भाव्यते।

**प्रकृतेरिति**। गत इति गच्छतिरूपा प्रकृतिः प्रस्तुता। तस्या भङ्गः यातेति धात्वन्तरेण निर्देशात्। निष्ठादेरविशेषात् प्रकृतिनिष्ठोऽयं प्रक्रमभङ्गः। गच्छतियात्योरेकस्या एव प्रकृतेरावृत्त्या भाव्यम्। प्रकृत्यन्तर-प्रयोगो दोषः। अत्र पूर्वाचार्यविप्रतिपत्तिं स्वग्रन्थे[4] पौर्वापर्यविरोधं च शङ्कते— **नन्विति**[5]। **अन्यत्रेति**। वामनालङ्कारे यत्र 'नैकं पदमि'ति सूत्रम्। तत्र यत् प्रायेणेत्युक्तं तच्चादिनिपाताभिप्रायेणेति चोद्यम्। **इहैवेति**। स्वग्रन्थ एव। **उक्तेरिति** उक्तत्वात्। [6]अनवीकृतस्य दुष्टतया वक्ष्यमाणत्वाच्चेति भावः। तत्[7] कथमेकस्य पदस्य द्विः प्रयोगः। पदावयवोऽपि पदमेव। प्रक्रमभेदपरिहारार्था आवृत्तिः पौनरुक्त्यमुत्थापयतीति भावः। परिहरति — **उच्यत** इति। पूर्व-

१. 'वोक्तेः' ख. पाठः. २. 'थेति नि' क. घ. पाठः. ३. 'नु नै' ग. पाठः. ४. 'न्थ', ५. 'ति भाववा (?)', ६. 'अविकृ' क. ख. ग. पाठः. ७. 'एकस्येति प' क. ख. पाठः.

* 'गः। उद्दे' इति मूलकोशपाठः.

पदप्रयोगनिषेधस्य । तद्वति तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः । तथाहि —

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥

अत्र 'रक्त एवास्तमेती'ति यदि क्रियेत, तत् पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयैव प्रतिभासमानः प्रतीतिं स्थगयति ।

---

सम्प्रदायप्रकाशिनी

**उक्तार्थदार्ढ्यायोदाहरणान्तरम् — उदेतीति ।**

**यद्यत्र पदान्तरं तदा प्रत्युत दोष इत्याह— अत्र रक्त एवेत्यादि । अर्थान्तरतयैवेति । एकार्थपराणामपि पर्यायपदानां प्रवृत्तिनिमित्तभेदाद् अर्थस्यार्थान्तरतयैव प्रतिभासनम् ।**

साहित्यचूडामणिः

मनुवादेन प्रस्तूयमानमुद्देश्यं, पश्चाच्च विधिनोपयुज्यमानं प्रतिनिर्देश्यं, तत्स्वभावव्यपोहो विषय एकपदप्रयोगनिषेधस्य । तद्वतीति । उद्देश्यप्रतिनिर्देश्यभाववति तु विषये तस्य प्रक्रान्तस्यैव पदस्य, तत्परामर्शिनः सर्वनाम्नो वा प्रयोगमन्तरेण दोषः । उक्तमुदाहरणान्तरेण स्पष्टयति — तथाहीति ।

ताम्ररक्तयोः पर्यायत्वेन भेदाभावभ्रान्त्या रक्त एवास्तमेतीत्युच्येत चेत् तदा भाविनमनर्थमाह — तदिति । आरुण्यलक्षण एवार्थः प्रक्रान्तात् ताम्रपदादन्येन रक्तरूपेण प्रतिपादितः सन्नन्यार्थतयैव प्रतिभासमानो वाक्यार्थविषयां प्रतीतिं तिरोधत्ते । कुतो हेतोः कविरुदये सवितुः प्रक्रान्तं ताम्रत्वं परित्यज्य रक्तत्वमस्तमय उपादत्ते । नूनमनयोः परिमलसौरभादिवत् किञ्चिद् भिन्नार्थत्वमस्तीति प्रतीयेत । तन्निरासार्थोऽयं प्रयासः । तत्रापि नासत्यर्थभेदे शब्दभेदमाद्रियन्ते वक्तार इति युक्त्या पर्यन्ततः 'सम्पत्तौ च विपत्तौ च महतामेकरूपते'त्यर्थान्तरन्यासस्य वैयर्थ्यप्रसङ्गः । एकस्याः प्रतीतेः परिस्खलनात् ।

---

१. 'ये' क. ग. पाठः. २. 'ङ्ग' क. ख. ग. पाठः.

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥

अत्र प्रत्ययस्य । 'सुखमीहितुं वे'ति तु युक्तः पाठः ।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥

अत्र सर्वनाम्नः । 'अनेन विसृष्टा' इति तु वाच्यम् ।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।

इत्यादि । अत्र पर्यायस्य । 'महीभृतोऽपत्यवतोऽपी'ति युक्तम् । अत्र सत्यपि पुत्रे कन्यारूपेऽपत्ये सस्नेहोऽभूदिति केचित् समर्थयन्ते ।

---

सम्प्रदायप्रकाशिनी

प्रत्ययापेक्षया दर्शयति — यशोऽधिगन्तुमिति ।
प्रत्ययस्येति । तृतीयारूपस्य ।
सर्वनाम्नो दर्शयति — ते हिमालयमिति ।
पर्यायस्य दर्शयति — महीभृत इति ।
समाधानदिशं दर्शयति — अत्र सत्यपीति ।

साहित्यचूडामणिः

यश इति । मनुष्यसंख्यातिवृत्तिः प्राकृतपुरुषजातिलङ्घनम् ।

प्रत्ययस्येति । अधिगन्तुमिति तुमुन् प्रक्रान्तः, अतिवर्तितुमिति निर्व्यूढश्च, मध्ये तद्वत् सुखं लब्धुमिति वक्तव्ये सुखलिप्सयेति सनः प्रयोगात् ।

त इति । आमन्त्र्य आपृच्छ्य ।

सर्वनाम्न इति । अस्मा इति प्रक्रान्तस्येदंशब्दस्य प्रक्रमभङ्गः । शूलिनं प्रक्रान्तमिदमास्मै इति परामृश्य पुनस्तेनैव परामर्शः कर्तुमुचितः, न तदा, तयोः स्तम्भकुम्भयोरिव भिन्नार्थत्वात् । नचासौ कृत इति । अनेन विसृष्टा इदंविसृष्टा इति वाच्यमित्यर्थशिक्षामात्रमेतत् ।

'पर्यायस्ये'ति । 'पुत्रवतोऽपी'ति प्रक्रान्तस्य पुत्ररूपस्य पर्यायस्य प्रक्रमो भग्नः । 'तस्मिन्नपत्य' इत्युक्तत्वात् । व्यक्तिविवेकरीत्या पाठमन्यथा करोति — अपत्यवतोऽपीति । कोट्यन्तरस्यान्यथाकर्तुमशक्यत्वात् ।

---

१. 'पि', २. 'त्यादौ प' क. पाठः. ३. 'ध्ये सु' घ. पाठः.

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयानपदं नृप! श्रियः ॥

अत्रोपसर्गस्य पर्यायस्य च । 'तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुताभाङ् न पदम्' इति युक्तम् ।

काचित् कीर्णा रजोभिर्दिवमनुविदधौ* मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपथमपरा भूमिवत् कम्पमानाः
प्रस्थाने पार्थिवानामशुभमिति पुरोभावि नार्यः शशंसुः ॥

सम्प्रदायप्रकाशिनी

अथोपसर्गस्य — विपदोऽभिभवन्तीति । अत्रागरीयानिति पर्यायस्यापि ।

दार्ढ्यार्थं व्यतिरेकं दर्शयति—तदभिभव इत्यादि ।

अथ वचनस्य — काचित् कीर्णेति ।

साहित्यचूडामणिः

प्रकारान्तरेण प्राक्पाठं निर्दोषमाह — पुत्र इति । पुत्रो मैनाकः तद्गतोऽपि तस्मिन्नपत्ये कन्यालक्षणे सस्नेहोऽभूदिति केचिद् वाक्यविद आहुः । अपत्यशब्दस्य शेषविवक्षया कन्यायां विश्रान्तिरिति भावः ।

उपसर्गपर्यायावेकत्रोदाहरति — विपद इति । (विपद इति) प्रक्रम्य पश्चादापदुपेतमित्युक्तत्वादापदपेक्षया व्युपसर्गभेदः । लघुतेति प्रक्रमे पुनरगरीयानित्युक्तत्वात् पर्यायस्य ।

तदभिभव इति । अभ्युपगताया विपदः सर्वनाम्ना परामर्शः । अनेनोपसर्गभेदः परिहृतः, लघुताभागिति पर्यायभेदश्च ।

१. 'य पाठमन्यथयति, व्यतिरेकं दर्शयति—त' क. घ., 'य पाठमन्यथयति—त' ग. पाठः.

* 'धे' इति मूलकोशपाठः.

अत्र वचनस्य। 'काश्चित् कीर्णा रजोभिर्दिवमनुविदधु-र्मन्दवक्त्रेन्दुशोभा निःश्रीका' इति, कम्पमाना इत्यत्र 'कम्प-मापुरि'ति च पठनीयम् ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः* क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र कारकस्य । 'विस्रब्धा रचयन्तु सूकरवरा' इत्य-दुष्टम् ।

---

सम्प्रदायप्रकाशिनी

पाठमन्यथयति—काश्चित् कीर्णा इत्यादि । 'कम्पमापुरि'ति प्रत्यय[1]प्रक्रमभङ्गोऽपि निवारितः ।

अथ कारकस्य—गाहन्तां महिषा इति। अत्र कर्तृकर्मणो-स्तिङ्सुब्वाच्य[2]त्वप्रक्रमो भिन्न इति पाठान्यथीकरणम् ।

साहित्यचूडामणिः

वचनस्येति । 'काचिद् दिवमनुविदधावि'त्येकवचनस्य प्रक्रमः । 'काश्चिदन्तर्दाहं दधिर' इति बहुवचनेनास्य भेदः । कप्रत्ययविप्रतिपत्तिपरि-हाराय लक्ष्मीस्थाने शोभाप्रयोगः, तत्रापि बहुवचनेन विग्रहे कवेर्भाव इत्यत्रा-नादरः । प्रसङ्गाद् भेदान्तरमपि परिहरति — कम्पमापुरिति । क्रियाकारक-युगलकेन व्याख्यानं प्रक्रान्तत्वात् ।

कारकस्येति । महिषा गाहन्तामिति प्रथमाया विस्रब्धैः क्रियतामिति तृतीयया व्यत्यासात् । ननु कर्तृप्रक्रमभेदः किं नोदाहृत इति चेत्, असंभवा-

---

१. 'यक' क. ख. घ. पाठः, २. 'च्यक' क. घ. पाठः.

---

* 'विस्रब्धं क्रि' इति मूलकोशपाठः.

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसङ्ग्रहणाय च॥

अत्र क्रमस्य। 'पादोपसङ्ग्रहणाये'ति पूर्वं वाच्यम्। एवमन्यत्राप्यनुसर्तव्यम्।

---

सम्प्रदायप्रकाशिनी

**अकलिततप इति[1]।**

**क्रमप्रक्रमभङ्गं[2] विशदयति[3] — पूर्वं वाच्यमिति। तपोमाहात्म्यस्य पूर्वप्रतीततत्वादिति भावः। दोषस्यास्य विषयवैपुल्यं सूचयति — एवमन्यत्रापीति[4]।**

साहित्यचूडामणिः

दिति ब्रूमः। यस्तु क्वचित् कविभिः प्रयुज्यते, स कर्तृव्यत्ययो नाम चमत्कारकारी गुणः, न दोषः। तत्र युष्मदर्थस्य यथा — 'यथाह सप्तमो वैकुण्ठावतार' इति। अस्मदर्थस्य यथा — 'नाभिवादनप्रसाद्यो रेणुकापुत्र' इति।

क्रमस्येति। तपस्तेजोवीर्यप्रथिम्नो(र्य? य)शोमदयोश्च क्रमादुपन्यासे मुनिं प्रति पूर्वं पादोपसंग्रहः कथनीयः, पश्चादभिनवधनुर्विद्यागर्वोचितं कर्म, नतु विपर्ययादित्यत्र क्रमप्रक्रमभङ्गः। एवमन्यत्रापि। तत्र धर्मिणो यथा —

"इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।"

इत्यत्र प्रथमपादे नायिकायाः स्वरूपं वर्णयितुमुपक्रम्य द्वितीयादिपादेषु तदीयाः स्पर्शादयो वर्णिता इति। किञ्च द्विविधः प्रक्रमभेदः शाब्द आर्थश्च। तत्र

---

१. 'ति। 'प्रक्रमक्रमभ' ख. पाठः. २. 'ङ्गमपि दर्शय' ग. पाठः. ३. 'विदर्शय', ४. 'ति। द्व' ख. ग. पाठः. ५. 'कारणं न', ६. 'यं' ग. पाठः.

अविद्यमानः क्रमो यत्र । यथा—'द्वयं गतं सम्प्रति शोचनीयताम्' इत्यादौ* । अत्र त्वंशब्दानन्तरं चकारो युक्तः । यथावा—

---

सम्प्रदायप्रकाशिनी

अथाक्रमं—द्वयं गतमिति । क्रमाभावमुद्भावयति—अत्र त्वंशब्दानन्तरमिति । यद्धि समुच्चीयते, तदनन्तरमेव चकारो न्याय्यः । नह्यत्र लोकः समुच्चीयते । नच शङ्कनीयं तथान्वयोऽस्त्विति । सन्निहितपदेष्वन्वयायोग्यतायामेव व्यवहितान्वय[1]सम्भवात् ।

साहित्यचूडामणिः

शाब्द उक्तः, आर्थ ऊहनीयः । यथा—

"सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ।"

इत्यत्र पयः पपुरित्यादिवद् विकासिबिसप्रसूनं धारयामासुरिति वाच्यम् । तदुक्तं—"जक्षुर्बिसं विकचमस्य दधुः प्रसूनमि"ति पाठः श्रेयान् । एवञ्च आर्थः प्रक्रमभेददोषोऽपि परि(गृही ? हृ)तो भवती"ति ।

अक्रममाह—अविद्यमान इति । क्रमः पौर्वापर्येणावस्थानं, स न विद्यते यत्र ।

त्वंशब्दादिति । द्वयं गतं संप्रति शोचनीयतामित्यत्र । किञ्च किञ्चेत्यपेक्षायां कलावतः कला च त्वं चेति समुच्चयो वाच्यः, एतद्वैपरीत्याच्च वाक्यमक्रममेतत् । तदुक्तं—

"कैश्चिदेव हि केषाञ्चिद् दूरस्थैरपि सङ्गतिः ।
न जातु सर्वैः सर्वेषामित्येतदभिधास्यते ॥"

इति ।

---

१. 'या' क. घ. पाठः.

---

* 'दौ त्वंश' इति मूलकोशपाठः.

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ! दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः।
आज्ञेयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम्॥

'अत्र इत्थं प्रोच्येवे'ति न्याय्यम्। तथा 'लग्नं रागावृताङ्ग्ये'त्यादौ 'इति श्रीनियोगादि'[2]ति वाच्यम्।

---

सम्प्रदायप्रकाशिनी

शक्तिर्निस्त्रिंशजेति। निस्त्रिंशोऽसिर्नृशंसश्च। दोषाकरश्चन्द्रः दोषाणामाकरश्च। कुट्टिनी आस्फालनशीला दूती च। सर्वगा व्याप्ता सर्वोपभोगिनी च। वृद्धा सम्पन्ना प्रवयस्का च।

अत्र क्रमाभावमुद्भावयति—इत्थं प्रोच्येति। इतरथा प्रोच्येवेत्यस्यापि वक्तव्यकोटिप्रवेशः स्यात्। अयमेव दोषप्रकारः लग्नं रागावृताङ्ग्येत्यत्रा(पि? पीति) दर्शयति—इति श्रीनियोगादितीति।

साहित्यचूडामणिः

शक्तिरिति। निस्त्रिंशः खड्गः क्रूरश्च कश्चित्। दोषाकरश्चन्द्रः दोषां निशां करोतीति, अवद्यानामाकरश्च। कुट्टयति खण्टयतीति कुट्टिनी शम्फळी च। सर्वगा विश्वव्यापिनी अशेषपुरुषस्वीकारिणी च। वृद्धया परिपूर्णया वर्षीयस्या च। उभयथापि शशिकरसितया।

इत्थं प्रोच्येवेति। अनेन प्रकारेण प्रवचनमिति प्राथम्येन भाव्यम्। न्याय्यमिति। अन्यथा नैरर्थक्यापत्तेः इत्थंशब्दस्य कालातीतत्वात्। एवं 'तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधते'त्यत्र परामर्शनीयामगाधतामनुक्त्वा योऽयमितरेति स्त्रीलिङ्गतया प्राङ् निर्देशः स क्रमभङ्गः। तस्य हि प्रकान्त एवार्थो विषयः न प्रक्रंस्यमानः। तदुक्तं —

"परामृश्यमनुक्त्वैव परामर्शोऽस्य यस्तदा।
स दोषो वक्ष्यमाणार्थसंवित्तावक्षमो हि सः॥"

इति। तदेति सर्वनाम्नामुपलक्षणम्।

---

१. 'तम्। इ', २. 'ति च वा' क. पाठः.

**अमतः प्रकृतविरुद्धः परोऽर्थो यत्र। यथा —**

**राममन्मथशरेण ताडिता दुस्सहेन हृदये निशाचरी।**
**गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा॥**

**इति। अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः॥ ५—६१/२॥**

सम्प्रदायप्रकाशिनी

अमतपरार्थं निर्वक्ति — **अमतः प्रकृते**[1]ति।

**राममन्मथे**ति।

अनभिमतपरार्थतां दर्शयति — **अत्र प्रकृत** इति। प्रकृतो रसो बीभत्सः। (अ) परः सम्भोगशृङ्गारः। तयोर्विरोधादनभिमतपरार्थता॥ ५—६१/२॥

साहित्यचूडामणिः

**अमत** इति। अनिष्टः प्रस्तुतरसापेक्षया विपर्यस्तः पर इतरोऽर्थो यत्र।

**रामे**ति। गन्धवदिति निन्दायां प्रशंसायां (च) मतुप्। जीवितेशो यमः प्रियतमश्च।

प्रकृते रसे वीररूपेऽपरोऽर्थो रामस्य मन्मथेनौपम्यं, रुधिरस्य चन्दनेन, जीवितेशेन वल्लभस्यार्थ(स्य) प्रत्यायनमित्यादि। नचात्र 'दन्तक्षतानि करजैश्च विपाटितानि' इत्यादाविव वक्ष्यमाणक्रमेण साम्यविवक्षया परिहारः। प्रकृतस्यार्थस्यापरिपोषात्। तत्र बोधिसत्त्वस्य परार्थं शरीरवितरणे लौकिकस्त्रीसंभोगसादृश्यादक्लिष्टता प्रकृतं शान्तं परिपुष्णाति। अत्रतु रामस्य मन्मथसादृश्यान्न[2] वीरोत्कर्षः कश्चित्। प्रत्युत स्त्रियं ताटकां हतवानिति वीरस्याभासीकरणलक्षणमनौचित्यमुज्जृम्भते। नन्वितिवृत्तप्रसिद्धे स्त्रीवधे कथं दोष इति चेत्, 'इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिमि'ति स्थित्या यस्य प्रयत्नेन परिहर्तव्यता तत्र कवेरयं[3] स्वयं संरम्भारम्भोऽनौचित्यायेति॥ ५-६१/२॥

१. 'तेरिति' क. घ. पाठः, २. 'साधर्म्यान्न', ३. 'वेस्त्वयं स' घ. पाठः,

अर्थदोषानाह —

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ७ ॥**
**सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥ ८ ॥**
**साकाङ्क्षोऽपदमुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ९ ॥**

दुष्ट इति सम्बध्यते । क्रमेणोदाहरणम्[1] —

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद् रविर्जयति ॥

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं

---

सम्प्रदायप्रकाशिनी

अर्थदोषान् प्रस्तौति — अर्थोऽपुष्ट इत्यादिना अश्लील इत्यन्तेन । प्रसिद्धिविद्येत्यत्र विरुद्धशब्दः प्रत्येकमभिसम्बध्यते । तथा सनियमेत्यत्र चतुर्ष्वपि परिवृत्तशब्दः । विध्यनुवादेत्यत्राप्ययुक्तशब्दः । व्याहतः स्वोक्तिविरुद्धः । अपदमुक्तोऽस्थानमुक्तः । सहचरभिन्नः सहचरविसदृशः । त एते (द्वा ? त्रयो)विंशतिः[2] ।

**अतिविततेति ।**

अत्रार्थस्यापुष्टतां सोपपत्तिकं दर्शयति—**अत्रातिविततेति** ।

साहित्यचूडामणिः

अर्थदोषानाह — **अर्थेति** । क्वचित् पदस्यार्थः कुत्रचिद् वाक्यस्येति यथायोगमूहनीयम् ।

**संबध्यत इति** । दुष्टमित्यधिकारात् । अर्थाल्लिङ्गविपरिणामः ।

**अतिविततेति** । गगनस्य विभुतया वैतत्यम् । विश्रमस्य दुःखाभावत्वादानन्दत्वम् । कमलाकराणां, विकासमात्रकरणं, सौरभ्योल्लासश्च स्वभावसिद्ध(मि ? इ)ति न तत्रार्थदोषः ।

---

१. 'ण — अ', २. रोधः । अ' क. ख. घ. पाठः.

न बाधन्त इत्यपुष्टाः, नत्वसङ्गताः पुनरुक्ता वा।

सदा मध्ये यासामियममृतनिःष्यन्दसरसं
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्।
प्रसादं ता एता घनपरिचयाः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः॥

अत्र यासां[2] कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं[3] वहति, ता गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु। यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः।

सम्प्रदायप्रकाशिनी

नच दोषान्तरत्वं शङ्कनीयमित्याह—नत्वसङ्गताः पुनरुक्ता वेति।

कष्टमुदाहरति— सदा मध्य इति।

कष्टत्वमेव दर्शयितुं व्याचष्टे — यासां कविरुचीनामित्यादि। बहुमार्गेत्येतद् व्याचष्टे — (सुकुमारेति।) चमत्कारमिति (परिमलशब्दार्थम्)। गभीरकाव्येति घनशब्दार्थम्। अर्थान्तरमाह— यासामादित्येत्यादि। त्रिपथगेति बहुमार्गत्वम्॥

साहित्यचूडामणिः

तत्र लाक्षणिकविप्रतिपत्तिमपाकरोति — नत्विति। गगनादौ विततत्वादेरव्याहतत्वादसंगतिर्नास्ति। गगनादेर्विततत्वादेश्च भिन्नप्रमेयतया न पौनरुक्त्यम्। 'सामर्थ्यसिद्धस्यार्थस्य तथार्थी पुनरुक्तते'त्येतदिदानीमनभिमतमिति यावत्।

सदेति।

कविरुचीनां भिन्नस्वभावानां कवि(वि)वक्षाणां मध्ये वैदर्भ्यादिव्यतिरेकेण सुकुमारचित्रमध्यमलक्षणमार्गत्रययोगितया त्रिमार्गा सरस्वती। परिमलं

१. 'ष्टार्थत्वं, न', २. येषां कवीनां म', ३. 'रभाव' क. पाठः. ४. 'ष्टे गभीरकाव्येति घनशब्दार्थः। चमत्कारमिति। अ', ५. 'म्। सरस्वतीदार्थः। व्या' क. घ. पाठः.

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥

इति । अत्रेन्दुकलादयो यं प्रति * परपशप्रायाः, स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ।

'कृतमनुमतम्' इत्यादि ।

अत्र 'अर्जुनार्जुने'ति 'भवद्भिरि'ति चोक्ते 'सभीमकिरीटिनामि'ति किरीटिपदार्थः पुनरुक्तः । यथावा—

सम्प्रदायप्रकाशिनी

व्याहतमुदाहरति—जगति जयिन इति ।

स्ववचनव्याघातं दर्शयति—अत्रेन्दुकलादय इत्यादि । यं प्रति यमेव वक्तारं प्रति । पस्पशप्रायाः असारकल्पाः ।

अथ पुनरुक्ताः—कृतमनुमतमिति ।

अत्राश्वत्थाम्न उक्तौ । 'अर्जुनार्जुने'ति प्रागाह्वानाद् भवद्भिरित्युक्तत्वाच्च किरीटिपदार्थपौनरुक्त्यम् ।

साहित्यचूडामणिः

व्याचष्टे—चमत्कारमिति । घनपरिचया इत्यस्य व्याख्या गम्भीरकाव्यपरिचिता इति । (त? कथमिति क)स्य हेतोरित्यर्थः । (कथमिति?) । (इतरकाव्यवत्) इतरेषु काव्येष्विव, अनितरसाधारणो हि प्रसादः । अत्रैवार्थान्तरच्छायामाह—यासामिति । रुचयो दीप्तयः । एकैकोऽपि वाक्यार्थः स्फुटं न प्रतीयते किमुतोभयार्थघटनापरिक्लेश इति यावत् ।

जगतीति । इन्दुकलादयः स्वभावमधुरास्ते ते पदार्था यं माधवं प्रति तुच्छतया निस्सारकल्पाः स्थापिताः, सन्त्येवान्य इति सावज्ञमुक्तत्वात्, स एव चन्द्रिकात्वं मालत्या उत्कर्षार्थमारोपयतीति ।

---

१. 'ल्पाः । कृ' ग. पाठः. २. 'त् तदर्थार्थं दर्शयति किं' क. घ. पाठः.

---

* 'पस्पशे'ति मूलकोशपाठः.

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे[1]

सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्व-
[राणाम् ।

कर्णालं सम्भ्रमेण व्रज कृप! समरं मुञ्च हार्दिक्य! शङ्कां

ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥

अत्र चतुर्थपादवाक्यार्थः ।

भूपालरत्न! निर्दैन्यप्रदानप्रथितोत्सव! ।

विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥

सम्प्रदायप्रकाशिनी

अस्त्रज्वालेति । अत्र चतुर्थपादवाक्यार्थः साकल्येन[2] पुनरुक्तः ।

अथ दुष्टक्रमः — भूपालरत्नेति ।

साहित्यचूडामणिः

किरीटिपदार्थः पुनरुक्त इति । अर्जुनार्जुनेति पूर्वमामन्त्रितत्वात् ।

ताते चापद्वितीये इत्यादिचतुर्थपादार्थः पूर्वार्धापेक्षया पुनरुक्तः । ननु शब्दपौनरुक्त्यं कथं दोष इति चेत्, न, स्थूलत्वादस्य । यदाह भामहः —

"न शब्दपौनरुक्त्यं तु स्थौल्यादत्रोपवर्ण्यते ।

कथमाक्षिप्तचित्तोऽपि तदेकमभिधास्यते ॥"

इति । तस्मात् —

"उत्कानुन्मनयन्त्येते गम्भीराः स्तनयित्नवः ।

अम्भोधरास्तटित्वन्तो गम्भीराः स्तनयित्नवः ॥"

इति बालशिक्षामात्रोपक्षीणमित्यवगन्तव्यम् । किञ्च पौनरुक्त्यमशेषं दोष इत्यपि न शक्यं वक्तुं, तस्यानुप्रासादिस्वभावतयालङ्कारत्वेनाप्यङ्गीकारात् । एतावदालोचनीयं— सर्वनामपरामर्शयोग्यस्यार्थस्य यत् पुनः स्वशब्देनाभिधानं सा शब्दस्य पुनरुक्तता । यथा 'जक्षुर्बिसं धृतविकासिबिसप्रसूना' इत्यत्र बिसशब्दस्य पौनरुक्त्यमिति । अतएवहि 'विकचमस्य दधुः प्रसूनमि'त्यपाठि । एवमलङ्कारेऽप्यूह्यम् । यथा —

१. 'सि:' क. पाठः. २. 'न पुनः पुन' ग. पाठः.

अत्र मातङ्गस्य प्राङ् निर्देशो न्यायः।

स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं किमपैति ते।
तदयि साम्प्रतमाहर रूपकं
त्वरितमूरुमुदञ्चय कुञ्चितम्॥

एषोऽविदग्धः।

'मात्सर्यमुत्सार्ये'त्यादि। अत्र प्रकरणाद्यभावे सन्देहः।

---

सम्प्रदायप्रकाशिनी

**स्वपिति यावदिति ग्राम्यः।**

**मात्सर्यमुत्सार्येति सन्दिग्धः।**

साहित्यचूडामणिः

"उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ॥"

इति। अत्र चतुर्थपादः पुनरुक्तः। श्रौत्यैवोपमया वाक्यार्थस्य पूर्णत्वे पुनः किमर्थमार्थ्या उपन्यासप्रयासः।

**मातङ्गस्येति**। मातङ्गं तुरङ्गं वा विश्राणयेति वक्तव्यम्। अन्यथा कवेः पदार्थतारतम्यानभिज्ञत्वप्रसङ्गात्।

**रूपकं** (दिनाकारीति रूपकं?) मदनागारम्।

**एषोऽविदग्ध** इति। अस्य वाक्यस्य वक्ता न विदग्ध इति ग्राम्यत्वम्। अग्राम्यत्वं च समस्ति तत्र कविवैदग्ध्यात्। यथा दण्डी—

"कन्ये! कामयमानं मां न त्वं कामयसे कथम्।
इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते॥
कामं कन्दर्पचण्डालो मयि वामाक्षि! निर्दयः।
त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः॥"

इति।

**मात्सर्यमिति**। (कयोः?) प्रकरणादीत्यादिपदाद् वक्तृबोद्धव्यादि।

---

१. 'रिति। ए', २. 'त' घ. पाठः·

शान्तश्रृङ्गार्यन्यतराभिधाने तु निश्चयः ।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद् यस्याभून्नखलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्नतु भयाद्
विमोक्ष्ये शस्त्र! त्वामहमपि यतः स्वस्ति भवते ॥

अत्र शस्त्रमोचने हेतुर्नोपात्तः ।

इदं ते केनोक्तं कथय कमलातङ्कवदने!
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तत् दुस्साधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥

---

सम्प्रदायप्रकाशिनी

अथ निर्हेतुः—गृहीतं येनेति। अत्र शस्त्रमोचनहेत्वनुपादानान्निर्हेतुः ।

इदं न इति। अत्र कामायुधत्वेन चक्रमप्रसिद्धमिति प्रसिद्धिविरुद्धम् । अयं लोकापेक्षया ।

साहित्यचूडामणिः

वक्तोः शान्तश्रृङ्गारिणोरन्यतरनिश्चये व्यङ्ग्यतया वाक्यार्थनिश्चयः । सर्वथा वाच्यकक्ष्यायां संशय एव ।

हेतुर्नोपात्त इति। अश्वत्थामकर्तृके शस्त्रमोचने हेतुरुपादातव्यः, यथात्रैव द्रोणाचार्यकर्तृके 'सुतशोकान्नतु भयादि'त्यन्वयव्यतिरेकाभ्यामुपात्तः । तदभावादत्र निर्हेतुत्वम् ।

प्रसिद्धिविरुद्धो विद्याविरुद्धश्चेति द्वौ ।

इदमिति । कमलानां साक्षादातङ्को वदनं यस्याः । विनिहितं निक्षि-

---

१. 'सी' क. पाठः.

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् । यथावा —

उपपरिसरं गोदावर्याः परित्यजताध्वगाः!
सरणिमपरो मार्गस्तावद् भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धः।

---

सम्प्रदायप्रकाशिनी

कविसमयापेक्षयापि दर्शयति — उपपरिसरमिति । अत्र वनितापादाघातेन पुष्पोद्गमः प्रसिद्धो, नत्वङ्कुरोद्गमः ।

साहित्यचूडामणिः

सम् । अत्र चक्रायुधतया प्रसिद्धिर्भगवतो वासुदेवस्य, नतु प्रद्युम्नस्य । यदाह कश्चित् —

"त्वदालेख्ये कौतूहलतरलहस्ते विरचिते
विधायैका चक्रं रचयति सुपर्णासुतमपि ।
अथ स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥"

इति । देशकालविरोधोऽपि स्थूलः प्रसिद्धिविरोध एव । यथा —

"आसीद् वाराणसी नाम चोलेषु महती पुरी ।
मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥"

इति । स चातिस्थौल्यादुपेक्षितो ग्रन्थकारेण । काव्ये च मध्यदेशनिबन्धनो विभाग आदरणीयः । देशान्तरेष्वव्यवस्थादर्शनात्[1] । येन सिंहलद्वीपे[2] प्रावृष्यपि सहकारप्रसूनं, कश्मीरेषु ग्रीष्मेऽपि कुसुदानि वर्षास्वपि कमलानीति ।

लोक इव कविमर्यादायामपि प्रसिद्धिविरोधमाह — उपपरिसरमिति । हताशयेति प्रशंसागर्भ उपालम्भः ।

पुष्पेति । न पुनरङ्कुरोद्गमः ।

---

१. 'दि', २. 'दी' घ. पाठः.

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद् विधुः ।
तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क नासि शुभप्रदः ॥

अत्रामूर्तापि कीर्त्तिर्ज्योत्स्नावत् प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् ।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥

सम्प्रदायप्रकाशिनी

नन्वेवं पुष्पोद्गमोऽपि लोकविरुद्ध इति कथमिह प्रसिद्धिविरोध इत्यत: प्रत्युदाहरति — **सुसितवसनेति** ।

अथ विद्यासु धर्मशास्त्रस्य प्राथम्यात् तद्विरुद्धं प्रागुदाहरति — **सदा स्नात्वेति** ।

साहित्यचूडामणिः

लोकयात्राकविमर्यादयोर्विप्रतिषेधे पूर्वदौर्बल्यमित्याह — **सुसितेति** । अमूर्ताया अपि कीर्तेः श्वैत्यविशिष्टत्वं लोकविरुद्धम् । लोकश्च 'लोको वेद-स्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्' इति व्यक्तिविवेकयुक्त्या मुख्यं प्रमाणम् । तथापि कविप्रसिद्धेः प्रबलाया विद्यमानत्वान्न दुष्टत्वम् ।

सदेति । ग्रहोपरागं विना रात्रौ स्नानं निषिद्धम् । 'रात्रौ स्नानं न कुर्वीत राहोरन्यत्र दर्शनात्' इति स्मृतेर्धर्मशास्त्रविरुद्धमेतत् ।

अर्थशास्त्रमान्वीक्षिकी दण्डनीतिश्च । यत्र त्रिवर्गस्य परस्परस्य विरोधो-दुपयोगोपदेशः सा आन्वीक्षिकी, यस्या भगवान् भार्गवः प्रणेता, यत्र पुनरर्थ-कामौ प्रधानं लोकानुवृत्तिमात्राय धर्मः, सा दण्डनीतिः, यस्या भगवान् बृह-स्पतिः ।

१. 'नु पु', २. 'त्येतत् प्र' ख. ग. पाठः. ३. 'विरुद्ध' क. ख. ग. पाठः. ४. 'रस्य', ५. 'धोपयो', ६. 'त्र यत्र ध' क. घ. पाठः.

ग्रहोपरागं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम् ।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते ।

षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥

एतदर्थशास्त्रेण ।

विधाय दूरे केयूरमनङ्गाङ्कनमङ्गना ।

बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥

अत्र केयूरपदे नखक्षतं न विहितम् ।

---

सम्प्रदायप्रकाशिनी

**अथार्थशास्त्रविरुद्धः— अनन्यसदृशमिति । षाड्गुण्यापेक्षया विक्रमस्य दुर्बलत्वादर्थशास्त्रविरोधः ।**

**विधाय दूर इति । अत्र केयूरपदे[1] नखलेखो न विहित इति कामशास्त्रविरोधः ।**

साहित्यचूडामणिः

**अनन्येति** । वलते संवृणोत्यात्मानमिति बलम् । षड्गुणा एव षाड्गुण्यं सन्धिर्विग्रहो यानमासनं द्वैधीभावः समाश्रयश्च, तस्यानुसृतिरनुसरणं निष्फलेत्येतदर्थशास्त्रविरुद्धम् । यदाह वामनः— 'अहङ्कारेण जीयन्ते द्विषन्तः किं (तया ? नय)[2]श्रिया इत्यादौ यद् द्विषज्जयस्य नयै[3](कू ? मू)लत्वं स्थितं दण्डनीतौ, तद्विरोधादर्थशास्त्रविरुद्धमि'ति ।

**अनङ्गाङ्कनं** मन्मथस्य चिह्नभूतम् । करजोल्लेखो नखक्षतम् । केयूरस्थाने नखक्षतं न विहितम् । यदाहुः—

"कक्षाकरोरुजघनस्तनपार्श्वपृष्ठहृत्कन्धरासु नखराः खरवेगयोः[4] स्युः ।

अप्यन्ययोर्नृप[5][6] ! रते कलहे च शान्ते पुष्पे मदे प्रवसने विरहे च योज्याः ॥"

इति ।

---

१. 'देषु न' क. पाठः. २. 'श्र' ख पाठः. ३. 'यानुकू', ४. 'करवेगिनः स्युः' क. ख. ग. पाठः. ५. 'नैरते' घ. पाठः. ६. 'वे' क. ख. पाठः.

अष्टाङ्गयोगपरिशीलनकीलनेन
दुस्साधसिद्धिसविधं विदधद् विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥

अत्र विवेकख्यातिः सम्प्रज्ञाते । पश्चादसम्प्रज्ञातः । ततो मुक्तिः । न तु विवेकख्यातौ । एवं विद्यान्तरविरुद्धमुदाहार्यम् ।

सम्प्रदायप्रकाशिनी

अष्टाङ्गयोगेति । द्रष्टृदर्शन[1]भेदावधारणं[2] विवेकख्यातिः ।

अत्र विरोधमुद्भावयति — विवेकख्याति[3]ः सम्प्रज्ञात इत्यादि । सम्प्रज्ञातः सबीजः समाधिः । तत्र[4] जाते विवेकख्यात्युदयः, विवेकख्यातावपिरुद्धायां निर्बीजः समाधिः, ततो मुक्तिरिति योगशास्त्रस्थितिः । इह तु विवेकख्यातिर्मुक्तिहेतुरुक्तेति[5] मोक्षशास्त्र[6]विरोधः । एवं विद्यान्तरेति । मीमांसादिशास्त्राणि विद्यान्तराणि ।

साहित्यचूडामणिः

अष्टाङ्गेति । योगेति । 'योगश्चित्तवृत्तिनिरोध' इत्युक्तम् । तस्य चाष्टावङ्गानि । तदनुष्ठानान्मोक्षः । उक्तं हि—'योगाङ्गानामनुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेरि'ति । 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानी'ति च । एवमष्टाङ्गस्य योगस्य परिशीलनमभ्यासः । तस्य कीलनेन दृढभूमितापादनेन दुस्साधा सिद्धिर्मोक्षः, अणिमादीनां क्षुद्रसिद्धित्वात्, तस्याः सविधः प्रत्यासन्नो योगः यः असम्प्रज्ञात इत्याम्नायते तं विदूरे विदधत् अनपेक्षमाणः । विवेकख्यातिः प्रकृत्यादेः पुरुषेश्वरयोरन्यत्वप्रतिपत्तिः या वैराग्यहेतुः । उक्तं च —*'विवेकख्यातिरविद्याहानोपाय' इति । एवञ्च कश्चित् समाधिधनानां मौलिमणिर्योगिश्रेष्ठो मुक्तोऽभूदिति ।

दोषशेषमुन्मेषयति — विवेकख्यातिरिति । योगो हि द्विधा संप्रज्ञातो-

१. 'नयोः भे' ख. ग. पाठः. २. 'ता' ग. पाठः. ३. 'ते' ख. पाठः. ४. 'अ', ५. रित्युक्ते' ख. ग. पाठः. ६. 'णि । प्रा' ख., 'णीति । प्रा' ग. पाठः.

* 'विवेकख्यातिरविप्लवा हानोपायः' इति मुद्रितपाठः । (पा० २. २६).

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
　　दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
　　कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

सम्प्रदायप्रकाशिनी

अथानवीकृतं — प्राप्ताः श्रिय इति ।

साहित्यचूडामणिः

ऽसंप्रज्ञातश्च । तत्र 'वितर्कविचारानन्दास्मिताद्यनुगमात् संप्रज्ञातः' । 'विराम-प्रत्ययाभ्यासपूर्वकः *संस्कारविशेषो[1]ऽसंप्रज्ञातः' ।

"+ + + भूततन्मात्रकरणानां + स्वरूपगाः ।
वितर्काद्या धियोऽक्षार्थाः संप्रज्ञाताख्ययोजिताः ॥
परवैराग्यजाभ्यासपूर्वः सं(स्तृ ? स्कृ)तिमात्रकः ।
अस्तवृत्तितया योगे[2](स्त्व)संप्रज्ञात इष्यते ॥"

इत्यन्तरश्लोकौ । तत्र पूर्वं संप्रज्ञातः, ततो विवेकख्यातिः, पश्चादसंप्रज्ञातः, ततो मुक्तिरिति क्रमः । एतद्वैपरीत्यादस्य योगशास्त्रविरुद्धत्वमित्यलमलौकि-कार्थसमर्थनेन । एवमिति । भरतकलाविरोधो यथा —

"रणद्भिराघट्टनया नभस्वतः
　　पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।"

इत्यादौ । आनुलोम्येन प्रातिलोम्येन वा नभस्वत्संचारे क्रमेण स्वरा उत्पद्यन्ते, न पुनर्वैचित्र्येणेति कुतो रागसम्बन्धिनीनामन्तर्वर्णानां मूर्छनानां स्फुटीभावः । पत्रकलाविरोधो यथा —

"कालिङ्गं लिखितमिदं वयस्य ! पत्रं
　　पत्रज्ञैरपतितकोटिकण्टकाश्रि ।"

इति । 'कालिङ्गं पतिताश्रिकण्टकमि'ति हि पत्रविदाम्नायः ।

---

१. 'षोऽन्यः ।' घ. पाठः. २. ग 'इत्यसं' क. ख. ग. पाठः.

---

* 'संस्कारशेष' इति मुद्रितयोगसूत्रपाठः (पादः १. सू० १८).

अत्र 'ततः किमि'त्यनवीकृतम् । तत्तु यथा—

यदि दहत्यनलोऽत्र किमद्भुतं
यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतामविषादिता ॥

यत्रानुल्लिखिताक्षमेव निखिलं निर्माणमेतद् विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।

---

सम्प्रदायप्रकाशिनी

अनवीकरणं दर्शयति—अत्र तत इत्यादि ।

प्रतीतिवैशद्याय प्रत्युदाहरति—यदि दहतीति[1] ।

अथ सनियमपरिवृत्त(य ?):—यत्रानुल्लिखितेति । यत्र[2] सुमणौ जाते सति विधेरेतन्निर्माणमनुल्लिखिताक्षमनुन्मीलितलोचनमेव अर्ध[3]निष्पादितवर्त् प्रतीयत इत्यर्थः । एतदुत्कर्षाय प्रतियोगिकल्पनम् अस्मादिदं निकृष्टमिति प्रतियोगिपरिग्रहोऽप्यस्य परा न्यक्कारकोटिः

साहित्यचूडामणिः

अनवीकृतमिति । 'ततः किमि'त्यस्य पर्युषितप्रतीतिकतया चमत्कार-शून्यत्वात् । तत्त्विति । दोषस्य प्रत्युदाहरणं नवीकृतं यथा—'किमद्भुतं' 'किं ततः' 'सदैव' 'प्रकृतिरेवे'ति नवीकारः ।

सनियमादनियमाद् विशेषादविशेषाच्च परिवृत्ता विपर्यस्ताश्चत्वारोऽर्था दुष्टाः ।

यत्रेति विषये । [5]अन्यत्र भावो विषयार्थः । विधेर्निर्माणं लोकसर्गः । अनुल्लिखितं विषयावगाहनविमुखम् अक्षि लोचनं यत्र । मध्याह्नमार्ताण्डावलोकनन्यायेन तरलितबहलमरीचिनिचयखचितचाकचक्यं[6] माणिक्यमेतदुत्कृष्टमिति निश्चेतुमशक्यं स्वान्य(वि ?)भावशून्यं दुर्निरीक्षमिति यावत् । यत्र चोत्कर्षस्य त्रासराहित्यादाभिजात्यस्वभावस्य यत् प्रतियोगि प्रतिसंबन्धि कौस्तुभस्यस्यमन्तकादिमाणिक्यान्तरं तस्य कल्पनमुत्प्रेक्षामात्रेण संभावनमपि परा न्यक्कार-

---

१. 'ति । यत्रा' ख. ग. पाठः. २. 'त्र सति विधेस्तन्नि' ख. पाठः. ३. 'र्ध', ४. 'सु' क. घ. पाठः. ५. 'अनन्य' घ. पाठः. ६. 'काचकच्यं' क. ख. ग. पाठः.

याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥

अत्र 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिते'ति सनियमार्थत्वं वाच्यम् ।

---

सम्प्रदायप्रकाशिनी

मेरोर्लोष्टो निकृष्ट इतिवत् । यस्य च सम्पदः प्राणभृतां मनोरथगतीरुल्लङ्घ्य याताः मनोरथा अपि न गोचरयेयुरित्यर्थः। तस्य मणेः । अश्मत्वमेवोचितं किमनया जात्याचेतनयेत्यर्थः । कीदृगश्मत्वम् । आभासमणीकृताश्मसु छायया मणीकृतेषु सविधवर्तिषु अश्मसु । यस्य छायामात्रेण ये ग्रावाणो मणीभवन्ति, तेषां मध्येऽश्मत्वं कथं न पर्याप्तमिति भावः ।

सनियमपरिवृत्तिं दर्शयति — अत्र छायामात्रेत्यादि ।

साहित्यचूडामणिः

कोटिः अवज्ञापात्रत्वतारतम्यविश्रान्तिभूमिः । यस्य मङ्गल्यत्वप्रभावबहुलत्वमूल्यमहत्त्वादयः सर्वेषां जन्तूनां या बहुमुखप्रसाराणां मनोरथानां गतयो निर्यन्त्रणाः प्रवृत्तयः ता उल्लङ्घ्यातिक्रम्य याताः अनुपभोग्यतया अलीकप्रायाः संवृत्ताः । तस्य सर्वाकारेण लोकोत्तरस्य मणेः 'धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरमि'ति नीत्या मणित्वसामान्यानुप्रवेशपीडितस्येति । आभासमणीकृताश्मस्विति । अमणयो मणयः कर्त्रा विधात्रा कथं मणीकृताः आभासेनास्फुटेन स्फुरणेन वस्तुतश्चमत्कारशून्यत्वात् । अतएवाश्मानः शिलाशकलानि, तेष्विति निर्धारणे सप्तमी । विधेयाविमर्शोऽप्यत्र सम्भवी, अश्मसमशीर्षिकामुखादुत्कर्षालाभेन ।

पाठप्रतिसंस्कारद्वारा नियन्तव्यमंशं विशदयति—छायामात्रेति । वर्णनीयस्य मणेरुत्कर्षो हि तद्व्यतिरिक्तानामाभासान्मणीनामपकर्षाधीनः । अपकर्षश्च छायामात्रेण मणीकृतत्वात् न पुनर्वस्तुत इति नियन्तव्यत्वमर्थस्य । अतएवाह — सनियमार्थत्वं वाच्यमिति । मात्रग्रहणेन भाव्यमिति भावः ।

---

१. 'रे । त', २. 'तम् । की' ख. पाठः. ३. 'त्मयाचे' क. घ. पाठः. ४. 'ति यावत् । आ' ग. पाठः. ५. 'सु । छा' क. ख. घ. पाठः. ६. 'किं न' ग. पाठः. ७. 'दि । व' ख. ग. पाठः. ८. 'जा' घ. पाठः. ९. 'न नास्फु', १०. 'न स्फुटेन स्फुर', ११. 'वी । तस्याश्मत्वमेवोचितम् अलं सम' क. ख. ग. पाठः. १२. 'न वा ।' क

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते! तेऽम्बुपानाभिलाषः ॥

अत्र 'शोण एवे'ति नियमो न वाच्यः ।

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

सम्प्रदायप्रकाशिनी

अथानियमपरिवृत्तः—वक्त्राम्भोजमिति । सरस्वती वाक् सरिद्विशेषश्च । शोणोऽरुणो नदश्च । समुद्रो मुद्रासहितः सागरश्च । वाहिन्यः सेनाः सरितश्च। मानसं मनः कैलासदीर्घिका च ।

अत्रानियमपरिवृत्तिं दर्शयति—अत्र शोण एवेति । नह्यत्र नियमेनार्थः कश्चित्, प्रत्युत प्रक्रमभेदाद्यनर्थ एव ।

अथ विशेषपरिवृत्तः—श्यामां श्यामलिमानमिति । इयं विरहिणो रावणस्योक्तिः । तद्वक्त्रेति । तच्छब्देन जानकीपरामर्शः ।

साहित्यचूडामणिः

वक्त्रेति । सरस्वती वाक् नदीविशेषश्च । शोणः पाटलः हिरण्यबाहुनामा नदविशेषश्च । वाहिन्यः सेना नद्यश्च । मानसं चित्तं सरोविशेषश्च ।

नियमो न वाच्य इति । राजावयववर्णने नदीप्रसङ्गे वा नियन्तव्यस्याभावात् । पाटल एवाधरः न श्वेतः कृष्णो वा, शोणाख्यो नद एव न पुनर्नदेनद्यन्तरमिति हि नियमः। उभयथाप्यनौचित्याद् ग्राम्यत्वस्य विरुद्धत्वस्य च प्रसङ्गात् । तस्मान्नियमेऽवाच्ये तद्व्यतिरेको दोषः । नचैतदधिकपदमात्रम् आधिक्यादुपरि दोषान्तरस्योल्लिख्यमानत्वात् ।

श्यामामिति । श्यामायाः श्यामलिमा न कश्चिदानेतव्यः । कृतस्य करणायोगात् । (ज्यो ? ज्यौ)त्स्नीमिति तूच्यमाने श्यामलीकरणमपेक्षितं स्यात् ।

१ 'श्रे॰ । श्र' क. ख. घ. पाठः. २. 'दं' घ. पाठः.

अत्र ज्यौत्स्नीमिति[1] श्यामाविशेषो वाच्यः ।

कल्लोलवेल्लितदृषत्परुषप्रहारै

रत्नान्यमूनि मकरालय! मावमंस्थाः ।

किं कौस्तुभेन विहितो भवता न नाम

याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥

अत्र 'एकेन किं न विहितो भवता स नामे'ति सामान्यं वाच्यम् ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत

न्यूनो दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।

सम्प्रदायप्रकाशिनी

विशेषपरिवृत्तिं दर्शयति—अत्र[2] ज्यौत्स्नीमिति । तस्या एव वेदनातिशयहेतुतया श्यामीकरणार्हत्वात् ।

कल्लोलवेल्लितेति ।

अ[3]विशेषपरिवृत्तिमुद्भावयति—एकेन किं नेत्यादि । इतरथा कौस्तुभप्राशस्त्यादेकं याचितं किमन्यैर्वराकैरिति प्रतीतिः स्यात् ।

अर्थित्व इति । दशाननदूतस्योक्तिरेषा ।

साहित्यचूडामणिः

कल्लोलेति । 'अतिपरिचयादवज्ञे'ति नीत्या प्राचीनपरिजनावमानप्रवृत्तं प्रभुं प्रत्यप्रस्तुतप्रशंसा ।

सामान्यं वाच्यमिति । विशेषो न वाच्यः, योऽयं कौस्तुभो नाम प्रातिस्विकः पुरुषोत्तमस्योपहारः कृतोऽभूत् तद्व्यतिरिक्तानां दृषत्परुषप्रहारैरवमत्यनुँज्ञाया[4] अभ्युपगमप्रसङ्गात्, यतो विशेषनिषेधे शेषाभ्यनुज्ञानम् । यो हि सामान्यात्मतया वक्तुमुपक्रान्तः तस्य विशेषाभिधायी शब्दः सम्यग् वाचकतां प्रतिपद्यत इति यावत् । 'एकेन किं न विहित' इत्युक्तौ तु व्यक्तिनिर्देशस्तन्निर्धारणानुक्तिश्चेति रत्नसामान्यावमानपरिहारौचित्यम् ।

१. 'ज्यो' क. पाठः. २. 'त्र हि ज्योत्स्नी' ख. ग. पाठः. ३. 'अत्र वि' ग. पाठः. ४. 'नुज्ञयाभ्यु' क., 'वताया' घ. पाठः.

उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो[1] देवः कथं मृष्यते[2] ॥

अत्र 'स्त्रीरत्नमुपेक्षितुमि'त्याकाङ्क्षति । नहि परस्येत्यनेन सम्बन्धो योग्यः ।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।

---

सम्प्रदायप्रकाशिनी

स्त्रीरत्नं चेत्युक्तं, नतु[3] तत्र क्रिया काचित् । अतः साकाङ्क्षत्वमिति दर्शयति—अत्र स्त्रीरत्नमित्यादि । ननु परस्येति वाक्ये उत्कर्षं[4] च स्त्रीरत्नं चेत्यनुषज्यताम् । नैवम् । 'मानयशसोर्विस्रंसनं चात्मन' इति विजातीयव्यवधानात् । तदेतदभिप्रेत्याह—नहि परस्येत्यादि ।

आज्ञा शक्रेत्यादि[5] । अत्र यदि[6] रावणो न स्यात् तदा सर्वमस्तीति वदता सर्व एव गुणाः प्रत्युत दोषतां नीताः । अतो नासौ वर

साहित्यचूडामणिः

स्त्रीरत्नमिति । अमर्षणो रावणः स्त्रीरत्नमुपेक्षितुं कथं मन्यत इति विवक्षा । नचैतद् न्यूनपदम्, अध्याहारनिरपेक्षमन्विततया वाक्यस्य पूर्णत्वात् । इयत् पुनश्चिन्तनीयम्—मा तावद् दशमुखः परोत्कर्षादिकं मार्षीत् । कथमभिलषितं स्त्रीरत्नं प्रत्यमर्षौचित्यम् । तस्यामर्षणीयतामुचितयितुमुपेक्षितुमित्यर्थं वाक्यार्थं आकाङ्क्षति, नतु शब्दम् ।

ननु यथा (उत्कर्षः) परस्य तथा स्त्रीरत्नमपि परस्येति समन्वये को दोष इत्यत्राह—नहीति । व्यवहितत्वादन्वयस्येति प्रथमो दोषः । परस्येति । स्त्रीरत्नसंबन्धिनः कस्यचिदनवधारितत्वादिति द्वितीयः ।

अपदमुक्तमस्थानमुक्तमाह—आज्ञेति । स्याच्चेदेष न रावण इति । प्रत्युत रावण एवाभूत् । यो लोकरावण इति प्रसिद्धः ।

---

१. 'दसः', २. 'ति' ख. पाठः. ३. 'तु क्रि ग. पाठः. ४. 'र्षं स्त्री' क. घ, पाठः. ५. 'दि । य' ख. पाठः. ६. 'यंव रा' क. घ, पाठः.

उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग् वरो लभ्यते
स्याच्चेदेष न रावणः क्वनु पुनः सर्वत्र सर्वे गुणाः ॥

अत्र 'स्याच्चेदेष न रावण' इत्येतावत्येव समाप्यम् ।

---

सम्प्रदायप्रकाशिनी

इति विवक्षितासिद्धेरिदमेव वाक्यसमापनस्थानम् । प्रकृतानुसन्धान-वन्ध्येन कविना छन्दःपूरणाय केवलं 'क्वनु पुनरि'ति वाक्यान्तरं कृतम् । तदर्थो न केवलं समाप्तपुनरात्तः, यावता वरः स्यादिति विरो-धमप्याविष्करोति ।

तदेतदभिसन्धायाह—अत्र स्याच्चेदिति ।

साहित्यचूडामणिः

"स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्"

इति न्यायादशेषगुणदूषणप्रवीणमेतद्रावणत्वम् ।

एतावत्येव समाप्यमिति । न पुनरुपरि 'क्वनु पुनरि'त्यादिरर्थान्तर-न्यासः प्रयोज्यः । तथात्वे

"एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ।"

इति नीत्या रावणस्यापि वरणीयतया वरणीयत्वप्रसङ्ग इत्यस्थानमुक्तत्वमार्थो दोषः । नचेदं समाप्तपुनरात्तम् । तत्र हि 'नववयोलास्याय वेणुध्वनि'रित्यस्य नानुपादेयत्वम्, अपितु 'प्रेम तनोतु व' इत्यस्य प्रागेवोपादेयत्वं, येन 'केङ्कारः स्मरकार्मुकस्ये'त्यादि कारककदम्बकं कविराख्यातेन संगृह्णन् वाक्यस्य समाप्ति-शङ्कामुद्भाव्य भूयः प्रस्तुतस्मरणन्यायादेकं विशेषणमुपात्तवान् । एकानेकवाक्य-प्रयुक्तश्च भेदः स्पष्टः ।

---

१. 'स्मृ' घ. पाठः.

श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना
नयेन चालङ्क्रियते नरेन्द्रता ॥

अत्र श्रुतिबुद्ध्यादिभिरुत्कृष्टैः[1] सहचरैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।

'लग्नं रागावृताङ्ग्ये'त्यत्र 'विदितं तेऽस्त्वि'त्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

सम्प्रदायप्रकाशिनी

श्रुतेन बुद्धिरिति । समाधिना समाधानेन अव्यग्रतयेत्यर्थः[2] । सहचरभिन्नत्वं दर्शयति — अत्र श्रुतिबुद्धीत्यादि ।

अथ प्रकाशितविरुद्धं — लग्नं रागेति । 'विदितं तेऽस्त्वि'त्यनु[3]क्रोशादर्थान्तरप्रतीतिरिति दर्शयति — अत्र विदितं तेऽस्त्विति ।

साहित्यचूडामणिः

श्रुतेनेति ।

उत्कृष्टैरुपादेयतयोपदेष्टव्यैः श्रुतबुद्ध्यादिभिः सह निकृष्टयोः परिहार्यतया प्रतिपाद्ययोर्व्यसनमूर्खतयोर्भिन्नत्वं विजातीयत्वमिति सहचरभेदः[4] । 'विनयेन वीरते'ति पाठः श्रेयान् । एवम् 'असारं संसारं परिमुषितरत्नं त्रिभुवनमि'त्यादौ 'मरणशरणं बान्धवजनमि'त्यत्राप्ययं दोष उन्नेयः ।

विदितं तेऽस्त्विति । यदेतत् फूत्कुर्वाणाया इव लक्ष्म्या वाक्यं, तेन ततः श्रीरपसरतीति विरुद्धं प्रकाश्यते । व्याख्यातं चैतत् । नचात्र 'श्रितक्षमा' इत्यादिवत् शब्दशक्तिमूला विरुद्धा प्रतीतिः । किन्त्वर्थसामर्थ्यनिबन्धनेति ततो भेदः ।

१. 'त' क. पाठः २. 'दि । ल', ३. 'ति । प्र' ख. ग. पाठः. ४. 'दः । 'विनेयेति वि' घ. पाठः.

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निस्सोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोश्शालिना-
मपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥

अत्र 'शयितः प्रयत्नेन बोध्यसे' इति विधेयम् ।

यथावा —

वाताहारतया जगद् विषधरैरास्वाद्य निश्शेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥

सम्प्रदायप्रकाशिनी

**अथ विध्ययुक्तः— प्रयत्नेति ।**

अत्र 'प्रयत्नपरिबोधित' इत्यनूद्य 'शेष' इति विहितम् । न तद् युक्तं, तथा विध्यप्रयोगात्[1] । अपित्वन्यथाकरणीयमिति दर्श-यति—**अत्र शयित इत्यादि ।**

**वाताहारेति ।**

साहित्यचूडामणिः

**प्रयत्नेति ।** अत्र प्रबोधनस्यानुवाद्यत्वं शयनस्य विधेयत्वं चोक्तं, तदनु-चितं, प्रत्युत शयितत्वमनूद्य परिबोधितत्वस्य विधेयत्वात् । यतः पाण्डवसोमका-दिसकलविपक्षप्रतिक्षेपादुपलब्धनिश्चिन्तनिद्रासुखस्य तव सूतमागधादिभिर्यथा कृच्छ्रेण बोधनीयता तथा करिष्यामीति[2] यावत् तात्पर्यम् । 'सुखेन शयितश्चिरा-दुषसि बोध्यसे मागधैरि'ति युक्तः पाठः । इदं शाब्दं विध्यनुवादानौचित्यम् ।

आर्थमप्याह — वातेति ।

---

१. 'ध्ययो' ख. ग. पाठः. २. 'ति ता' क. ख. ग. पाठः.

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ।

अरे रामाहस्ताभरण! भसलश्रेणिशरण!
स्मरक्रीडाव्रीडाशमन! विरहिप्राणदमन! ।
सरोहंसोत्तंस! प्रचलदल! नीलोत्पल! सखे!
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥

अत्र 'विरहिप्राणदमने'ति नानुवाद्यम् ।

---

सम्प्रदायप्रकाशिनी

अत्र ह्युत्तरोत्तरं दम्भातिशयो विवक्ष्यते। स च व्रताभासपरिग्रह-निबन्धनः। व्रतेषु चेह चर्मवसनतापेक्षया तोयकणिकाव्रतत्वं, तदपेक्षया च वाताहारत्वं[1] [2] प्रकृष्यत इति परिपाट्या विधेयमिति दर्शयति—अत्र वाताहारेति। वाच्यं[3], न च तथोक्तम्, अतो विध्ययुक्त इति शेषः।

अथानुवादायुक्तः—अरे रामेति।

अत्र कार्याकाङ्क्षिणा स्तुवता 'प्राणदमन' इति नीलोत्पलाधिक्षेपोऽनुवादत्वेन न युक्तः, अपितूत्तरकालमभ्यर्थनावैयर्थ्ये विधेयत्वेनैव युक्तः। तदेतदाह—अत्र विरहिप्राणेत्यादि।

साहित्यचूडामणिः

व्युत्क्रमेण वाच्यमिति। कृष्णाजिनधारिणो डाम्भिकादनन्तरमब्भक्षस्य, ततो वायुभक्षस्य विन्यासो न्याय्यः। उत्तरोत्तरमुत्कृष्टडम्भत्वात्। तेन वाताहारस्य मेघतोयकणिकातीव्रव्रतस्य चमूरुचर्मवसनस्य च व्युत्क्रमेण वाच्यत्वम्। तच्च न शक्यं, वाच्यकक्ष्यायां विषधरैर्जगत्पीडा विषधराणां च बर्हिभिर्निबर्हणं[4] बर्हिणां च लुब्धकैरुपसंहार इति क्रमस्यान्यथाकर्तुमशक्यत्वात्। तस्मादचिकित्स्योऽयं दोषः। तारतम्यचिन्तायां विध्यनुवादभावस्यायुक्तत्वात्।

अथ शब्दार्थोभयाधीनमेतदाह— अरे रामेति। भसला भृङ्गाः। विरहिप्राणदमनेति नानुवाद्यं विरहिणां प्राणान् दमयसीति विधेयस्यार्थस्यौ-

---

१. 'वृत्तत्वं त', २. 'बन्धने' क. घ. पाठः. ३. च्यमिति न' ख. ग. पाठः. ४. 'र्हरणं' घ. पाठः.

"लग्नं रागावृताङ्ग्ये"त्यादि । अत्र 'विदितं तेऽस्तु' इत्युपसंहृते 'तेने'त्यादिना पुनरुपात्तः ।

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥

सम्प्रदायप्रकाशिनी

**लग्नं रागेति** । त्यक्तस्य पुनः स्वीकरणं दर्शयति—**अत्र विदितं तेऽस्त्वित्यादि** । नन्वपदमुक्तात् कोऽस्य भेदः । उच्यते । अपदमुक्ते यत्र विवक्षितार्थ[1]परिश्रान्तिस्तदेव वाक्यसमापनस्थानम् । इह त्वेतदेव स्थानमिति[2] न नियमः, अपितु समाप्तो न पुनः स्वीकर्तव्य इति । एतदेवाभिसन्धाय 'अपदमुक्तः[3]' 'त्यक्त[4]पुनःस्वीकृत' इति सार्था संज्ञा ।

**हन्तुमेवेति** । हन्तुं मारयितुं प्राचण्ड्येन रन्तुं च । **स्तब्धस्य** गर्वोन्नतस्य उदञ्चितस्य च । विवरं परच्छिद्रं स्त्रीगुह्यं च ।

साहित्यचूडामणि

चित्यात् । प्रचलदलत्वादिवत् स्वाभाविकविशेषगुणमात्रेणोपन्यासस्यायोग्यत्वात् ।

त्यक्तपुनःस्वीकृतमाह—लग्नमिति ।

**तेनेत्यादिनेति** । विदितं तेऽस्त्वित्यनेन सर्ववाक्यपर्यन्तप्रयोज्येनापि मध्ये गर्भीकृतेन वाक्यार्थ उपसंहृतोऽभूत् । पुनस्तेनासि दत्तेत्युपात्तश्च । तेनायमर्थदोषः । एकवाक्यतायां समासपुनरात्तः । भिन्नवाक्यान्तरस्य व्यक्तमयोग्यतायामपदमुक्तः । विपर्यये वाक्योपसंहारशङ्कामुत्थाप्य पुनरर्थोपन्यासे त्यक्तपुनःस्वीकृत इति विवेकः ।

---

१. 'र्थे विश्रा' ख. ग. पाठः. २. 'ति नि' क. घ. पाठः. ३. 'क्तः' ख. ग. पाठः. ४. 'स्वा' क. घ. पाठः.

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति । तथापि तेषां तत्राप्रकृतत्वात् प्रकाशनं न कृतम् ॥ ७-९ ॥

---

सम्प्रदायप्रकाशिनी

अश्लीलतां दर्शयति — अत्र पुंव्यञ्जनस्यापीति[1] । अपि-शब्दात् प्रकृतदुर्जनस्य ।

नन्वेषु पदादिदोषोदाहरणेषु उदाजिहीर्षितादन्येऽपि दोषा दृश्यन्ते, तेऽपि[2] किं न दर्शिता इत्यत आह—यत्रैको दोष इत्यादि। प्रोक्तेषु[3] सर्वेषूदाहरणेषु सर्व एव प्रदर्शितप्राया एवेति भावः । य एते इयन्तो दोषाः, अयं रसदोषापेक्षया बहिरङ्गो वर्गः ॥ ७-९ ॥

साहित्यचूडामणिः

पुंव्यञ्जनस्यापीति । हन्तुमेव प्रवृत्तस्येति प्रसभप्रयोगारम्भस्य, स्तब्धस्य विवरैषिण इति यन्त्रघटनस्य, यथा जायते पात इति रेतोविसर्गस्य, न तथा पुनरुन्नतिरिति नष्टरागतायाश्च प्रकाशमानत्वात् । शूरस्य पुंसः श्वापदचेष्टितमनुचितमिति विवक्षितोऽर्थः । तत्र पुंव्यञ्जनस्य प्रतीतिरश्लीलत्वप्रतीतये भवतीति वाक्यार्थविषयोऽयं[5] दोषः ।

एतानि दोषोदाहरणानि चायोगव्यवच्छेदमात्रेण, न पुनरन्ययोगव्यवच्छेदेनापीत्याह[6]—यत्रैक इति । तथाहि—'अनङ्गमङ्गलगृहे'त्यादौ कार्तार्थ्यमिति श्रुतिकटु प्रथमं ग्रन्थकारेणैवोक्तम् । तद्वदस्यैँ धातुविश्लिष्टलक्षणत्वादश्लीलत्वमपि। अनङ्गस्य मङ्गलगृहमिति प्रशस्तस्मरमन्दिरप्रतीतिरप्यश्लीलत्वम्। भङ्गितरङ्गितैरिति यथा तन्वङ्गीकटाक्षाणां तारल्यम् एवमनङ्गस्यास्थिरास्पदत्वमिति मतिविरोधकृत्। गृहापाङ्गेति पादसन्धौ श्रव्यताभावेन हतवृत्तत्वम्। यथा वा 'लग्नं

---

१. 'ति । नन्वे' क. ख. घ. पाठः. २. 'तेषां प्रत्युदाहरणं न' क. घ. पाठः. ३. 'प्रान्तेषु', ४. 'यत इयन्तः पदवाक्यपदैकदेशार्थनिष्ठा दो' ग. पाठः. ५. 'गतोऽयं', ६. 'न्ययो', ७. 'न्यथा तु' घ. पाठः.

**कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः।**
**सन्निधानादिबोधार्थं**

सम्प्रदायप्रकाशिनी

**एषां यथासम्भवमदुष्टत्वविषयं दर्शयितुमारभते — कर्णावतंसादीति। अवतंसशेखरादीनि हि नियमेन कर्णमूर्धादिपरिष्काररूपाणीति न कर्णमूर्धादिशब्दोपादानसव्यपेक्षाणि। तथाप्युपादीयन्ते प्रेक्षावत्प्रयोगेषु। कर्णावतंसः शिरश्शेखरमित्यादिषु कर्णादिशब्दा न कर्णाद्यर्थविवक्षयोपादीयन्ते, अपितु कर्णसम्बद्धोऽयमवतंस इत्याद्यर्थविशेषप्रतिपत्तये।**

साहित्यचूडामणिः

रागावृताङ्ग्ये'त्यादि। अत्रापि तावत् कष्टो वाक्यार्थः। तत्रापि कोऽयं रागो नाम। आरुण्यं स्नेहविशेषश्चेति चेद् उभयथाप्यावृतत्वं नेयार्थम्। अङ्गपदमधिकम्। आरुण्येन रुधिरप्रतीतिश्च सुदुर्लभा। सुदृढमिहेति च पदद्वयं पादपूरणमात्रफलम्। ययैवेत्येवकारो व्यर्थः। अवैयर्थ्ये तद्वृत्तेऽपि यद्वृत्तवत् प्रयोगप्रसङ्गात्। अरिकण्ठ इत्यत्र विधेयाविमर्शोऽपि स्यात्। तत्सक्त इति विरुद्धमतिकृद् दुष्परिहरः यस्मिन् नकिञ्चिद्व्रणकत्वं शून्यहृदयताद्योतनादुपयुज्येत। अपीहेति पुनरिहपदं व्यर्थं कथितं च। परपुरुषैरित्युभयथापि पुरुषपदं व्यर्थम् अवकरप्रायमिति। यथावा 'वक्त्राम्भोजमि'त्यादि। अत्र सदा क्षणमपि एव अभीक्ष्णमन्तरित्येतेषां नैरर्थक्यम्। स्मरणकारितया च नतत्वलाभे दक्षिण इति पक्षे व्यर्थः। समुद्रो भुज इति लाञ्छितत्वप्रतीतिश्च। तेऽम्बु इत्यत्र विसन्धित्वम्। वाहिन्य इत्यत्र पक्षे अन्या इति नोक्तं सरस्वत्या नदीत्वात्। स्वच्छेऽन्तरित्यादौ प्रक्रमो भग्नः। अधरस्त इति दक्षिणस्त इति क्षणमपि भवतः (इति) अवनिपते ते इति युष्मद्वृत्तस्य पौनरुक्त्यं प्रक्रमभेदश्च। अस्मिन्निति मानसस्य प्रत्यक्षतया निर्देशश्चानुचितः। वक्त्रमानसाद्यवयवप्रसङ्गे सेनानिर्देशस्य सहचरभेदश्चेत्यलमाग्रहौन्मुख्येन। इत्थं च सर्वत्र सौलभ्येन दोषाणां प्रस्तुतमात्रोपक्षेप इति तात्पर्यम्॥ ७–९.॥

१. 'मदुष्टविषयत्वं द' ग., 'मुद्दिष्टविषयत्वं द' ख. पाठः. २. 'ति क', ३. 'त्वु' क. घ. पाठः. ४. 'न ते क' ग. पाठः. ५. 'न्धो' क. ख. घ. पाठः. ६. 'तू ने' क. ख. ग. पाठः. ७. 'रुक्तप्रतीतिश्च। वक्त्राम्भोजमित्यत्र सिन्धुत्वं वाहि' घ. पाठः.

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते। तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये। यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम्।
तथैव शोभतेऽत्यर्थमस्याः[1] श्रवणकुण्डलम्॥

अपूर्वमधुरामोदप्रमोदितादिशस्ततः।
आययुर्भृङ्गमुखराः शिरश्शेखरशालिनः॥

अत्र कर्णश्रवणशिरश्शब्दाः सन्निधानप्रतीत्यर्थम्।

## सम्प्रदायप्रकाशिनी

**तदेतत् सोदाहरणं व्याचष्टे — अवतंसादीनीत्यादिना।**

**अस्याः कर्णेति। अत्र हि सर्वविभूषणविजयोऽसन्निहितेन[2] न शक्यत इति सन्निधिराक्षिप्यते।**

**अपूर्वमधुरेत्युदाहरणान्तरं प्रसिद्धप्रयोगवैविध्यप्रकाशनाय।**

**अत्र कर्णश्रवणेति। यत[3] इत्थम्, अत एवंविधे विषये न दोष इत्युपदिष्टं भवति।**

## साहित्यचूडामणिः

अथ दोषेषु यथासम्भवं गुणीकारोपाधिमभिधातुकामः प्रथममपुष्टार्थतया शङ्कितमदुष्टं समर्थयति[4]—**कर्णेति**। कर्णादिध्वनिनिर्मितिः कर्णादिशब्दोपादानम्।

**अस्या इति**। अत्र विशेष(ण)त्रयं गतार्थ(म् ? म)दुष्टमिति भावः।

युक्तिं दर्शयति — **कर्णश्रवणशिरःशब्दा इति**। यथाह — 'कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादिनिर्देशः सन्निधेरि'ति। प्रतिपत्तय इति सम्बन्धः। नहि तन्निर्देशमन्तरेण तत्सन्निहितानामवतंसादीनां युक्ता प्रतिपत्तिः।

---

१. 'न्त' क. पाठः. २. 'तेन श', ३. 'क्रियत इत्यर्थः। अ' क. घ. पाठः. ४. 'ते' घ. पाठः. ५. 'षयेत् गतार्थं दुष्टमिति वा। यु' घ. पाठः.

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा विष्फुरितं तव ॥

अत्र धनुश्शब्द आरूढत्वावगतये । अन्यत्र तु "ज्याबन्धनिष्पन्दभुजेने"त्यादौ केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ता-शब्दः ।

---

सम्प्रदायप्रकाशिनी

विदीर्णाभिमुखेति । अत्र हि धनुश्शब्देन ज्यारूढत्वं धनुषः प्रत्याय्यते । अनारूढत्वे तु सङ्गरोपयोग[2]किणजननायोगात् ।

तदेतदाह—अत्र धनुःश(ब्दे ? ब्द इ)ति । प्रतीतिसौकर्याय प्रत्युदाहरति— ज्याबन्धेति । अत्र हि केवला ज्योपयोगिनीति सैवोपात्ता महाकविना ।

प्राणेश्वरेति । अत्र मुक्तानामन्यरत्नामि[3]श्रितत्वं मुक्ताशब्दोऽवबोधय[4]ति । मि[5]श्रिते हास[6]सावर्ण्यासम्भवात् ।

साहित्यचूडामणिः

धनुर्ज्येत्यत्र धनुष्पदं तस्या आरूढत्वप्रतिपत्तये । 'धनुर्ज्याध्वनौ धनुः-श्रुतिरारूढेः प्रतिपत्त्यै' इत्युक्तत्वात् । अन्यत्र त्विति । आरूढत्वाभावे । केवलो ज्याशब्द इति । बन्धनं प्रति मौर्व्या एवोपयोगः, न धनुष्काण्ड-स्यापि ।

अन्यरत्नेति । अन्यैः पद्मरागादिभिर्मणिभिर्यदमिश्रणमसङ्कीर्णत्वं त-द्बोधनाय । यदाह 'मुक्ताहारे मुक्ताशब्दः शुद्धेः' इति ।

---

१. 'त्र ज्या', २. 'किरण' ख. पाठः. ३. 'श्रत्वं' ख. ग. पाठः. ४. 'ति । अमि' ख. पाठः. ५. 'श्रितत्वे हा' ख., 'श्रत्वे हा' ग. पाठः. ६. 'साम्यस' ख. पाठः.

**सौन्दर्यसम्पत् तारुण्यं यस्यास्ते ते च विभ्रमाः ।**

**षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ! ॥**

**अत्रोत्कृष्टपुष्पधिये पुष्पशब्दः । निरुपपदो हि माला-शब्दः पुष्पस्रजमेवाभिधत्ते ॥**

**स्थितेष्वेतत् समर्थनम् ॥ १० ॥**

सम्प्रदायप्रकाशिनी

**सौन्दर्येति** । षट्पदाकृष्टिरुत्कर्षे लिङ्गम् ।

ननु मणिमालेत्याद्यपि दृश्यते, अतो मालाशब्दः साधारण इत्यत आह — **निरुपपदो हीति** प्रसिद्धिर्दर्शिता । एवेत्यर्थान्तर-निवृत्तिः । **अभिधत्त इति** तु मणिमालादौ लक्षणेति सूचयितुम् ॥

नन्वेवं विवक्षाविशेषाश्रयणस्य सुशकत्वात् पुनरुक्तजातस्यैवा-दुष्टत्वं प्राप्तमित्यत आह — **स्थितेष्वेतत् समर्थनम्** । वृद्धप्रयोग-

साहित्यचूडामणिः

**उत्कृष्टेति** । उत्कृष्टानां पुष्पाणां धिये संविदे । यथाह 'पुष्पमाला-शब्दे पुष्पपदमुत्कर्षाय' । ननु मालाशब्दोऽन्यत्रापि वर्तते रत्नमाला शब्द-मालेति चेत् तत्राह—**निरुपपद इति** । मालाशब्दः पुष्पविषय एव मुख्यः । अन्यत्र त्वौपचारिक इति भावः । एव करिकलभशब्दस्ताद्रूप्यप्रतिपत्तय इत्यादि मन्तव्यम् । यथा ममैव —

स्वैराटोपसहिष्णु हन्त विजहौ स्वं सल्लकीनां वनं
लेभे डिण्डिमपट्टबन्धललितां लक्ष्मीं न राजाङ्गणे ।
वातव्याकुलिते जरत्प्रवहणे बद्धो विघूर्णन् मुहु-
र्मध्येवारिधि कुञ्जरेन्द्रकलभः कष्टां दशामश्नुते ॥

अत्र कलभस्य कुञ्जरेन्द्रेण ताद्रूप्यमत्यन्तश्लाघ्यत्वनिबन्धनं तादात्विकी शो-च्यता च प्रतिपद्यते ।

**स्थितेष्वेतदिति** । परिगृहीतचरेषु प्रयोगेषु संविधानमेतत् ।

१. 'त्याह' क. ख. पाठः. २. 'ति म', ३. 'चितम्', ४. 'यस्य' ख. ग. पाठः. ५. 'ङ्क' क. घ. पाठः.

नखलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते ।

जगाद मधुरां वाचं विशदाक्षरशालिनीम् ।

इत्यादौ क्रियाविशेषण*त्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं प्रयोगः कार्य इति न युक्तमुक्तम् । युक्तत्वे वा

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम् ।

पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते ॥

सम्प्रदायप्रकाशिनी

सिद्धेष्वेवंविधविवक्षाविशेषैः समर्थनं, प्रामाणिकस्य[1] वृद्धप्रयोगस्यानतिलङ्घ्यत्वात् ।

व्यतिरेकमुदाहरति — नखलु कर्णेत्यादि ।

यत्तु वामनादिभिरुक्तं तदयुक्तमिति दर्शयति — जगाद मधुरामित्यादि । अत्र विशेष्याया[2] वाचो गदनाव्यभिचारात् पुनरनुपादेयत्वेऽपि मधुरामिति विशेषणदानार्थं पुनरुपादानमिति यदुक्तं तदयुक्तम् । तत्र हेतुः — क्रियाविशेषणत्वेऽपीति । नहि गदनाव्यभिचारिण्या वाचो गदनमाधुर्यान्माधुर्याप्रतीतिः । नच[3] वाच्यं माधुर्यप्रतीतिः शाब्दी न स्यादिति । अपर्यवसानसिद्धोऽपि शाब्द एवेत्युपपादितत्वात् । अतो नैवमादि युक्तम् । यदि च युक्तं स्यात् तदा[4] विषयान्तर एवेत्याह — युक्तत्वे वेति ।

चरणत्रेति । चरणत्रमुपानत् । नहि चरणत्रपरित्राणराहितत्वं

साहित्यचूडामणिः

एवं वामनालङ्कारे संप्रतिपन्नमुक्त्वा विप्रतिपन्नमंशमाह — जगादेति । न युक्तमुक्तमिति । मधुरं जगादेति क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतौ सत्यां व्यर्थो विशेष्यप्रयोगः । अभ्युपगम्याप्याह — युक्तत्वे वेति ।

१. 'कत्र' ख. पाठः. २. 'स्यान' ग. पाठः. ३. 'ध्यत्वाद् वा' क. घ, 'ध्यया वाचा ग' ख. पाठः. ४. 'र्याप्र' क. ख. घ. पाठः. ५. 'नखलु वा' ख. पाठः. ६. 'दा विशेषास्ता वि' क. घ. पाठः.

* 'त्त्वेनापि' इति मूलकोशपाठः.

इत्युदाहार्यम् ॥ १० ॥

ख्यातेऽर्थे निर्हेतोरदुष्टता

यथा—

चन्द्रं गता पद्मगुणान् न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतुं नापेक्षते ॥

---

सम्प्रदायप्रकाशिनी

व्रजनक्रियाविशेषणतया सम्भवति ॥ १० ॥

क्वचिन्निर्हेतोरदुष्टतां दर्शयति—ख्यातेऽर्थ इति ।

चन्द्रं गतेति ।

ख्यातिमुद्भावयति—अत्र रात्रावित्यादि । न भुङ्क्त इति । एतद्वाक्यमिति शेषः ॥

साहित्यचूडामणिः

चरणत्रेति । पादव्यतिरेकेण वाहनादिनापि मार्गगमनस्य सम्भावितत्वादध्वानं व्रजन्नित्युक्तेऽपि भूयः पद्भ्यामिति वक्तव्यम् । तदवतरणिकया चरणत्रेत्यादेरपि विशेषणस्य वक्तव्यत्वमिति ।

उदाहार्यमिति । न पुनर्जगाद मधुरां वाचमिति ॥ १० ॥

अथ निर्हेतावुदाहरति—ख्यातेऽर्थ इति । इदमेतन्निमित्तकमिति लोकप्रसिद्धे प्रमेये निर्हेतोरदुष्टता, न पुनर्गुणीभावः । भविष्यत्येतत् ।

चन्द्रमिति । उमामुखप्रतिपत्तेः पूर्वं लोला ।

लोकप्रसिद्धमिति । लोकलक्षणात् प्रमाणात् प्रसिद्धम् । हेतुं नापेक्षत इति । चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्यां न

---

१. 'क्व इति' ख. ग. पाठः.

**अनुकरणे तु सर्वेषाम् ।**

श्रुतिकटुप्रभृतीनां दोषाणाम् । यथा —

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥

**वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित् क्वचि-**
**[न्नोभौ ॥ ११ ॥**

सम्प्रदायप्रकाशिनी

**अनुकरणे** त्विति । अनुकरणशब्दानामपशब्दार्थकसुशब्दान्तरत्वाददुष्टता ।

**मृगचक्षुषमिति** । गवित्याहेति च्युतसंस्कृतिः । सुत्रामाणमित्यप्रयुक्तम् । एवमन्यत् ज्ञेयम् ॥

सम्प्रति दोषाणां गुणीभावं दर्शयति — **वक्त्राद्यौचित्येति** । **नोभौ**, गुणदोषावुभावपि न भवतः ।

साहित्यचूडामणिः

भुङ्क्ते । कुतः । रात्रौ पद्मस्य सङ्कोचाद् दिवा शशाङ्कस्य निष्प्रभत्वाद् इत्यास्त्रीबालं प्रसिद्धो हेतुः । तत्र किं शब्दोपादानक्लेशेन ॥

अथ सामान्येन सर्वेषां दोषाणामदोषत्वनिबन्धनमाह — **अनुकरण** इति । शब्दस्य ताद्रूप्येणाभिधानमनुकरणम् ।

**मृगचक्षुषमद्राक्षमिति** श्रुतिकटु । गौरिति वक्तव्ये गविति गावीतिवदुक्तत्वादसाधु । यजेत्यत्रात्मनेपदस्य प्रयोज्यत्वात् । एषामनुकरणतायां न दोषः ॥

अथ व्यक्तिनिष्ठतया यथायोगं दोषाणामदोषत्वोपाधिमाह — **वक्त्रादीति** । दोषोऽपि क्वचिद् गुणः क्वचिन्न दोषो न गुणः, यावत् ताटस्थ्येनावस्थानम् ।

---

१. 'क्षीरित्या' क. पाठः. २. 'नां परशब्दार्थकमपरशब्दपदार्थक' क. घ. पाठः. ३. 'ब्दपदार्थ' ख. पाठः. ४. 'ण इ' क. घ. पाठः. ५. 'त्वमा' क. ख. ग. पाठः.

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद् गुणः, क्वचिन्न दोषो न गुणः । तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये वा रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः । क्रमेणोदाहरणम् ।

दीधीवेवीङ्समः कश्चिद् गुणवृद्ध्योरभाजनम् ।
क्ङित्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥

यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च सम्मदम् ॥

---

सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे—वक्तृप्र(करणे ? तिपाद्ये)त्यादि । वैयाकरणादावित्यादि ।

दीधीवेवीङिति[1] । गुणः औदार्यादिः अदेङ् च । वृद्धिरभिवृद्धिः आदैच । गुणवृद्धी[2] 'दीधीवेवीटाम्' (१. १. ६) इति सूत्रेण प्रतिषिध्येते । 'क्ङिति च' (१. १. ५) इत्यनेन तु क्ङित्प्रत्ययसन्निधावपि । अत्र वक्तुर्वैयाकरणत्वप्रकर्षद्योतकमिति वक्त्रौचित्यात् कष्टत्वं गुणः ।

प्रतिपाद्यौचित्यादुदाहरति—यदा त्वामिति । समस्प्राक्षं संस्पृष्टवानहमभूवम् । सम्मदो हर्षः ।

साहित्यचूडामणिः

कश्चिन्मन्दभाग्यो दीधीवेव्योर्धात्वोः समः सन् गुणस्यौदार्यादेः सम्पत्तिलक्षणायाश्च वृद्धेरभाजनमपात्रं स्यात्, यथा 'दीधीङ् दीप्तिदेवनयोः', 'वेवीङ् वेतिना तुल्ये' इति पठितौ धातू गुणस्यादेङ्लक्षणस्य वृद्धेरादैज्लक्षणायाश्च पात्रं न स्तः, 'दीधीवेवीटामि'ति सूत्रात् । अन्यश्च दौर्जन्यशाली क्ङित्प्रत्ययसदृशः । यत्र सति परे च ते न सन्निहिते गुणवृद्धी 'क्ङिति चे'ति प्रति-

---

१. 'टामिति' ख. पाठः. २. 'द्धीति दी' क. घ. पाठः.

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्कणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लल-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं[1] धावति ॥

वाच्यवशात् —

मातङ्गाः! किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः!
सारङ्गा महिषा मदं व्रजथ किं शून्येऽ[2]थ शूरा न के ।
कोपाटोपसमुद्भटोत्कै[3]टसटाकोटेरिभारेः शनैः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

प्रकरणवशाद् यथा —

रक्ताशोक! कृशोदरी क्वनु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वाता*वधूतं शिरः ।

सम्प्रदायप्रकाशिनी

रौद्ररसे[4] व्यङ्ग्ये उदाहरति — आन्त्रप्रोतेति । इदं ताटकावर्णनम् ॥

अथ वाच्यौचित्याद् — मातङ्गा इति ।

परुषाः शब्दा[5] इति । गुण इति शेषः ।

साहित्यचूडामणिः

षेधात् तत्प्रत्ययासन्नायाः प्रकृतेर्न स्तः । अत्र कष्टत्वं गुणः, न दोषः येन वैयाकरणो वक्ता । यदा त्वामहमित्यादौ स एव प्रतिपाद्यः ।

शून्य इति । शून्ये स्थाने के न शूरा इति प्रश्ने सर्वेऽपि शूराः ।

सिंहे वाच्य इति । सिंहो हि सत्त्वोत्कर्षाद् उत्साहशाली वीररौद्रादिरसोचित इति परुषा अपि शब्दाः प्रयुक्ताः ।

१. 'र्पोद्ध', २. 'न्येषु शू', ३. 'द्भ' ख. पाठः. ४. 'सादिव्य', ५. 'ब्दाः गु' ख. ग. पाठः.

* 'ताभिभूतं' इति मूलकोशपाठः ।

उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-

स्तत्पादाहृतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥

अत्र शिरोधूननेन कुपितस्य वचसि ।

*क्वचित्तु नीरसे न गुणो न दोषः । यथा —

शीर्णघ्राणाङ्घ्रिपाणीन्† व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्

दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।

घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-

र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥

---

सम्प्रदायप्रकाशिनी

प्रकरणवशादुदाहरति—रक्ताशोकेति । षट्पदघटा षट्पद-समूहः ।

कोपस्य प्राकरणिकतां दर्शयति — अत्र शिरोधूननेनेति ।

नोभावित्येतदुदाहरति — शीर्णघ्राणेति । अपघनैः अङ्गैः । दीर्घाघ्रातान् अतिवेलमुपहतान् । उल्लाघयन् आमयान्मोचयन् । घृणा करुणा तन्निघ्ना निर्विघ्ना वृत्तिर्वर्त्तनं यस्य ॥

साहित्यचूडामणिः

शिरोधूननेनेति । प्रकृतेन रक्ताशोककर्तृकेण शिरोधूननेन कुपितस्य कस्यचिद्रागोन्मत्तस्य[1] वचसि उत्कण्ठाघटमानेत्यादौ श्रुतिकटुशब्दप्रयोगो गुणः ।

अन्यानुन्मीलितमर्थमुन्मीलयति— क्वचित्त्विति । उद्धतशब्दप्रयोगोप[2]-बृंहणस्य वीरादेरसम्भवान्न गुणः । मसृणपदरचनोचितस्य[3] शृङ्गारादेरसम्भवात्[4] न दोषः ।

शीर्णेति । अत्र नीरसे शब्दपारुष्यं गुणदोषद्वितयकक्ष्यामतिक्रम्य ताटस्थ्येन वर्तते ।

---

१. 'स्य कस्यचिद् व' क. पाठः. २. 'गादुप', ३. 'नौचित्यस्य', ४. 'रभावा' घ. पाठः.

---

* 'क्वचिन्नीरसे', † 'पाणीन् इत्यादौ ।' इति मूलकोशपाठः ।

अप्रयुक्तनिहतार्थौ श्लेषादौ न दुष्टौ । यथा —

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥

सम्प्रदायप्रकाशिनी

च्युतसंस्कृत्यसमर्थयोर्नित्यदोषतामभिसन्धायाह—अप्रयुक्तनिहतार्थावित्यादि ।

येन ध्वस्तेति । ध्वस्तमनोभवेन निर्नाशितकामेन बलिजित्कायः विष्णोर्वपुः पुरास्त्रीकृतः पुरेषु त्रिष्वस्त्रतां नीतः, यश्चोद्वृत्तभुजङ्गहारवलयः[1], यश्च गङ्गामधारयत्, यस्य शिरः शशिमदाहुः अमराः स्तुत्यं नाम च हर इति, अन्धकासुरक्षयकरः उमाधवः त्वां सर्वदा पायादित्येका योजना । अथाभवेन निस्संसारेण येन अनः शकटं ध्वस्तं येन च बलिजित् त्रिविक्रमदशावस्थो महापुरुषाकारः कायः पुरा अमृतसंविभागसमये स्त्रीकृतः स्त्रीत्वं नीतः, यश्चोद्वृत्तं भुजङ्गं कालियाख्यं[2]

साहित्यचूडामणिः

येनेति । त्वामुमाधवः पार्वतीपतिः सर्वकालं पायात् ध्वस्तमनोभवेन निहतमन्मथेन येन बलिजित्कायः वैरोचनिविमाथिनः पुरुषोत्तमस्य शरीरं पुरा बाणीकृतः । उद्वृत्ता भयङ्करा भुजङ्गा एव हाराः कण्ठाभरणं वलयः कटकश्च[3] यस्य । गङ्गां भागीरथीं यः शिरस्यधारयत् यस्य च शिरः शशिमदाहुः । शशी विद्यतेऽत्र इति शशिमत् । किञ्च यस्य नाम सकलदुरितहारितया हर इत्याहुः । अन्धकाख्यस्यासुरस्य विनाशकरः सः पायादिति । अथ सर्वदः समस्ताभिलषितप्रदायी माधवो मुकुन्दः पायात् । अभवेन येनावतारपरम्परायामपि तत्त्वचिन्तायामजन्मना अनः शकटं ध्वस्तम् अस्तम् अग्रपदेन निक्षिप्तम्[4] । बलिनो दानवान् जितवान् कायः स्वं शरीरं पुरेत्यमृतमथनवेलायां स्त्रीकृतः नारीकृतः । अमृतापहारिणो दानवान् अङ्गनारूपो भगवान् व्यामोहयामासेति

१. 'यः गङ्गां च योऽधा' ख. ग. पाठः. २. 'न वै', ३. 'श्च', ४. 'वि' घ. पाठः.

अत्र माधवपक्षे शशिमदन्धकक्षयकरशब्दावप्रयुक्त-निहतार्थौ ।

अश्लीलं क्वचिद् गुणः । यथा सुरतारम्भगोष्ठ्यां 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितौ—

---

सम्प्रदायप्रकाशिनी

हतवान्, रवे शब्दब्रह्मणि लयस्ताद्रूप्यापत्तिर्यस्य, यद्वोद्वृत्तभुजङ्ग[3] हत-वद् अरवलयं यस्य, अगं गोवर्धनं पृथ्वीं च योऽधारयत्, यस्य च स्तुत्यं नाम शशिमच्छिरोहर इत्याहुः । शशिनं मथ्नाति यो राहुस्त-च्छिरोहर इत्यर्थः । अन्धकानां वृष्णिसहचराणां क्षयकरः निवासकृत्, सर्वप्रदः स माधवः पायाद् इति द्वितीया योजना ।

अत्र माधवपक्ष इति । शशिमच्छब्दो हि राहावप्रयुक्तः । अ-न्धकक्षयकरशब्दश्च निहतार्थः ॥

अथाश्लीलस्य गुणीभावार्थमाह—अश्लीलं क्वचिदित्यादि ।

साहित्यचूडामणिः

पौराणिकाः । उद्वृत्तो लोकातिक्रान्तच[6]रित्रो यो भुजङ्गः कालियः तस्य हारवः फणाफलकताण्डवे श्रमप्रयुक्तः शब्दः स एव लयस्तालावच्छेदो[7] यस्य । अगं पर्वतं गोवर्धनाख्यं पर्वतं मन्दरं वा गां भुवम[8]म्बुधिमग्नां च योऽधारयत् । यस्य नाम शशिमच्छिरोहर इत्याहुः । शशिनं मथ्नातीति शशिमत् विधुन्तुदः तस्य शिरो हृतवानिति । अन्धकानां यादवानां क्षयमावासं कृतवानिति ।

माधवपक्ष इति । शशिमदन्धकक्षयकरशब्दौ क्रमादप्रयुक्तनिहतार्थौ । शशिमदिति राहावप्रयुक्तः । अन्धकक्षयशब्दो निहतार्थः । अन्धकस्य यादवे-भ्योऽपि दैत्यविशेषे क्षयस्य निवासादपि विनाशे प्रसिद्धिबाहुल्यात् । श्लेषालङ्का-रोपगृहीतत्वादनयोरदुष्टत्वम् अर्थद्वयानुकूला शब्दरचनात्र श्लेषः नपुन'र्वाच्य-भेदेन भिन्ना' इत्यादिना लक्षयिष्यमाणः । शब्दार्थनिबन्धनत्वात् श्लेषस्यैव बल-वत्त्वमनुक्तमप्यङ्गीकार्यं ध्वनिवैलक्षण्याय ।

---

१. 'लत्वं क' ख. पाठः. २. 'त्तं', ३. 'ङ्गं हारवलयं' क. घ. पाठः. ४. 'ष्णीनां क्ष' ख. ग. पाठः. ५. 'कृ:', ६. 'चा', ७. 'दोऽस्य', ८. 'ख्यं म', ९. 'मबुद्धिमतां च', १०. 'तु' घ. पाठः.

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥

शमकथासु —

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरक्रिमेः कस्य जायते ॥

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।

---

सम्प्रदायप्रकाशिनी

"व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्वि"ति कामशास्त्रश्लोकाङ्घ्रिः । संवादाय — करिहस्तेति । करिहस्तः शुण्डा मदनमन्दिरमर्दनायोपरचितः करसन्निवेशविशेषश्च । यदुक्तं—

"तर्जन्यनामिके श्लिष्टे मध्या पृष्ठस्थिता तयोः ।
करिहस्तः"

इति । ध्वजः पताका पुंव्यञ्जनं च । साधनं सेना स्त्रीव्यञ्जनं च ।

अथ जुगुप्साश्लीलस्य शमकथासु गुणत्वम् — उत्तानोच्छूनेति । स्त्रीव्रणं योनिः । तत्र सक्तः क्रिमिरेवेति भावः ।

अमङ्गलाश्लीलस्योदाहरति— निर्वाणवैरेति । रक्ता अनुरक्ता

साहित्यचूडामणिः

करिहस्तेनेति । कामतन्त्रोक्तेन हस्तविशेषेण संबाधे मदनमन्दिरे विलोलिते क्लेदिते पुंसो ध्वजो मेहनदण्डः साधनान्तर्विराजते योन्यन्तराले शोभत इति सुरतारम्भोचितं वस्तु । तच्च व्यर्थैरुभयार्थैर्गोपनीयमर्थं सूचयेदिति कामशास्त्रस्थितौ सत्यां कस्यचिद् ध्वजः केतुः संबाधे सैन्यसंमर्दे करिहस्तेन गजशुण्डया क्षोभिते सति उपसर्पन् स्वपक्षं प्रत्यावर्तमानः साधनान्तः बलमध्ये विराजत इत्यनेन वाक्येन व्रीडापरिहारार्थं व्यवह्रियते ।

जुगुप्साश्लीलं शमकथासु गुणः ।

उत्तानेति । क्रिमेश्चेज्जायेतापि नाम । अक्रिमेर्न कस्यापि जायते ।

---

१. 'गाहते' क. पाठः. २. 'स्तस्त्विति' क. घ. पाठः. ३. 'ते शो', ४. 'जः सं', ५. 'कृमिश्चे', ६. 'कृ' घ. पाठः.

रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

अत्र भाव्यमङ्गलसूचनम् ।

सान्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतिपत्तिं कृत्वैव व्याजस्तुतिपर्यवसायित्वे गुणः । यथा —

पृथुकार्तस्वरपात्रं भूषितनिश्शेषपरिजनं देव! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥

---

सम्प्रदायप्रकाशिनी

प्रकर्षेण साधिता च भूयैस्ते च रुधिरेण प्रसाधितभुवश्च । क्षतविग्रहा उपरतयुद्धाः खण्डितवपुषश्च । स्वस्थाः अव्याकुलाः स्वर्गताश्च ।

अमङ्गलस्य गुणत्वमुद्भावयति — अत्र भाव्यमङ्गलेति । कुरूणाममङ्गलं भावीत्यनेन सूच्यते ।

सन्दिग्धस्य गुणीभावविषयमाह — सन्दिग्धमपि वाच्ये-त्यादि ।

पृथुकार्तस्वरेति । पृथु स्थिरं कार्तस्वरं कनकं, पृथुकानामर्भकाणां क्षुधादिदुःखेनार्तस्वरं च । भूषितः परिष्कृतः, शयनाभावाद्

साहित्यचूडामणिः

भाव्यमङ्गलेति । रक्ता अनुरक्ता प्रसाधिता प्रकर्षेण[1] साधिता स्वीकृता भूयैः क्षतो विग्रहो विरोधो येषां स्वस्थाः प्रकृतिस्था इति प्रतीतौ यद्र-क्तेन रुधिरेण प्रसाधिता भूषिता[3] भूर्येषां क्षता विग्रहाः शरीराणि येषां स्वस्थाः स्वर्गस्था इत्यमङ्गल[4]वस्तु तस्य शत्रुविषये भविष्यदमङ्गलसूचकतया गुणत्वम् ।

सन्दिग्धमपीति । वाच्यमहिम्नाभिधेयप्रभावेन नियतस्यैको[5]र्थस्य प्रवृत्तिं[6] कृत्वैव न कदाचिदकृत्वा तस्य वक्ष्यमाणव्याजस्तुतिपर्यवसायित्वे[7] गुणत्वम् ।

पृथुकार्तस्वरेति । आवयोः सदनं सममिति यत्साम्यं तत्किमुभयो-रैश्वर्याद् आहोस्विद्दारिद्र्यादिति प्रमुखतः सन्देहे[8]ऽपि राजवेश्मन्यैश्वर्यं स्वभवने

---

१. 'लत्वगुणसु' ख. ग. पाठः. २. 'ण स्वी', ३. 'ता वि', ४. 'लै प्रस्तु', ५. 'कस्यार्थ', ६. 'प्रतिपत्तिं', ७. 'त्वेति पृ', ८. 'पीति स' घ. पाठः.

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः । यथा—

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोत्कर्षाद्* विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥

सम्प्रदायप्रकाशिनी

भूमावुषितश्च । विलसन्त्यः करेणवः, विलसत्[1]कैर्बिले वसद्भिः मूषिकादिभिः कीर्णा रेणवश्च ।

अथाप्रतीतस्य गुणत्वम्— आत्मारामा इति । देहादिमितप्रमातृतानिमज्जने सति परानन्दसान्द्रे स्वात्मवस्तुन्येव ये रमन्ते ते आत्मारामाः । नीलादेर्विद्यान्ताद् विकल्पान्निष्क्रान्तो निर्विकल्पः समाधिः । ज्ञानं स्वप्रकाशं तस्योत्कर्षोऽनवच्छिन्नताप्रत्यभिज्ञा[2]नम् । विघटिततमोग्रन्थयः उद्दलितभेदभ्रमदार्ढ्याः । अतएव सत्त्वनिष्ठाः जाग्रदादिषु पदेषु न कदाचिदपि राजसाद्युपरागदूषिताः । एवंविधास्तमसां

साहित्यचूडामणिः

दारिद्र्यमिति निष्कर्षः । ततश्चेयं व्याजरूपा स्तुतिः यत्र निन्दायां तात्पर्यम् । पृथूनि विशालानि कार्तस्वरपात्राणि[4] यत्र भूषितोऽलंकृतः सर्वः परिजनो यत्र विलसन्तः शोभमानाः करेणवः करिणः तैर्गहनमिति राजमन्दिरे । दरिद्रगृहे च पृथुकानां बालानामर्थाद् बुभुक्षितानामार्तस्वरस्य दीनध्वनेः स्थानं भुवि भूमौ उषितः खट्वाद्यभावेन स्थण्डिलशायी निःशेषः मौलिमाल्यरहितः परिजनो यत्र बिले रन्ध्रे सीदन्ति विलसदो मूषिकादयः, कुत्सायां कन्, तेषां रेणुभिः पांसुभिः गहनम् ।

प्रतिपाद्यप्रतिपादकयोरिति । बोद्धव्यस्य वक्तुश्च ज्ञत्वे व्युत्पन्नत्वे सति अप्रतीतं गुणः ।

आत्मेति । आत्मनि स्वस्मिन् आरमन्ति बहिः प्रपञ्चक्षोभव्यपोहेन

१. 'लस', २. 'नं तेन वि', ३. 'दिप' ग. पाठः. ४. 'णि काञ्चनपात्राणि य', ५. 'ना ये क', ६. 'न्तीति वि', ७. 'येति' घ. पाठः.

* 'त्सेकाद्' इति मूलकोशपाठः ।

स्वयं वा परामर्शे यथा —

षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥

---

सम्प्रदायप्रकाशिनी

ज्योतिषां च परस्तात् तत्तदवच्छेदकत्वात् तदतिलङ्घिनं यं वीक्षन्ते तं पुराणं देवम् अनिदंपूर्वकं प्रकाशैकघनं वस्तु कथं मोहान्धो वेत्ति । अत्राभिज्ञव्यवहारे केवलशास्त्रप्रसिद्धोऽपि गुणः ।

यदा चाभिज्ञः स्वयमेव तत्त्वं परामृशति तदापि गुणः । तदुदाहरति— षडधिकेति । शक्तेराद्याया विमर्शात्मिकायाः नाथः न्यग्भावनोद्भावनप्रभुः प्रकाशात्मा शिवो जयति विश्वस्मादुत्कृष्यते । जयत्यर्थो हि निकृष्टस्य विश्वस्य नमस्काराक्षेपकः । तेन परिमितप्रमातृतानिमज्जनेन परमप्रमातरि तत्र सरसो भवामीति व्यज्यते । कीदृशः, शक्तिभिः परिणद्धः आदिशक्तिव्यष्टिभिः खेचरीगोचर्यादिभिः करणशक्तिभिर्ब्राह्म्यादिकवर्गादिशक्तिभिश्च परितः सम्बद्धः । कुत्रायमवस्थितः । षडधिकानां (दशानां) षोडशानां सुषुम्नेडापिङ्गलादिप्रधाननाडीनां

साहित्यचूडामणिः

क्रीडन्त्यात्मारामाः । अत्र विकल्पसमाधितमःसत्वादयः शब्दा योगशास्त्रादिप्रसिद्धत्वादप्रतीता अपि वक्तृबोद्धव्ययोर्व्युत्पन्नत्वाद् गुणः ।

स्वयं वेति स्वहृदयर्थपरामर्शवेलायामप्यप्रतीतं गुणः । षडधिकेति । षोडशनाडीनां यन्मण्डलं पिण्डरूपं तस्य मध्यं हृदयं तत्र स्थितः । तत एवात्मभूतश्च । उक्तं हि —

"इडा च पिङ्गला चैव सुषुम्ना च परा मता ।
गान्धारी हस्तिजिह्वा च यूषा च सुयशा तथा ॥
अलम्बुसा कुहूश्चैव शङ्खिनी दशमी तथा ।
तालुजिह्वभंजिह्वे च विजया कामजापरा ॥

---

१. 'तद' ग. पाठः. २. 'भि' क. घ. पाठः. ३. 'ङ्घ' क. ख. घ. पाठः. ४. 'नादिपू' क. घ, 'नादिं पू' ख. पाठः. ५. 'ज्ञस्य व्य' ख. ग. पाठः. ६. 'भिः ब्राह्मया' ग. पाठः. ७. 'मर्थः । ष' क. घ. पाठः. ८. 'प्रविम', ९. 'वि' घ. पाठः.

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा—

फुल्लुक्करं कळमकूरणिहं वहन्ति

जे सिन्दुवारविडवा मह वळ्ळहा दे ।

---

सम्प्रदायप्रकाशिनी

यच्चक्रं नाभ्यात्मकं तत्र शक्तिसङ्घट्टात्मनि अवस्थितनिजस्वरूपः । ध्यानपूजाद्यर्थं तु हृदि विनिहितरूपः अन्तःकरणविनिवेशितस्थूलसूक्ष्माद्याकारः । एवं नित्यसन्निकृष्टोऽपि तद्विदां सिद्धिदः उक्तस्वरूपविदां सिद्धानां भोगमोक्षप्रदः । साधकैः पुनरविचालितमनोभिरवृत्तिकान्तःकरणैरन्विष्यमाण इति संक्षेपार्थः । प्रपञ्चोऽस्य रहस्यत्वादनुपयोगाच्च न कृतः । अयं कपालकुण्डलायाः स्वयं परामर्शः ।

ग्राम्यस्य दर्शयितुमाह— अधमप्रकृतीति ।

फुल्लुक्करमिति ।

कुसुमोत्करं कलमभक्तनिभं वहन्ति

ये सिन्दुवारविटपा मम वल्लभास्ते ।

साहित्यचूडामणिः

अमृता बहुला नाम नाड्यो वायुसमीकृताः ।"

इति । यद्वा नाडीनां यानि षोडश चक्राणि मूलादय आधारांश्च तेषां मध्ये यदनाहतरूपं तत्र स्थितात्मा शक्तीनामिच्छाज्ञानक्रियोपलक्षितपरिस्पन्दस्वभावानां नाथः प्रयोक्ता । परिणद्ध इति विषयव्याप्तिः ।

"शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते ।

शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांश्च महेश्वरः ॥"

इत्युक्तत्वात् । अत्र नाडीसिद्ध्यादिपदानामागममात्रप्रसिद्धानामपि स्वयं विम्रष्टव्यतया गुणत्वम् ।

अधमप्रकृतयो नीचपात्राणि । तदुक्तिषु ग्राम्यो गुणः ।

फुल्लुक्करमिति । कूरमन्नम् । विचकिलो मल्लिका ।

---

१. 'ज्या' ख. ग. पाठः. २. 'स्वपदध्या' ख. पाठः. ३. 'पवनध्या' ग. पाठः. ४. 'णे' क. घ., 'णनि' ख. ग. पाठः. ५. 'भिः पुनरावृ' ग. पाठः. ६. 'ति । कुसुमोत्करमिति । कु' क. घ. पाठः. ७. 'राः ते', ८. 'ध्यमना', ९. 'तं' घ. पाठः. १०. 'त्वा' क. ख. ग. पाठः. ११. 'तस्वप', १२. 'सर्वं श' घ. पाठः.

जे गाळिअस्स महिसीदहिणो सरिच्छा
दे किञ्च मुद्धविअइळ्ळपसूणपुञ्जा ॥*

अत्र कलमभक्तमहिषीदधिशब्दा ग्राम्या अपि विदूष-
कोक्तौ ।

न्यूनपदं क्वचिद् गुणः । यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।

सम्प्रदायप्रकाशिनी

ये गालितस्य महिषीदध्नः सदृशा-
स्ते किञ्च मुग्धविचकिलप्रसूनपुञ्जाः ॥

गालितं स्रावितम् ।

अत्र कलमेत्यादि । गुणा इति शेषः ।

न्यूनपदस्य गुणत्वं— गाढालिङ्गनेति । अत्र मा मेत्यादाव-
र्धोक्तिरेव भावावसानशंसिनीति गुणः ॥

साहित्यचूडामणिः

विदूषकोक्ताविति अधमप्रकृतित्वं सूच्यते ।

क्वचित् किलिकिञ्चितादिवेलायां न्यूनपदं गुणः । प्रत्युत पूर्णपदस्य[3]
वैरस्यावहत्वात् । यत उक्तं—क्षामाक्षरोल्लापिनीति । जहि ताडय पीडय
इत्यादिपदमत्र न्यूनम् । सुरतस्य मोहान्तत्वाद् अवस्थातारतम्यमुच्यते—
सुप्तेति । शरीरभेदपक्षे शङ्काद्वयमेतत् । स्वापो बाह्येन्द्रियव्यापारव्युपरमः ।
सर्वेन्द्रियपरिस्पन्दवन्ध्यं मरणम् । एकशरीरतापरामर्शे मनसि मे लीना विलीना
नु किमिति वितर्कद्वयम् । लयः शरीरैक्यम् । आत्मैक्यं तु विलयः ।

न्यूनपदस्यैव क्वचिन्नोभावित्येतद् विवृणुते—क्वचिदिति ।

१. 'वाभावाव' ग. पाठः. २. 'नमशंसतीति' ख. पाठः. ३. 'र्वे', ४. 'तदव', ५. 'त्ति । प्र' घ. पाठः.

* 'कु' इति मूलकोशपाठः.

मा मा मानद! माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु [किम् ॥

क्वचिन्न गुणो न दोषः । यथा—

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥

अत्र पिहितेत्यतोऽनन्तरं 'नैतद्यत' इत्येतैर्न्यूनैः पदै-र्विशेषबुद्धेरकरणान्न गुणः । उत्तरा प्रतीतिः पूर्वां प्रतिपत्ति[1] बाधत इति न दोषः ।

---

सम्प्रदायप्रकाशिनी

क्वचिद् न्यूनपदस्यानुभयात्मता—तिष्ठेत् कोपेति ।

अत्र न्यूनत्वं तस्यानुभयात्मकत्वमप्युद्भावयति—अत्र पिहिते-त्यादिना । उत्तरा प्रतीतिः 'दीर्घं न सा कुप्यति' इत्यादिरूपा[2] । पूर्वां प्रतिपत्तिं 'तिष्ठेत् कोपे'त्यादिरूपाम् ।

साहित्यचूडामणिः

तिष्ठेदिति । प्रभावेन दिव्यया शक्त्या तिरोहितेति ।

अत्र पिहितेति शब्दानन्तरं नैतद्यत इति पदानि न्यूनानि । तैर्न्यूनैरपि सद्भिर्न[3] गुणः । विशेषे विलक्षणे प्रमेयांशे बुद्धिः प्रतिभा तस्या अकरणात् । उत्तरेति[4] । यथोक्ता नायिका तिष्ठेदिति दीर्घं न सा कुप्यतीति वाक्ययोः समुच्चयो न संगच्छते तिष्ठेच्च कुप्यति चेति, नापि विकल्पः तिष्ठेद्वा कुप्यति वेति अर्थस्यानौचित्यप्रसङ्गात् । लकारभेदोऽपि समुच्चयविकल्पयोर्बा-धक इति भावः । तेन तयोर्बाध्यबाधकभावेनावस्थानमास्थातव्यम् । कोप-

---

१. 'तिपत्तिः पू' क. पाठः. २. 'त्येवमादिरू' ख. ग. पाठः. ३. 'स द्भि न गु' घ. पाठः. ४. 'रे।' क. ख. ग. पाठः.

अधिकपदं क्वचिद् गुणः। यथा—

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं

कार्योन्मुखः खलजनः कृतकं ब्रवीति।

तत् साधवो न न विदन्ति विदन्ति किन्तु

कर्तुं वृथा प्रणयमस्य न पारयन्ति॥

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम्।

यथावा—

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति।

चित्रं चित्रमरोदीद्धाहेति परं मृते पुत्रे॥

---

सम्प्रदायप्रकाशिनी

अथाधिकपदस्य—यद्वञ्चनाहितेति।

अन्ययोगव्यवच्छेदेति। 'न न विदन्ती'त्यतो[1] हि वाक्याद् वेदनस्यायोगो व्यवच्छिद्यते। 'किन्तु विदन्ती'त्यतस्तु वेदनस्थगनहेतोर्व्यामोहादेरन्य[2]स्य योगः।

विषयान्तरमपि दर्शयति—वद वदेति।

साहित्यचूडामणिः

वशेन तिरोभूयावस्थानात्मनो दीर्घकालकोपनिषेधवपुषश्च फलयोर्विरोधान्नावश्यप्रयोज्यानि नैतदादीनि पदानि। नैतदिति पूर्ववाक्यप्रतिषेधे। यत इत्युत्तरवाक्यसाधने। अतश्च[3] न गुणो न दोष इति स्थितम्। अधिकपदमिति। न न विदन्ति[4] खलव्यवहारान् सन्तो न[5] न जानन्ति यावद्दाक्षिण्यपरतन्त्रास्तानज्ञाननाटितकादवधीरयन्ति।

द्वितीयमिति। यथा न न विदन्तीति[6] प्रथममयोगव्यवच्छेदप्रवणं, तथा विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम्। अन्यथा साधूनां खलवाक्यापरिज्ञानादवैदग्ध्यप्रसङ्गः॥

वद वदेति। अत्र पादचतुष्ट(यं ? ये) हर्षभयविस्मयशोकानां प्रत्यायकत्वेनाधिकपदं[7] गुणः।

---

१. 'तो वा' ख. ग. पाठः. २. 'न्ययो' ख. पाठः. ३. 'श्च गु' घ. पाठः. ४. 'न्ति न ख', ५. 'न जा' क. ख. ग. पाठः. ६. 'न्ति प्र' ख. ग. पाठः. ७. 'दत्वं गु' घ. पाठः.

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ॥

कथितपदं गुणो लाटानुप्रासे अर्थान्तरसंक्रमितवाच्ये विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणं—

सितकरकररुचिरविभा विभाकराकार! धरणिधव! कीर्त्तिः ।
पौरुषकमला कमला सैव तवैवास्ति नान्यस्य ॥

ताळा जाअन्ति गुणा जाळा ते सहिअएहि घेप्पन्ति ।
रइकिरणाणुग्गहिआइ होन्ति कमळाइ कमळाइ ॥

---

सम्प्रदायप्रकाशिनी

**हर्षभयादियुक्त इति** । हर्षयुक्ते 'वद वदे'ति, भययुक्ते तु 'तवास्मि तवास्मी'ति अधिकपदं गुणः ।

**अथ कथितपदस्य त्रिषु विषयेषु दर्शयति— कथितपदं गुणो लाटेत्यादिना** ।

**सितकरेति** । अयं तात्पर्यमात्रभेदाल्लाटानुप्रासः ।

**ताळेति** ।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

अयं द्वितीयकमलशब्दोऽर्थान्तरसंक्रमितवाच्यः ।

साहित्यचूडामणिः

कथितपदस्य गुणीभावे उपाधीनाह— **लाटेति** । 'शाब्दस्तु लाटानुप्रास' इति वक्ष्यमाणे । अर्थान्तरसंक्रमितवाच्यो ध्वनिरुक्तः तत्र च । किञ्च पूर्ववाक्यापेक्षया विहितस्योत्तरवाक्ययोगादनुवाद्यत्वे सति ।

**सितकरेत्यादि**[1] [2] [3] । नवमे निर्णेष्यते ।

**ताळेति** । अत्र द्वितीयः कमलशब्दो विकाससौरभलक्ष्मीनिवासत्वादिधर्मान्तरपरिणमितवाच्यः[4] ।

---

१. 'रवा', २. 'दि । न न', ३. 'ला इति । द्वि' घ. पाठः. ४. 'च्यम्' क. ख. ग. पाठः.

जितेन्द्रियत्वं[1] विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण[2] जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥

पतत्प्रकर्षमपि क्वचिद् गुणः । यथा उदाहृते 'प्रागप्राप्ते'त्यादौ ।

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः । यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपितु वाक्यान्तरमेव क्रियते । यथा 'प्रागप्राप्ते'त्यादौ ।

अपदस्थसमासं* क्वचिद् गुणः । यथा उदाहृते 'रक्ताशोके'त्यादौ ।

---

सम्प्रदायप्रकाशिनी

जितेन्द्रियत्वमिति । अत्र विनयादेर्विहितस्यानुवाद्यत्वम्[3] ।

अथ पतत्प्रकर्षस्य — प्रागप्राप्तेत्यादि । अत्र चतुर्थपादाभिधाने विकटवर्णत्वादिप्रकर्षपात एव गुण इति दर्शितः ।

समाप्तपुनरात्तस्य क्वचिदनुभयात्मकता— यत्र न विशेषणेत्यादि । 'प्रागप्राप्ते'त्यादौ हि चतुर्थपादवाक्यं न पूर्ववाक्यविशेषणम्, अपितु वाक्यान्तरमेव । अतो नोभयमपि ।

साहित्यचूडामणिः

जितेन्द्रियतया यो विनयो विहितः पूर्ववाक्ये स एवोत्तरवाक्ये गुणप्रकर्षावाप्तिनिमित्ततयानूद्यते इति विनयादेः कथितस्य पदस्य गुणीकारः । प्रत्युत पर्यायपरिवर्तने प्रक्रमभङ्गदोष इत्युक्तम् ।

पतदिति । प्रस्तुतकोपादिपरित्यागोचिते स्थाने गुणः । प्रागित्यादि व्याख्यातम् । तत्र तुरीयपादे विकटबन्धत्यागेन मसृणरचनौचित्य(म् ?)प्रत्ययादिति[4] भावः । समाप्तेति । उद्देश्यप्रतिनिर्देश्यभावादिशालिनि स्थाने न

---

१. 'श्रुतातिरेको वि', २. 'णाधिके' पुंसि ज' ख. पाठः. ३. 'नी' क. घ. पाठः. ४. 'दि । स' ग. पाठः.

* 'दस' इति मूलकोश पाठः.

गर्भितं तथैव । यथा—

हुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि।
सिविणम्मि तुमम्मि पुणो पत्तिहि[1] तन्तिं[2] ण पम्हुसिमि[3] ॥

अत्र 'प्रतीहि' इति मध्ये दृढप्रत्ययोत्पादनाय । एवमन्यदपि लक्ष्यात् प्रेक्ष्यम् ॥ ११ ॥

सम्प्रदायप्रकाशिनी

अथापदस्थसमासस्य— रक्ताशोकेत्यादि ।

गर्भितस्य— हुमि अवहत्थि[4]एति ।

भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि चिन्तां न प्रमुष्णामि ॥

अत्र सोपपत्तिकं गुणत्वं दर्शयति— अत्र प्रतीहीत्यादि । अनया दिशान्यदपि सूनेयमित्याह— एवमन्यदपीति । अन्यत् प्रसिद्धिधुतादि ॥ ११ ॥

साहित्यचूडामणिः

गुणः । तत्रापि प्रकृतमेवोदाहरणमित्याह— प्रागिति । ननु यदि वाक्यान्तरं क्रियते (तः?) तस्यार्थस्य व्याघातशङ्कायामस्थानमुक्तिप्रसङ्गः । अन्यथा त्यक्तपुनःस्वीकारापत्तिरिति चेत् । तन्न । येनानेने[5]त्यादौ स परशुरतिथिर्भवतु । येन हरः खण्डपरशुः ख्याप्यत इति यद्वृत्तवशादुद्देश्यप्रतिनिर्देश्यभावसम्बन्धान्तरसद्भावान्न त्यक्तपुनःस्वीकारः । नच क्नु पुनरितिवदुक्तार्थव्याघातः ।

रक्ताशोकेति । अस्थानस्थसमासत्वमत्र गुण इत्युक्तम् ।

हुमि इति ।

भवाम्यपहस्तितरेखो निरङ्कुशस्तथा विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि चिन्तां न (तद्धि तात्पर्यम्?) प्रस्मरामि ।

इति । एष कामं प्रति यौवनस्योक्तिः । प्रतीहीति यत्पदं वाक्यमध्ये प्रयुक्तं तद् वाच्यं[8] क्रमवर्णितामसहमानस्य वक्तुर्विवक्षितवाक्यार्थप्रतिपत्तिमुद्घाटयतीति गर्भितस्य गुणत्वम् ।

१ 'अ', २. 'त्ति', ३ 'हुं' ख. पाठः. ४. 'त्थि' क. घ. पाठः. ५. 'नेत्या', ६. 'त्वं क्वचिद् गु' घ. पाठः. ७. 'काव्य' क. ख. पाठः. ८. 'चः', ९. 'भातवर्तिता' घ. पाठः.

**व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।**
**कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ १२ ॥**

सम्प्रदायप्रकाशिनी

अथ रसदोषाः। ते च सूक्ष्मतया सहृदयमतीत्येकसमधिगम्या इति स्थूलदोषानन्तरं निरूप्यन्ते—व्यभिचारिरसेत्यादिना ईदृशा इत्यन्तेन। व्यभिचारिस्थायिनोः शब्दवाच्यत्वे एका, अनुभावविभा-

साहित्यचूडामणिः

एवमन्यदपीति। तथाह—

"यत् पादपूरणाद्यर्थं[1] निरर्थकमुदाहृतम् ।
अदोषत्वं विजानन्ति तस्यापि यमकादिषु ॥"

यथा—

"योषितामतितरां नखलूनं
गात्रमुज्ज्वलतया न खलूनम् ।"

अत्र खलुशब्दस्यानर्थक्येऽपि यमकानुषङ्गाददोषत्वम् ।

"पर्यायेण द्वयोर्यत्राधिक्यं प्रश्नोत्तरादिषु ।
सङ्कीर्णं तन्न दोषाय वाक्यं वाक्यविदो विदुः ॥"

यथा—बाले! नाथ! विमुञ्च मानिनि! रुषमित्यादि। विधेयाविमर्शः कचिद् गुणः। यथा—

"कुविआओ[2] पसण्णाओ
ओरुण्णमुहीओ विहसमाणीओ[3] ।
जह्रगहिआ तह हिअअं
हरंति उच्छिण्णमहिळाओ ॥"

इति। यत्र सत्युत्सन्ना महिला इति व्यासः तद्वस्तुवृत्त्या नष्टाः स्त्रिय इति मङ्गलातङ्कशङ्कया श्रृङ्गारानौचित्यम्। एवं 'हतविधिलसितानां ही विचित्रो विपाकः' इत्यादि प्रसिद्धिविरोधे। देशविरोधः कचिद् गुणः। यथा—

"मन्दाकिन्याः पयःशेषं दिग्वारणमदाविलम् ।
हेमाम्बुरुहसस्यानां तद्वाप्यो धाम सांप्रतम् ॥"

इति। अत्र तारकप्रभाववर्णनतात्पर्याद् गुणत्वम्। कालविरोधः कचिद् गुणो

१. 'र्थमनर्थं', २. 'अ', ३. 'णी' घ. पाठः.

**प्रतिकूलविभावादिग्रहो दीप्तिः पुनःपुनः ।**
**अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥ १३ ॥**
**अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।**
**अनङ्गस्याभिधानं च रसदोषाः स्युरीदृशाः ॥ १४ ॥**

सम्प्रदायप्रकाशिनी

**बयोः कष्टक्लृप्त्या व्यक्तौ द्वे, प्रतिकूलविभावादिग्रहे[1] एका, प्रकृतिविपर्यये[2]ऽप्येका, अङ्गाति[3]विस्तृतावनङ्गा[4]भिधाने च द्वे इति सप्त व्यञ्जकनिबन्धना दोषजातयः । षडन्या व्यङ्ग्यनिबन्धनाः । व्यञ्जकनिबन्धनेषु रसप्रतीतेः प्रतिबन्धः । अन्येषु तु प्रतीतस्योपहतिरिति विभागः । ईदृशा इति सर्वनाम्नो[5]पसंग्राह्यान् वक्ष्यति ।**

साहित्यचूडामणिः

न दोषः । यथा —

"राज्ञां विनाशपिशुनश्चचार खरमारुतः
धून्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥"

इति । अत्रोत्पातरूपत्वात् ताटस्थ्यम् । एवं विद्याविरोधे । धर्मशास्त्रविरोधो यथा —

"पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालकन्यका ।
पतीनामग्रणीश्चासीद् दैवो हि विधिरीदृशः ॥"

इति । अत्र देवरहस्याधीनत्वात् ताटस्थ्यम् । इत्थमन्यदालोचनीयम् । इयता रसाङ्गभूतवाच्यादिव्यवहितो रसस्पर्शी दोष उन्मेषितः । अधुना रसस्यैव दोष मुन्मेषयितुमुद्दिशति — **व्यभिचारीति** । व्यभिचार्यादीनां त्रयाणां सामान्यतो विशेषतो वा स्वशब्दवाच्यत्वं दोषः । कष्टकल्पनया क्लेशोत्तरया बुद्ध्या न पुनः स्वारसिकाक्षेपशालिन्या व्यक्तिः । प्रस्तुते रसे प्रतिकूलानां विभावादीनां ग्रहणं यथा शृङ्गारादौ शान्तादिसम्बन्धिनाम् । पुनःपुनर्दीप्तिः सहृदय[6]

१. 'हण ए' ग. पाठः. २. 'चै' ख. ग. पाठः. ३. 'दि' क. ग. पाठः. ४. 'ङ्गिनोऽननुसन्धाने' क. घ. पाठः. ५. 'मो' ग. पाठः. ६. 'योद्वे' घ. पाठः.

स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

"व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।

सम्प्रदायप्रकाशिनी

यथोपदेशं लिलक्षयिषुराह— स्वशब्दोपादानमित्यादि ।

सव्रीडेति[1]। नह्यत्र व्रीडादिशब्दैर्व्रीडादयो व्यभिचारिणः प्रतीयन्ते ।

कथं न प्रतीयन्त इत्यतः प्रत्युदाहरति —[2]व्यानम्रेति। आनतिर्व्रीडाया अनुभावः। मुकुलीभावः[3]करुणस्य । एवमुत्कम्पादयस्त्रासा-

साहित्यचूडामणिः

हृदयोद्वेजनपर्यन्तं दीपनम्। अकाण्डोऽकालः अनुचितः कालश्च तत्र प्रथनमुद्भावनं छेदः खण्डनं च। अङ्गस्याप्यतिविस्तृतिः। अङ्गिनं प्रत्यङ्गस्य मात्रया विस्तृतिरौचित्याय नत्वतिरेकात्। अङ्गिनः प्रधानभूतस्य नायकादेरननुसन्धानमपरामर्शः। अनङ्गस्य रसानुपयोगिनो भावस्योपन्यास इति संक्षेपः।

क्रमादुदाहरति— स्वशब्देति ।

सव्रीलेति। विस्मयस्य रसत्वं चमत्कारकारित्वादौपचारिकम्। व्रीलात्रासेत्यादीनां स्वशब्दोपादानं दोषः। यद्यपि करुणो रसो विस्मयश्च स्थायी, तथापि प्राचुर्यं व्यभिचारिणामिति तदुदाहरणत्वम्।

व्यञ्जनानुकूलं पाठं परिवर्तयति— व्यानम्रेति ।

१. 'ले', २. 'आ' क. घ. पाठः. ३. 'करस्य' ख. ग. पाठः.

मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे"

इत्यादि[1] तु युक्तम्।

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम्। क्रमेणोदाहरणं —

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम्।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः॥

आलोक्य कोमलकपोलतलाभिषि[2]क्त-
व्यक्तानुरागसुभगामभिरामरूपाम्।

सम्प्रदायप्रकाशिनी

दिषु ज्ञेयाः। अनयोरुदाहरणप्रत्युदाहरणयोः प्रतीतितारतम्यं सहृदयानामविवादसिद्धमेव।

रसस्य स्वशब्दोपादाने द्वयी गतिः—सामान्यवचनेन रसशब्देन विशेषवचनेन वा शृङ्गारादिशब्देनेति। तदेतदाह— **रसस्य स्वशब्देनेत्यादि**।

**तामनङ्गेति**। नह्यत्र 'रसो जायत' इत्युक्तेनापि रसस्य प्रतीतिः[3]। तदनुक्तावपि विभावादिसन्निवेशैवत्त्वे तु प्रतीतिः। यथा मम —

समुल्लङ्घ्यापाङ्गं तरुणि! तरुणाशोककलिका-
कलापव्यापारं श्रवसि समुपादाय चलिताः।
रिरंसां शंसन्तो वद कतममुद्दिश्य कृतिनं
कटाक्षाः क्षिप्यन्ते मधुमदकषायारुणरुचः॥

**आलोक्येति**। अत्र शृङ्गारेति रसविशेषवचनसद्भावेऽपि नहि शृङ्गारप्रतीतिः।

साहित्यचूडामणिः

**निरन्तरो रस इति**। सामान्येन स्वशब्दप्रयोगः।
**आलोक्येत्यादौ** विशेषेण शृङ्गारशब्दस्य।

---

१. 'दि यु', २. 'ष' ख. पाठः. ३. 'तिः। अपितु त' ग. पाठः. ४. 'शः यथावत्त्वे' ख. ग. पाठः. ५. 'सारागार्ताः व' ग. पाठः. ६. 'बत क' क. ख. घ, पाठः.

पश्यैष बाल्यमतिवृत्य विवर्तमानः
श्रृङ्गारसीमनि तरङ्गितमातनोति ॥

स्थायिनो यथा—

सम्प्रहारे प्रहरणैः प्रवीराणां परस्परम् ।
छणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥

अत्रोत्साहस्य ॥

कर्पूरधूलिधवलद्युतिदूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥

अत्रोद्दीपनालम्बनरूपाः श्रृङ्गारयोग्या विभावा अनुभावापर्यवसायिनः स्थिता इति कष्टकल्पना ।

सम्प्रदायप्रकाशिनी

स्थायिनः शब्दवाच्यत्वं—**सम्प्रहार** इति । अत्रोत्साहस्य स्वशब्दवाच्यता ॥

अथानुभावस्य कष्टक्लृप्त्या व्यक्तिः—**कर्पूरधूलीति** ।

कष्टक्लृप्तिं दर्शयितुमाह—**अत्रोद्दीपनालम्बनेति** । कर्पूरेत्यादय उद्दीपनरूपाः । सेति त्वालम्बनरूपः । 'लीलाशिरोंशुके'त्यत्र सहृदयश्लाघ्यस्यानुभावस्याप्रतीतेरनुभावापर्यवसायित्वम् ।

साहित्यचूडामणिः

**संप्रहार इति** । उत्साहस्य वीररसस्थायिनः स्वशब्दोपादानम् ।

अनुभावस्य कष्टकल्पनया[1] व्यक्तिमुदाहरति—**कर्पूरेति** । उद्दीपनरूपश्चन्द्रोदयः । निर्दिष्टाकारा च कान्ता यून आलम्बनम् ।

**अनुभावेति** । तथाप्येतेषामसाधारणत्वमिति 'अन्यतमद्वयाक्षेपकत्वे सति

१. 'दि' ग. पाठः. २. 'ना' घ. पाठः.

परिहरति रतिं मतिं लुनीते
स्खलतितरां परिवर्तते च भूयः ।
इति बत विषमा दशास्य देहं
परिभवति प्रसभं किमत्र कुर्मः ॥

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ।

प्रसादे वर्तस्व प्रकटय मुदं सन्त्यज रुषं
प्रिये! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे! प्रत्येतुं प्रभवति गतः कालहरिणः ॥

---

सम्प्रदायप्रकाशिनी

अथ विभावस्य—परिहरतीति ।

अत्र विभावस्य कृच्छ्रव्यक्तिं दर्शयति—रतिपरिहारेत्यादि ।

अथ प्रतिकूलविभावग्रहस्य—प्रसाद इति । शुष्यन्त्यङ्गानि सेचनक्रियाकर्म, ममैतादृशान्यङ्गानि अमृतकल्पं ते वचः सिञ्चत्विति ।

साहित्यचूडामणिः

नानैकान्तिकत्वमि'ति तुरीयोल्लासोक्तयुक्त्या तस्य यूनो यस्तदा स्वोचितोऽनुभावः तत्रापर्यवसायिनः तद्व्यञ्जनव्यापारविमुखाः तदाक्षेपकत्वैनैयत्यपराङ्मुखाः स्थिताः ।

एवं विभावेनानुभावस्य कष्टकल्पनया व्यक्तिमुदाहृत्य पुनरनुभावेन विभावस्योदाहरति—परिहरतीति । रतिपरिहृतिमतिच्छेदादीनां करुणे भयानके च सद्भावादनैकान्तिकत्वात् कामिनीरूपो विभावो यत्नतः कष्टकल्पनया प्रतिपाद्यः ।

प्रतिकूलविभावव्यभिचारिपरिग्रहमाह—प्रसाद इति । अङ्गानीति सेचनकर्म, तद्विशेषणं शुष्यन्तीति । अत्र शृङ्गारे प्रस्तुते तत्प्रतिकूलस्य शान्तस्य

---

१. 'दा' ख. पाठः. २. 'हः प्र' क ग. पाठः. ३. 'तेति' घ. पाठः. ४. 'त्वे' क. ख. पाठः.

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो* विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः ।

णिहुअरमणम्मि लोअणपहम्मि पडिए गुरूण मज्झम्मि ।
सअळपरिहारहिअआ वणगमणं चेअ महइ वहू ॥

सम्प्रदायप्रकाशिनी

प्रत्येतुं प्रत्यागन्तुम् । अत्रानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो व्यभिचारी निर्वेदश्च शान्तरसस्यैवोचिताविति शृङ्गारे प्रतिकूलौ ।

तदेतदाह—अत्र शृङ्गारे प्रतिकूलेत्यादि ।

अथ प्रतिकूलानुभावग्रहणं[1] — णिहुअरमणेति ।

निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥

साहित्यचूडामणिः

योऽयमनित्यताप्रकाशनरूपः कालहरिणस्य हरिणजातिवैलक्षण्यादपुनःप्रतिगमनस्वभाव उद्दीपनविभावः, स च तदभिव्यञ्जितो निर्वेदश्चोपात्तः । परमनिर्वेदस्थायिकस्य शान्तस्य मैत्रीकरुणादिमुखेन चर्वणायामवान्तरो निर्वेदः स्मृतिधृत्यादिवदुपयोगी ।

प्रतिकूलानुभावसङ्ग्रहमाह— णिहु इति ।

"निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥"

इति । अत्र सकलपरिहारो वनगमनं च द्वे अपि शान्तस्यानुभावभूते । निर्वेदानुवेधे हि रतिर्विद्यते । ज्ञातविषयस्वभावस्य तत्र जीवितसर्वस्वतयाभिमानाभावात् । नखलु विदितशुक्तिकलधौततत्त्वस्तदुपादानायोद्युङ्क्ते ऋते संवृतिमात्रात् ।

१. 'हः णि' ख. ग. पाठः.

* 'पोद्दीपनवि' इति मूलकोशपाठः.

अत्र सकलपरिहारवनगमने शान्तानुभावौ। इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः।

दीप्तिः पुनःपुनर्यथा कुमारसम्भवे रतिप्रलापेषु॥

अकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकसंक्षये संवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णने॥

---

सम्प्रदायप्रकाशिनी

प्रातिकूल्यं दर्शयति—अत्र सकलपरिहारेति। प्रतीतिवैशद्याय व्यतिरेकं दर्शयति—इन्धनादीति।

अथ रसस्यातिपरिपुष्टिरूपा दीप्तिः पौनःपुन्येन प्रबन्धेन सम्भवतीति प्रबन्धमुदाहरति—यथा कुमारसम्भव इति। तत्रहि 'अथ सा पुनरेव विह्वले'त्यादिना दीप्तिरतिमात्रं कृता॥

अकाण्डे रसप्रथनं दर्शयति—वेणीसंहार इत्यादि।

साहित्यचूडामणिः

प्रकारभेदाददोषत्वमाह—पुष्पेति। पुष्पपल्लवाद्यानयनव्याजेन सङ्केतोचितं वनगमनमिति केनचित् समर्थ्यते। तदास्माकं न दोषोद्घाटनाग्रहः। अथ कथं सकलपरिहारस्य शृङ्गारानुकूल्यमिति चेद्रतिलक्षणानुभावादित्याशयः।

दीप्तिरिति। कुमारसम्भवे हि शिवयोः सांमुख्ये मन्मथदाहेन विघटिते झटिति तत्संघटनसंविधानोन्मुखानां सहृदयानां व्यवधानविधायिनि रतिविलापसर्गे नात्यन्तमादरः, किमुत भूयो भूयः प्रदीप्तौ। यथाह ध्वनिकारः—

"परिपोषं गतस्यापि पौनःपुन्येन दीपनम्।
रसस्य स्याद् विरोधाय"

इति। वृत्तिकारोऽप्याह—"उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पौनःपुन्येन परामृश्यमानः परिम्लानकुसुमकल्पः कल्पत" इति।

अकाण्ड इति। अनेकसंक्षये दुर्योधनस्य संभोगवर्णनानौचित्याद-

---

१. 'वाक्येन' ख. ग. पाठः.

छेदो यथा महावीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामी'ति राघवस्योक्तौ ॥

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं यथा हयग्रीववधे हयग्रीवस्य ॥

---

सम्प्रदायप्रकाशिनी

अकाण्डे रसच्छेदं दर्शयति[1] — महावीरचरित इत्यादि ।

अप्रधानत्वादङ्गस्य विस्तृतिः हयग्रीववधे । तत्र हयग्रीवस्यैव प्रतिनायकस्य भूयसा वर्णनम् ॥

साहित्यचूडामणिः

काण्डत्वम् । यदुक्तं तत्रैव "कञ्चुकी—योऽयमुद्यतेषु बलवत्स्वथवा किं बलवत्सु वासुदेवसहायेष्वरिषु अद्याप्यन्तःपुरविहरणमनुभवति । इदमपरमयथायथं स्वामिनश्चेष्टितम् । आ शस्त्रग्रहणादकुण्ठपरशोरि"त्यादि । भानुमत्या सहेति । प्रतिमुखसन्ध्यङ्गविशेषस्य विलासस्य निबन्धे कवेर्निर्बन्धः । स चानुचितः ।

"न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ।"

इत्युक्तत्वात् । अत्र च

"समीहा रतिभोगार्था विलासः परिकीर्तितः ।"

इत्यत्र रतिभोगशब्द आधिकारिकरसोचितस्वभावोपबृंहकविभावाद्युपलक्षणार्थ इत्यर्थापरिज्ञानं हेतुः । नचात्र दैवव्यामोहितत्वं कथापुरुषस्य परिहारः यतो रसबन्ध एव निर्बन्धः कवेः नेतिवृत्ते ।

छेदो यथेति । धाराधिरूढे वीररसे तद्विच्छेदस्य नौचित्यं, यथाह —

"अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम् ।
उद्दीपनप्रशमने यथावसरमन्तरा ॥"

इति ।

---

१. 'ति वी' ख. ग. पाठः. २. 'ता ।' घ. पाठः.

अङ्गिनोऽननुसन्धानं यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च । वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ता

सम्प्रदायप्रकाशिनी

अङ्गिनः प्रधानस्य रसस्याननुसन्धानं रत्नावल्याम् ।

'प्रकृतीनां विपर्यय' इत्युक्तम् । कास्ताः प्रकृतय इत्यत आह — प्रकृतयो दिव्या इत्यादि । दिव्यादिरूपतया त्रिधा । धीरोदात्तादिरूपतया चतुर्धा । तासां यथास्वं लक्षणं — वीररौद्रेति । वीरप्रधाना धीरोदात्ताः । रौद्रप्रधाना धीरोद्धताः । शृङ्गारप्रधाना धीरललिताः । शान्तप्रधाना धीरप्रशान्ताः । ताश्चोत्तमादिभेदात् त्रिधा । इत्थञ्च सति दिव्याद्यास्त्रयः धीरोदात्तादिभेदेन द्वादशधा । उत्तमत्वादिना तु षट्त्रिंशद्वा ज्ञेयाः । तत्र दिव्यत्वाद्यपेक्षया धीरोदात्तत्वाद्यपेक्षयोत्तमत्वाद्यपेक्षया च प्रकृतेरन्यथात्वं त्रिधोपदर्शयितुकामः प्रकृते-

साहित्यचूडामणिः

अङ्गिन इति । प्रधानभूतस्यार्थस्यापरामर्शः । यदुक्तं तत्रैव, 'वसुभूतिः— (निरूप्य) देव ! कुत इयं कन्या । राजा — देवी जानाति । वासवदत्ता — एसा साअरादो पाविदेत्ति भणिअ अमच्चेण जोअन्धरायणेण मह हत्थे णिक्खित्ता अदो एव्व साअरिअत्ति सद्दावीअदि' इति । नन्वङ्गिनो रसस्यानुसन्धानं नायिकया निरुह्यत इति कोऽयं निय(त ? म) इति चेन्न ।

"रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ।"

इत्यत्र रसस्येति रसावगमकस्य यस्य कस्यापीति व्याख्यातत्वात् ।

प्रकृतिविपर्ययं व्याख्यातुं बहुप्रकारां प्रकृतिं प्रतिपादयति — प्रकृतय इति । दिव्या देवदानवादयः । अदिव्याश्चारुदत्तादयो मनुष्याः । दिव्या-

१ 'ल्याम् । अथ प्र' क. घ. पाठः. २. 'व्यादिभेदा धी', ३. 'ना ष' ख. ग. पाठः. ४. 'जा' — अपि जा', ५. 'ग', ६. 'अ', ७. 'च्चजोअंधरा', ८. 'दि । न', ९. 'स्यानन्तु' घ. पाठः.

उत्तमाधममध्यमाश्च । तत्र रतिहासशोकाद्भुतानि अदिव्यो-

सम्प्रदायप्रकाशिनी

[१]रपि विपर्ययं यथावदुपदर्शयति तावत्—तत्र रतिहासशोकेत्या-दिना । यथा हि रत्यादयः स्थायिनः उत्तमप्रकृतावदिव्ये नायक उपवर्ण्यन्ते तथा दिव्येषु चोपवर्णनीयाः । रत्यं[२]शे तु विशेष इत्याह—

साहित्यचूडामणिः

दिव्या दशरथादयः । यथाक्रमं वीरादिप्रधाना धीरोदात्तादयः । तत्र वीरप्रधान उदात्तः रौद्रप्रधान उद्धतः शृङ्गारप्रधानो ललितः शान्तप्रधानः शान्तः इति चत्वारो नेतारः क्रमेण सात्वत्यारभटीकैशिकीभारतीलक्षणवृत्तिप्रधानाः । तत्र धीरोदात्ता रामादयः । यदाहुः—

"महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निरूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥"

इति । धीरोद्धता भीमसेनादयः । यच्चाहुः—

"धीरोद्धतस्त्वहङ्कारी चलश्चण्डो विकत्थनः ।"

इति । धीरललिता वत्सराजादयः । यदप्याहुः—

"निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ।"

इति । धीरशान्ता माधवप्रमुखाः । यदपिचाहुः—

"सामान्यगुणयुक्तश्च धी[३]रशान्तो द्विजादिकः ।"

इति । तत्रेति । अदिव्येषु नायकेषु, येषामुत्तमप्रकृतिकता । तद्वद् दिव्येष्वपि रतिहासशोकाद्भुता[४]नि न पुनर्मध्यमप्रकृत्याद्युचितानि । यथा—

"सुदुःस्थः सन् कृतार्थोऽपि निश्शेषैश्वर्यसम्पदा ।
निकाममकमनीयेऽपि नरकीयति कानने ॥"

१. 'स', २. 'तिभावांशे तु' क. घ. पाठः. ३. 'वी', ४. 'नि वर्णनी-यानि न' घ. पाठः.

समप्रकृतिर्वद् दिव्येष्वपि । किन्तु रतिः सम्भोगश्रृङ्गाररूपा[2] उत्तमदेवताविषया न वर्णनीया। तद्वर्णनं हि पित्रोः सम्भोग-वर्णनमिवात्यन्तमनुचितम् ।

"कोपं प्रभो! संहर संहरेति
यावद् गिरः खे मरुतां चरन्ति ।"

---

सम्प्रदायप्रकाशिनी

किन्तु रतिः सम्भोगेत्यादि । उत्तमदेवता हरिहरहिरण्यगर्भाः । कुत इत्याह — तद्वर्णनं हीति । अनेनादिव्येष्वपि (तु ?) गुर्वादिषु तथा वर्णननिषेधो ज्ञापितः ।

क्रोधभावस्त्वन्यथेति सोदाहरणमाह—कोपं प्रभो इत्यादि ।

साहित्यचूडामणिः

इति । नच तान्यवर्णनीयानि, भारतवर्षौचित्येन वर्णनमिति सम्प्रदायः । किन्त्विति । उत्तमदेवता[3]विषया रतिः सम्भोगलक्षणा दिव्यप्रकृतित्वाद् दिव्यो-त्तमवदतिदिष्टापि न वर्णनीया । यथा कुमारसम्भवे —

"दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा ।
शीतलेन निरवापयत् क्षणं मौलिचन्द्रशकलेन शूलिनः ॥"

इत्यादि । तत्रानौचित्यमाह — तद्वर्णनं हीति । नच सम्भोगश्रृङ्गारस्य स-म्भोगलक्षण एवैकः प्रकारः यावदन्येऽपि[4] जलक्रीडापुष्पोच्चयादयः सम्भवन्तीति ।

सद्यःफलद इति । यथा — 'कोपं प्रभो! संहर संहरे'[5]ति । यथावा ममैव —

---

१. 'वन्न दि' क. पाठः. २. 'रविषया उ' ख. पाठः. ३. 'तारतिः', ४. 'पि पु', ५. 'रेत्यादि' घ. पाठः.

इत्युक्तवद् भ्रुकुट्यादिविकारवर्जितः सद्यःफलदः क्रोधः, स्वः-पातालगमनसमुद्रोल्लङ्घनादावुत्साहश्च दिव्येष्वेव। अदिव्येषु तु यावदपदानं प्रसिद्धमुचितं वा तावदेवोपनिबन्धव्यम्। *आधिकं तु बध्यमानमसत्यप्रतिभासेन नायकवद् वर्तितव्यं न प्रतिना-यकवद् इत्युपदेशे न पर्यवस्येत्। दिव्यादिव्येषु तूभयथापि।

सम्प्रदायप्रकाशिनी

तथोत्साहमपि दर्शयति — स्वःपातालगमनेति। अदिव्येषु त्वन्यथेत्याह — अदिव्येषु तु यावदित्यादि। यावदेव हि पूर्वं वृत्तं यावच्च प्रसिद्धमुचितं वा तावदेव वर्णनीयम्। अधिकोपनिबन्धे बाधकमाह — अधिकं तु बध्यमानमित्यादि। असत्यप्रतिभासेन असत्यबुद्धिजननेन। तर्हि दिव्यादिव्येषु कथमित्याह — दिव्या-दिव्येषु तूभयथापीति। द्वैरूप्यसम्भवादिति यावत्। यथैवं दि-व्यादिष्वौचित्यं व्युत्पादितं तथा धीरोदात्तादिष्वपि यथावद् ज्ञेयम्।

साहित्यचूडामणिः

“अक्ष्णः कोणेन विद्युत्कणकिरणमुचा पश्यति क्रोधवश्ये
यस्मिन्नम्लानपुष्पस्तिमितमधुलिहो देवदारोरधस्तात्।
उन्मीलद्धूम[1]रेखाविलिखितगगनो लब्धवानिक्षुधन्वा
दावज्वालावलीढस्फुटितफलद(शा? शां) शल्मलीगुल्मलीलाम्॥”

इति। स्वःपातालेति। अतएवहि मुनिना प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्त-नायकत्वं च नाटकस्यावश्यकर्तव्यतया पर्यालोचितम्। यदाह —

“विभावभावानुभावसञ्चार्यौचित्यचारिणः।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा॥”

इति। तस्य भावौचित्यं प्रकृ[2]तौचित्यात्। एवं प्रकृ[3]तिं विचार्यामन्त्रणविषयं

१. ‘ले’, २. ‘त्यौ’, ३. ‘तीर्विचार्य तस्या क्षाम’ घ. पाठः.

* ‘अधिकं ब’ इति मूलकोशपाठः.

एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामन्यथा-वर्णनं विपर्ययः । 'तत्रभवन् भगवन्नि'त्युत्तमेन[1] नाधमेन मुनिप्रभृतौ न राजादौ, भट्टारकेति परमेश्वरेति च राजादौ, न मुनिप्रभृतौ प्रकृतिविपर्ययापत्तेर्वाच्यम् । एवं देशकालवयो-जात्यादीनां वेषव्यवहारादि समुचितमेवोपनिबन्धव्यम् ।

---

सम्प्रदायप्रकाशिनी

अन्यथा विपर्यय इत्याह — एवमुक्तस्येत्यादि । धीरोदात्तादिषु वीरादिरसप्रधानत्वमौचित्यमुक्तम् । तदन्यथाकरणे विपर्ययः । अथोत्त-माद्यपेक्षया विचारयति — तत्रभवन्नित्यादि । उत्तमेन हि मुनिप्र-भृतौ 'तत्रभवन्''भगवन्नि'ति वाच्यं नत्वधमेन । उत्तमेनापि मुनिप्र-भृतावेव न[2] राजादौ । राजादौ हि 'प्रियसखे'त्यादि । किञ्च न राजादौ 'भट्टारके'ति, अपितु देव एव[3] । 'परमेश्वरे'ति न मुनिप्रभृतौ । अपि-तु देव एव । अन्यथाकरणे तु प्रकृतिविपर्ययः स्यात् । इत्थं देशकाला-द्यौचित्यमप्यनुसर्त्तव्यमित्याह — एवं देशकालेत्यादि । यस्य देशस्य कालस्य वयसो जातेः, आदिशब्दात् प्रस्तावादेश्च, यद्वेष वेषव्यव-हारचेष्टादिसमुचितं तदेवोपनिबन्धव्यम् । अन्यथा प्रकृतिविपर्ययः । अस्य दोषस्य[4] महाविषयत्वादौचित्यविदां परिस्फुटत्वाच्च [6]प्रक्रियैव दर्शिता, उदाहरणे ग्रन्थगौरवापत्तेः ।

साहित्यचूडामणिः

विपर्ययमाह — तत्रेति । भवन् भगवन्नित्यादिकमामन्त्रितम् । उत्तमैर्मुनि-प्रभृतौ न कदाचिदुत्तमेऽपि राजादौ । भट्टारकेत्यादि च राजादौ न कदाचि-न्मुनिप्रभृतौ वाच्यम् । प्रकृतिविपर्ययप्रसङ्गात् । एतेन भाव! मारिष! इत्यादि-नाट्यपरिभाषा व्याख्याताः । एवमिति ।

---

१. 'मे नाधमेमु', २. 'त्यादि, अ', ३. 'व । एवं प', ४. 'दोषत्वा', ५. 'त्वात् प्र' ख. पाठः ६. 'प्रतिक्रि' क. घ. पाठः. ७. 'मे', ८. 'ता' घ. पाठः.

अनङ्गस्य रसानुपकारकस्य वर्णनं यथा कर्पूरमञ्जर्यां नायिकया स्वात्मनो[1] च वसन्तस्य वर्णनमनादृत्य वन्दि-वर्णितस्य[2] राज्ञा प्रशंसनम् । ईदृशा इति नायिकापादप्रहारा-दिना नायककोपादिवर्णनम् ।

उक्तं हि ध्वनिकृता —

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
*प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥"

इति ॥ १४ ॥

सम्प्रदायप्रकाशिनी

अथानङ्गस्य रसानुपकारकस्याभिधानं दर्शयति — **यथा कर्पूरमञ्जर्यामित्यादि** । नहि वन्दिवचोवर्णनं नायिकावचोवर्णनापे-क्षया रसोपकारि । 'ईदृशा' इत्यनेनोपसंग्राह्यं दर्शयति — **नायिका-पादेत्यादि** ।

इत्थं रसेषु प्रदर्शितनयेनानौचित्यमेव दोष इति यदनुगतं तत् प्रामाणिकसंवादेन व्यवस्थापयति — **उक्तं हि ध्वनिकृता अनौ-चित्यादित्यादिना** । अन्यदिति रसदोषे हेत्वन्तरव्युदासः । उपनि-षद् रहस्यम् । अन्वयतो व्यतिरेकतश्च कथनं रसदोषभीरुणा रसप्रकर्ष-परेण च नित्यमौचित्यांश एवोज्जागरितव्यमित्युपदेशाय ॥ १४ ॥

साहित्यचूडामणिः

अनङ्गस्येत्यादि[3] स्पष्टम् ।

उपलक्षणं चैतदित्याह — **ईदृशा इति** । आदिपदेन रामस्य ताटिका-नायकत्वकरणमभिप्रेयते । यदुक्तं —

"सन्ति सिद्धरसप्रख्या ये च रामायणादयः ।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥"

इति । तदयमत्र[4] परमार्थ इत्याह — **उक्तं हीति** ॥ १४ ॥

१. 'ना व', २. 'स्य तस्य रा' ख. पाठः. ३. 'ङ्गकस्य उप', ४. 'मपर' घ. पाठः.

* 'औचित्योपनिबन्धस्तु' इति मुद्रितकोशपाठः.

इदानीं क्वचिददोषा एत इत्युच्यन्ते —

**न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।**

यथा —

औत्सुक्येन कृतत्वरा[1] सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसताश्लिष्टा शिवायास्तु वः ॥

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् ।

---

सम्प्रदायप्रकाशिनी

अथ रसदोषाणां क्वचिददुष्टतां क्रमेण दर्शयितुमारभते — **इदानीं क्वचिदिति ।**

**न दोष इति ।** सञ्चारिणो व्यभिचारिणः ।

**औत्सुक्येनेति ।**

अत्रौत्सुक्यस्य व्यभिचारिणः शब्दवाच्यत्वेऽप्यदुष्टतां समर्थयति — **अत्रौत्सुक्य[2]शब्द इवेत्यादि ।** तदनुभावः सहसा प्रसृतत्वादि । नहि सहसाप्रसृतेत्युक्ते स्फुटमौत्सुक्य[3]प्रतीतिः । तदेतत् मत्यु-

साहित्यचूडामणिः

अथोक्तानां दोषाणामुपाधिवशाददोषत्वं वक्तुमुपक्रमते — **इदानीमिति ।** क्वचित् तदुपाधिमति प्रयोगे ।

**न दोष इति ।** अनुभावप्रयोगादपि यत्र स्वशब्दोपादानस्यौचित्यं सचेतोभिश्चिन्त्यते तत्र न दोषः । औत्सुक्यं वाञ्छालौल्याद्यनेकप्रकारम् । तत्प्रकाशनक्षमो नानुभावः सम्भवी । तेन तस्य स्वशब्दरचनौचित्यम् ।

**तदनुभाव इति ।** सपदि प्रसरणादिस्वभावः । **तथेति ।** [4]यथा स्वशब्द-

---

१. 'रेत्यत्रौ' क. पाठः, २. 'क्यं' क. घ. पाठः, ३. 'क्ये' क. पाठः, ४. 'यः इव' घ. पाठः.

अतएव 'दूरादुत्सुकमि'त्यादौ व्रीडाद्यनुभावानां वलितत्वा-दीनामिवोत्सुकत्वानुभावस्य सहसा प्रसरणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्[1] ।

**सञ्चार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ १५ ॥**

सम्प्रदायप्रकाशिनी

दाहरणेन स्फुटयितुमाह — अतएव दूरादुत्सुकमिति । तथा प्रतिपत्तीति । नहि यथा विवलितं स्फारितमित्याद्यनुभावोक्त्या व्रीडाहर्षाद्यभिव्यक्तिः तथा सहसा प्रसृतेत्युक्तावौत्सुक्य[2]प्रतीतिः ।

अथ रसस्थायिभावयोः शब्दवाच्यताया अनुभावविभावयोः कष्टक्लृप्तिव्यक्तेश्च नित्यदोषत्वात् प्रतिकूलविभावादिग्रहस्यादुष्टतां दर्शयति — सञ्चार्यादेरिति । शृङ्गारादौ शान्तादौ च व्यभिचारिणो मिथो विरुद्धा इति सहोपादानमेषां प्रतिकूलव्यभिचारिग्रहाख्यो[3] दोष इति स्थितम् । यदि कदाचित् शृङ्गारादौ शान्तादौ च व्यभिचारिणो बाध्यत्वेन भवेयुस्तदा न दोषः प्रत्युत गुण एवेत्यर्थः ।

साहित्यचूडामणिः

प्रयोगे उक्तमर्थं प्रयोगान्तरेण सम्पादयति । अतएवेति । व्रीडादयो व्यभिचारिणः सर्वे विवलितत्वादिभिरनुभावैः प्रकाश्यन्ते । तद्वदौत्सुक्यस्यापि सहसा प्रसरणादिरूपेणानुभावेन प्रत्यायनं न्याय्यम् । तच्च न शक्यं व्रीलादेर्विवलित[4]-त्वादेरिव[5] औत्सुक्यप्रकाशने सद्यःप्रसरणादेः पाटवाभावात् । उत्सुकमिति कृतमिति । उत्सुकमित्येव प्रयुक्तं नपुनर्दूरादुत्थितमित्यनुभावेनाभिव्यञ्जितम् ।

प्रतिकूलविभावादिग्रहं गुणीकर्तुमाह — सञ्चार्यादेरिति ।

"विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥"

१. 'ति । तत्र स' क. पाठः. २. 'क्यस्य प्र', ३. 'ख्यो' ख. पाठः. ४. 'वौ वलि', ५. 'दिवद् औ' घ. पाठः.

बाध्यत्वेनोक्तिः न परं न दोषः, यावत्प्रकृतरसपरिपोषकृत् । यथा —'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इत्यादौ । अत्र वितर्कादिषूद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः ।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः ॥

सम्प्रदायप्रकाशिनी

तदेतत् सोदाहरणमुपपादयति — क्वाकार्यमित्यादिना । चिन्तायामेवेति । कः खल्वधरं पास्यतीत्येवमात्मिकायाम् ।

ननु बाधाभावेऽपि[2] विरुद्धयोः समावेशं कचिन्नु पश्यामः, न च दुष्टतामित्यत आह — पाण्डु क्षाममिति । परक्षेत्रे चिकित्स्यः क्षेत्रियरोगः ।

साहित्यचूडामणिः

इति ध्वनिदशा विरोधिनां[3] भावानां बाध्यत्वेनावस्थानमङ्गभावप्राप्तिर्वेति द्विविधो गुणीकारः ।

तत्र प्रथममवबोधयति — बाध्यत्वेनोक्तिरिति । बाध्यत्वं हि विरोधिनां शक्याभिभवत्वम् । गुणावहेत्येतद्व्याचष्टे — न परमिति । उक्तञ्च मदीये वाक्ये —

"कर्दमादपि यत् कार्ष्ण्यं कज्जलस्य विशिष्यते ।
गुणमेव हि तत् तस्य चक्षुष्मन्तः प्रचक्षते ॥"

इति ।

चिन्तायामेवेति । न पुनर्वीचीतरङ्गन्यायादुन्मग्ननिमग्ने वितर्कौत्सुक्यादौ । प्रकृतस्य रसस्य विप्रलम्भशृङ्गारस्य परिपोषः ।

एवं स्वाभाविकीमङ्गभावप्राप्तिमुक्त्वा समारोपितामुदाहरन्नत्र विमत-

१. 'वक्त्रं हृ', २. 'इ', ३. 'ना' ख. पाठः ४. 'इत्यतयाव', ५. 'त्वे गुणालाभे ...त्स्येत', ६. 'तर' घ. पाठः.

इत्यादौ साधारणत्वं पाण्डुत्वादीनामिति न विरुद्धत्वम् ।

सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥

*अत्राद्यमर्धं बाध्यत्वेनैवोक्तम् । जीवितादप्यधिकं-

---

सम्प्रदायप्रकाशिनी

अत्र परिहासोक्तावामयानुभावाः शृङ्गारे विरुध्यन्ते, नच बाधः, नापि दुष्टता । नैवमित्याह — इत्यादौ साधारणत्वमिति । नहि विरुद्धरसद्वयात्तपदत्वमात्रं विरोधो विभावादीनाम्, अपि त्वसाधारणतया प्रातिकूल्यम् । यथा — 'क्वाकार्यमि'त्यादौ व्यभिचारिणाम् । इह तु पाण्डुत्वादयोऽनुभावाः साधारणा इति न विरोधः कश्चित् ।

ननु 'सत्यं मनोरमाः कामा' इत्यादौ प्रथमार्धे शृङ्गारः प्रतीयते, द्वितीयार्धे तु शान्तः । तत् कथमदुष्टतेत्यत आह — अत्राद्यमर्धमित्यादि । सत्यमित्यर्धाङ्गीकाराद् बाध्यत्वेनोद्देशः । ननु तर्हि मत्ताङ्गनापाङ्गभङ्गौपम्यं जीवितस्य न वाच्यं शृङ्गारदार्ढ्यप्रसङ्गादित्यत आह — जीवितादप्यधिकमित्यादि । नेहं शृङ्गारविवक्षायामपाङ्ग-

साहित्यचूडामणिः

मर्थं समर्थयते — पाण्ड्विति । क्षेत्रियेति 'क्षेत्रियच् परक्षेत्रे चिकित्स्य' इति शरीरान्तरचिकित्स्यमचिकित्स्यमामयमावेदयति ।

अत्र विरोधमङ्गीकृत्याङ्गत्वप्राप्त्या परिहारो ध्वनिग्रन्थे । तद्वैमत्येन विरोध एव नास्तीत्याह — साधारणत्वमिति । रोगानुत्पत्तावपि पाण्डुत्वादिसम्भवात् । अ(त्र ? त) एव विरोध एव नास्ति । (कु ? त)तो गुणीकारार्थमङ्गत्वप्राप्तिश्चिन्त्येत्याकूतम् ।

सत्यमिति ।

बाध्यत्वेनैवेति । पूर्वार्धे तावदावयोर्न विप्रतिपत्तिरिति यावत् । विरुद्धरसस्पर्शानौचित्याभावात् । उत्तरार्धेऽप्येवं विवक्षेत्याह — जीवितादधिक-

---

१. 'कतरस' क. पाठः. २. 'क्वचित् । न' क. घ. पाठः. ३. 'व्यंस' ख. पाठः. ३. 'ह तेन रु' क. घ. पाठः.

---

* 'इत्यत्राद्य' इति मूलकोशपाठः.

पाङ्गभङ्गस्यास्थिरत्वमिति प्रसि*द्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति । न पुनः शृङ्गारस्यात्र प्रतीतिः, तदङ्गाऽप्रतीतेः । नच विनेयोन्मुखीकरणमत्र परिहारः । शान्तशृङ्गारयो-

सम्प्रदायप्रकाशिनी

भङ्गौपम्यपरिग्रहः, अपितु जीवितापेक्षया । प्रकृष्टमङ्गनापाङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपादीयमानं शान्तमेव पुष्णाति । न पुनरङ्गनादिपदपरिग्रहमात्रेण शृङ्गारस्येह प्रतीतिः । कुतः, तदङ्गाप्रतीतेः । नह्यत्र वक्तृबोद्धव्यपर्यालोचनायां शृङ्गाराङ्गं किञ्चित् प्रतीयते । ननु 'स्त्रीति नामैव पेशलम्' इति नीत्या सानुप्रासमुपात्तेनाङ्गनापाङ्गादिना दुर्निह्नवैव शृङ्गारप्रतीतिः । तस्याश्चेह प्रयोजनमुपदेश्योन्मुखीकरणमित्यत आह — नच विनेयेति । यदि स्यात् को दोष इत्यत आह — शान्तशृङ्गारयोरित्यादि । इमौ हि नैरन्तर्यविरोधिनौ यद्येकत्रोपनिबध्येयातां तदा रसान्तरितावेव, नतु निरन्तरौ । (निरन्तरौ)

साहित्यचूडामणिः

मिति । उपमेयादुपमाने साधर्म्योत्कर्षस्य सिद्धत्वात् । प्रसिद्धं यद्भङ्गुरं सदुपमानं तद्भावेनोक्तम् । तदङ्गेति । तत्र[1] शृङ्गारस्य यदङ्गं जीवितस्थैर्यादि तस्याप्रतिपत्तेः । अत्र ध्वनिकारपदवीमपवदते — नत्विति । यदाह —

"विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥"

इति । शृङ्गाराङ्गाणां विभावादीनां शृङ्गारविरुद्धरसस्पर्शो न केवलं प्रागुक्ताविरोधलक्षणाददुष्टः यावद्विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा क्रियमाण इति कारिकार्थः । गुडजिह्विकया शृङ्गारेणोन्मुखीकृता विनेयाः सुखं विनयोपदेशं गृह्णन्ति । शान्तेति । कस्यचित् प्ररोचनासामान्यस्यातात्पर्येणैतन्नैरन्तर्यस्यावश्यम्भावः । तच्च न सिध्यति उभयविनाशप्रसङ्गात् । काव्यशोभार्थ-

१. 'नया शृ' ख. पाठः. २. 'दा' क. घ. पाठः. ३. 'ङ्गे' ग. पाठः. ४. 'स्य', ५. 'क्त', ६. 'धि' घ. पाठः.

* 'द्धं तद् गुणोपमा', ऽ 'प्रतिपत्तेः । नतु वि' इति मूलकोशपाठः.

नैरन्त*र्यस्याभावात् । नापि काव्यशोभाकरणं, रसान्तरादनुप्रासमात्राद्वा तथाभावात् ॥ १५ ॥

**आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।**
**रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः ॥ १६ ॥**

सम्प्रदायप्रकाशिनी

हि काव्यशोभाजननायेत्यत आह — **नापि काव्येति** । शान्तेनानुप्रासेन वा काव्यशोभाप्रकर्षस्य पर्याप्तत्वादित्यर्थः ॥ १५ ॥

अथ सहावस्थाननैरन्तर्यविरोधिनोरदुष्टता — **आश्रयैक्य इत्यादि** । यो हि भयानकादिर्वीरादिना सहावस्थानविरोधी स प्रतिनायकगतत्वेन भिन्नाश्रयः कार्यः । शान्तशृङ्गारयोस्तु न सहावस्थानलक्षणो विरोधः, अपितु नैरन्तर्यनिबन्धन इत्येकत्रैवाश्रये रसान्तरान्तरितौ निवेशनीयौ ।

साहित्यचूडामणिः

मित्यंशं प्रतिक्षिपति — **नापीति** । रसनिर्बन्धे[2] शृङ्गारव्यतिरिक्तादन्यस्माद्रसात्, तदभावे तु अनुप्रासमात्राद्वा तथाभावात् शोभमानत्वात् ॥ १५ ॥

अथ रसविरोधे संक्षिप्य परिहारोपायमाह — **आश्रयेति** । द्विधा हि रसविरोधः । एकाश्रयत्वमूलो नैरन्तर्यमूलश्च । तत्र पूर्वस्मिन्नाश्रयभेद एव परिहारः । यदुक्तं —

"विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत् ।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥"

इति । अन्यत्र रसान्तरेण विरुद्धरसद्वयाविरुद्धेनान्तरितो व्यवहितः कार्यः । यथोक्तं —

"रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशे विरोधिता ॥"

इति ।

तत्र वीरभयानकयोरेकाश्रयतया विरोधः । शान्तशृङ्गारयोस्तु नैरन्तर्यात् । भयानक इति करुणस्याप्युपलक्षणम् । यतो नायकप्रभावातिशयवर्णने

१. 'हानव' ख. पाठः. २. 'बद्धे शृ', ३. 'तु प्रा' घ. पाठः.

* 'र्यभा' इति मूलकोशपाठः.

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः । शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम् । यथा नागानन्दे शान्तस्य जीमूतवाहनस्य 'अहो गीतम्' 'अहो वादित्रम्' इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारोपनिबन्धः ।

न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते । यथा—

भूरेणुदिग्धान् नवपारिजात-
मालारजोवासितबाहुमध्याः ।

---

सम्प्रदायप्रकाशिनी

**अत्रोदाहरणं — यथा नागानन्द** इत्यादि । नागानन्दे हि पितृनियोगगौरवाङ्गीकृतराज्यभरस्य निसर्गत एव विवेकिनः पितृपरिचरणैकपरायणतया परमशान्तस्य मलयवतीदर्शनानुरागे प्रस्तोतव्ये दूरात् तद्गीताद्याकर्णनेन 'अहो गीतमि'त्यादिनाद्भुतरसोऽन्तरे निवेशितः ।

यदेतदे(वं ? वम)विरुद्धत्वं रसान्तरान्तरितत्वे, तन्न केवलं प्रबन्धे अपित्वेकस्मिन्नपि वाक्ये सम्भवतीत्याह — **न परं प्रबन्ध** इत्यादि ।

**भूरेणुदिग्धेति** । क्रव्यभुजां खगानां गृध्रादीनाम् ।

साहित्यचूडामणिः

तत्प्रतिपक्षाणां भयानकस्येव करुणस्याप्यौचित्यम् । यथा **नागानन्द** इति । 'रागस्यास्पदमित्यवैमि नच मे ध्वंसीति न प्रत्यय' इत्युपक्रम्य 'सिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति' इत्यन्तं परार्थे शरीरवितरणावधि जीमूतवाहनस्य शान्तो रसः मलयवतीविषयश्च शृङ्गार इति । विरोधशङ्का च मध्ये निवेशितेन 'व्याक्तिव्यञ्जनधातुने'त्याद्युपबृंहितेनात्यद्भुतकेन प्रतिषिध्यते ।

नचात्र प्रबन्धनिर्बन्ध इत्याह — **न परमिति** ।

---

१. 'त्युप', २. 'यिके', ३. 'ब' घ. पाठः.

गाढं शिवाभिः परिरभ्यमाणान्
सुराङ्गनाश्लिष्टभुजान्तरालाः ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः
पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः
सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः
कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभि-
र्वीराः स्वदेहान् पतितानपश्यन् ॥

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः॥ १६ ॥

**स्मर्यमाणो विरुद्धो यः साम्येनाथ विवक्षितः ।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥ १७॥**

---

सम्प्रदायप्रकाशिनी

**अत्र बीभत्सेति** । बीभत्सः पतितवपुर्वार्त्त[1]विषयः । शृङ्गार-वीरौ तु स्फुटौ ॥ १६ ॥

अथ सामान्येन विरुद्धयोरदुष्टत्वं त्रिधा सम्भवतीत्याह —**स्मर्यमाण इत्यादि** ।

साहित्यचूडामणिः

**बीभत्सशृङ्गारयोरन्तरिति** । समरनिपतितकलेबरतया बीभत्सः । अप्सरःसंश्लेषेण च शृङ्गारः । मध्ये च तयोरुभयाविरुद्धो वीररसः । एक-श्लोकनिबन्धे[3] यथा —

"कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्कसंसक्तसुराङ्गनः सन् नृत्यत्कबन्धं समरे ददर्श ॥"

इति ॥ १६ ॥

---

१. 'त्त' क. घ. पाठः. २. 'रो', ३. 'न्धे' घ. पाठः.

अयं स रशनोत्कर्षी[1] पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

एतद् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूभिरभिदधे । अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति ।

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकार-

सम्प्रदायप्रकाशिनी

एकस्मिन् रसेऽनुभूयमाने तद्विरुद्धस्तदुपबृंहणाय चेदनुस्मर्यते तदा न दोषः । यथा — अयं स रशनेत्यादि । व्याख्यातं प्राक् ।

अथ यदि विरुद्धोऽपि साम्येन विवक्ष्यते तदापि न दोषः । यथा —दन्तक्षतानीत्यादि । रक्तमनसा शोणिताभिलाषिण्या अनुरक्तचेतसा च ।

शान्तशृङ्गारयोः साम्यविवक्षां विविच्य दर्शयति—अत्र कामुकस्येत्यादि । अत्र जिनकामुकयोर्मृगराजवधूवध्वोस्तदवलोकिनां

साहित्यचूडामणिः

एतदिति । शृङ्गारोपकरणमपि प्रागवस्थास्मरणमनुभूयमानं करुणमुल्बणयति । यदाह — 'प्रकृतिमधुराः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थो[2]भाविभिः स्मर्यमाणैर्विलासैराधिकतरं शोकमुपजनयन्ती'ति ।

साम्येन विवक्षायामङ्गभावे[3]प्राप्तौ[4] न विरोध इति द्वितीयं प्रकारमाह—दन्तक्षतेति ।

कामुकस्येत्यादिना दृष्टव्यनिष्ठाव्याजेनोचितं च (?) साम्यमुन्मील्यते ।

१. 'म्पी' क. पाठः. २. 'स्थां विना स्म', ३. 'वं', ४. 'प्तावपि', ५. 'न्तेति', ६. 'दु' घ. पाठः.

णानि तथा जिनस्य, यथा च परः शृङ्गारी तदवलोकनात् सस्पृहस्तद्वदेतद्दृशो मुनय इति साम्यविवक्षातः ।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

अत्र चाटुके राजविषया रतिर्या प्रतीयते, तत्र शृ*ङ्गार इव करुणोऽप्यङ्गमिति तयोर्न विरोधः । यथा—

सम्प्रदायप्रकाशिनी

मुनिशृङ्गारिणां च साम्यविवक्षया[1] शान्तशृङ्गारौ तुलया विवक्ष्येते[2] ।

यौ च विरुद्धावपि सन्तावङ्गिनि रसान्तरेऽङ्गभूतौ तावपि 'गुणानां च परार्थत्वादि'ति नयेनाविरुद्धौ । यथा— क्रामन्त्य इति ।

अत्र राजविषयं रतिभावमङ्गिनं प्रति करुणशृङ्गारयोरङ्गतेत्याह— अत्र चाटुक इति । चाटुक उपश्लोकयिता । शृङ्गार इवेत्यनेन मिथो नैरपेक्ष्यं सूचितम् ।

साहित्यचूडामणिः

एकस्मिन्नाधिकारिके प्रधाने वाक्यार्थे रसयोर्मिथो[3] विरोधिनोरप्यङ्गत्वमिति तृतीयं प्रकारमाह—क्रामन्त्य इति ।

तयोर्न विरोध इति । द्वयोरप्यन्यपरत्वेनावस्थानात् । राजनिकटनिषण्णाततायिद्वयन्यायात् । विधौ हि विरुद्धसमावेशो दुष्यति नानुवाद इत्याह— यथेति ।

१. 'क्षा ।' ख. पाठः. २. 'क्ष्य' क. घ. पाठः. ३. 'योर्विरो' घ. पाठः.

* 'करुण इव शृङ्गारोऽप्य' इति मूलकोशपाठः.

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥

अत्र एहीति क्रीडन्ति, गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ।

---

सम्प्रदायप्रकाशिनी

अङ्गिन्यङ्गत्वमाप्तयोर्न विरोध इत्यर्थं[1] दृष्टान्तेन द्रढयति[2] — यथा एहि गच्छेत्यादि । अत्र ह्याह्वान[3]विसर्जनादिरूपयोः प्रै[4]षयोर्मिथो विरोधेऽपि क्रीडन्तीति पृथक् प्रधानक्रियाभिसम्बन्धे मिथो नैरपेक्ष्यान्न विरोधः कश्चित् ।

तदेतदाह — अत्र एहीत्यादि ।

साहित्यचूडामणिः

क्रीडनापेक्षयोरिति । तद्व्यवहितत्वादागमनगमनक्रिययोः पतनोत्थान[5]योर्वदनमौनसमाचरणयोश्चाविरोधात् । ननु प्राधान्येन वाच्यत्वे विधिः । अप्राधान्येन त्वनुवादः । नच रसस्य विधेयत्वमनुवाद्यत्वं वा युक्तमिति चेत् । न । तस्य व्यङ्ग्यतायामपि वाच्यतायामिव विध्यनुवादयोरङ्गीकारात् । यदि वा विधिना प्राधान्यमनुवादेन च तस्याप्राधान्यमुपपद्यते, विधिः प्राधान्यमन्याङ्गत्वं चानुवाद इत्युक्तत्वात् । विरुद्धफलोत्पादकत्वं हि युगपदेकस्यानुचितं, नतु विरुद्धोभयसहकारिणस्तस्य कार्यविशेषोत्पादकत्वं, यथा सलिलदहनसहकारिणस्तण्डुलस्यौदनोत्पादकत्वम् ।

अथ न केवलं मिथो निरपेक्षयोरेवाङ्गयोरङ्गिनि तात्पर्यं, यावता सापेक्षयो-

---

१. 'विशोक्ति' ख. पाठः २. 'त्थं द' ख. ग. पाठः. ३. 'ह्यावाह्न' ग. ङ. पाठः. ४. 'प्रे' क. घ. पाठः. ५. 'त्पतन' घ. पाठः.

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं, तस्य तु शृङ्गारः । तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव ।

---

सम्प्रदायप्रकाशिनी

अङ्गिन्यङ्गत्वमाप्तयोः प्रकारान्तरेणाप्यदुष्टत्वं दर्शयति—क्षिप्त इति । त्रिपुरयुवतिभिः क्षिप्तः अंशुकान्तमाददानः प्रसभमभिहत इत्यादौ वाक्यार्थीभूतस्य त्रिपुररिपुप्रभावातिशयस्य त्रिपुरयुवतिचेष्टाभिव्यङ्ग्यः करुणोऽङ्गं, तस्य च कामिवृत्ताभिव्यङ्ग्यः शृङ्गारोऽङ्गम् । इत्थं स्थिते प्रभावातिशयात्मनो रौद्रस्य करुणेन न विरोधस्तत्र ।

तथा(पि) न करुणे विश्रान्तिरिति । अतोऽङ्गिनोऽपि[2]

साहित्यचूडामणिः

रपीत्युदाहरणान्तरेणाह[3] — क्षिप्त इति । अत्र परमेश्वरप्रभावातिशयस्य वाक्यार्थतया प्राधान्यादीर्ष्याविप्रलम्भात्मा शृङ्गारः करुणश्च न विधेयकोटिमध्यासाते । अतो न तयोर्विरोधः । ननु विरुद्धपदार्थगोचरः कथमभिनयप्रयोग इति चेद् अनूद्यमानैवंविधवाच्यविषयवद् भविष्यतीति न किञ्चिदेतत् । एवञ्च परमेश्वरप्रभावस्य करुणोऽङ्गं, शराग्निप्रयुक्तत्वाच्चमत्कारस्य । तस्य चाङ्गं शृङ्गारः । शराग्निरार्द्रापराधकामिसामान्येन त्रिपुरस्त्रीषु व्यवहृतवानित्युच्यमानत्वात् ।

तर्हि न प्रधाने विश्रान्तिरिति चेद् नेत्याह — तथापीति । यद्यपि शृङ्गारः करुणस्याङ्गमित्युक्तं, तथापि न तत्र विश्राम्यति । अपितु भगवत एव प्रभावातिशये । इतरथा करुणस्यैव वाक्यार्थत्वापातः । (तस्य ?) मिथः साकाङ्क्षयोरेव करुणशृङ्गारयोर्विरुद्धयोः परमेश्वरप्रभावोद्देशादङ्गभावप्राप्तिः । यद्वा

---

१. 'ननु यत्राङ्गिनः सतो रसान्तरं प्रत्यङ्गता, तत्राङ्गिनः प्रधानतमापेक्षया किं वृत्तम्, इत्येतद् विचारयितुमाह — क्षिप्तो हस्तेति । शाम्भवः शराग्निः वो दुरितं दहतु । कीदृक्, अभिनवापराधः कामीव हस्तावलग्नः त्रिपु' ङ. पाठः. २. 'ङ्गतोऽपि' घ. पाठः. ३. 'णमाह' क. ख. ग पाठः. ४. 'भावः शृ' घ. पाठः.

अथवा प्राग् यथा कामुक आचरति स्म तथाद्य शराग्निरिति *शृङ्गारपरिपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते । उक्तं हि —

"गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥"

इति ।

---

सम्प्रदायप्रकाशिनी

करुणस्याङ्गतैव । प्रकारान्तरेणाप्यविरोधं दर्शयति — अथवा प्राग्यथेत्यादि । प्राग् यथा तथा शराग्निरिति वदता शृङ्गारस्योपमालङ्कार[1]वृत्त्या करुणाङ्गभावो दर्शितः । तदुपकृतेन तु करुणेन मुख्यार्थभूतो रौद्र एवोपोद्बल्यते ।

इत्थं च सति न केवलमविरोधः, अपितु भूयानुपकारोऽपीत्यत्र संवादायाह —उक्तं हि गुणः कृतेत्यादि । गुणः उपसर्जनभूतोऽर्थः कृतात्मसंस्कारः गुणान्तरेणोपकृतस्वरूपः प्रधानं प्रतिपद्यते प्रधानं प्रत्यङ्गतामुपैति नतु पृथक् प्राधान्येनावतिष्ठते । तथा चेत् प्रतिपद्यते, भूयसि प्रधानोपकारे वर्तते ।

साहित्यचूडामणिः

साकाङ्क्षतायामेव शृङ्गारस्य करुणे विश्रान्तिरस्तु, तथापि द्वयोः परमेश्वरस्य प्रभावातिशये तात्पर्यमित्याह — अथवेति । शृङ्गारपरिपोषितेनेति । नखलु पूर्वं शृङ्गारेण करुणस्य परिपोषः, यावत् परमेश्वरप्रभावस्यैव । अत्र तु शृङ्गारेणास्य करुण[2]स्य परिपोषणम् । तादृशेन च करुणेन परमेश्वरप्रभावस्योपबृंहणमिति ।

अत्राभियुक्तोक्तिं संवादयति — गुण इति । तथाहि प्रधानस्य भूयस्युपकारे वर्तते, नान्यथा ।

ननु तुरीयोल्लासनिर्णीतस्य ब्रह्मानन्दास्वादसब्रह्मचारिणो विगलितवेद्यान्तरस्य रसस्य कोऽयं विरोधाङ्गाङ्गिभावप्रमुखः खलीकारकलङ्क इत्याशङ्कते —

---

१. 'रतापत्त्या' ङ. पाठः. २. 'स्य पोषणम् ।' क. ख. ग. पाठः.

* 'शृङ्गारपोषितेन' इति मूलकोशपाठः.

प्राक् प्रतिपादितरूपस्य रसस्य रसान्तरेण न विरोधो नाप्यङ्गाङ्गिभावो भवतीति । रसशब्देनात्र स्थायिभाव उपलक्ष्यते ॥ १७ ॥

इति काव्यप्रकाशे दोषप्रदर्शनो नाम

सप्तम उल्लासः ।

---

सम्प्रदायप्रकाशिनी

ननु[1] विगलितवेद्यान्तरत्वेन प्रतीयमाने रसे विरोधप्रतीतेरनवकाश इति को विरोधः का वाङ्गा[2]ङ्गि[3]तेत्यत[4] आह—**प्राक्प्रतिपादितेति**[5] । रसान्तरेण रौद्रेण । इतिः समाप्तिं[6] रसदोषचर्चानिबन्धनामाह । ननु रसः स्वशब्दानभिधेय इति कथं व्यवह्रियते इत्यत आह—**रसशब्देनात्रेति** । अत्र ईदृशव्यवहारे[7] ॥ १७ ॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यां[8]
काव्यप्रकाशबृहट्टीकायां
सप्तम उल्लासः ।

---

१. 'नु प्राक् प्रतिपादितरूपस्य शृङ्गारस्य रौद्रेण सह किं वृत्तम् इत्य' क. घ. ङ. पाठः. २. 'ङ्गते' ग. पाठः. ३. 'तेत्याह प्रा' ख. पाठः. ४. 'ति', ५. 'प्तिः' क. ख. घ. पाठः. ६. 'ह विगलितवेद्यान्तरत्वेन प्रतीयमाने रसे विरोधप्रतीतेरनवकाश इति को विरोधः का वाङ्गाङ्गितेत्याह प्राक् प्रतिपादितेत्यादि । इतिर्हेतौ । यतो विगलितवेद्यान्तरत्वेन प्रतिपादितस्वरूपस्य रसस्य रसा न्तरेण विरोधाद्युपपत्तिः रस' क. घ. पाठः. ७. 'रे दोषादिमीमांसायां स्थायिभावोपलक्षणम् । इति' क. ख. घ. पाठः. ८. 'यां दोषविवेचनो नाम स' क. ख. पाठः.

साहित्यचूडामणिः

**प्रागिति** । तर्हि कथं प्रक्रान्तप्रमेयनिर्वाह इत्यत्राह — **रसशब्देनेति** । तत्र वीरशृङ्गारयोः शृङ्गारहास्ययो रौद्रशृङ्गारयोर्वीराद्भुतयोः[1] वीररौद्रयोः शृङ्गाराद्भुतयोश्च मिथो न विरोधः । अथ शृङ्गारबीभत्सयोर्वीरभयानकयो रौद्रशान्तयोः[2] शान्तशृङ्गारयोः शृङ्गारकरुणयोश्च मिथो विरोध इति तत्र परिहारौचित्यम् । परिहारश्च कस्यचित् प्राधान्यविवक्षणात् । यदाह —

"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।
एको रसोऽङ्गी कर्तव्यस्तेषामुत्कर्षमिच्छता ॥
कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते ।
तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥
एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान् ।
रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा ॥"

**इति** । तदियमत्रोपनिषत्[3] —

"अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे ।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता ॥"

**इति** । अङ्गिनो रसस्य यावान् परिपोषस्तावानङ्गभूतस्य न प्रयोज्यः । अङ्गिनस्तु सर्वथा प्रयोज्य इति सिद्धम् ॥ १७ ॥

"दोषस्य मात्राः प्रभवन्तु कामं काव्ये रसज्ञो न जहाति विद्वान् ।
अलं कलङ्को जडिमा क्षयो वा चमत्क्रियां चन्द्रमसो न हन्तुम् ॥"

दोषान् मनागधिगतानपि सूक्ष्मदृष्ट्या
जिह्वे! कदाचिदपि मा सदसि प्रसाङ्क्षीः ।
जानन्ति कोमलधियः कवयो न तत्त्वं
निःश्वस्य नः खलयितुं परमारभन्ते ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां[4]
सप्तम उल्लासः ॥

---

१. 'योश्च' क. ख. ग. पाठः. २. 'रौद्रशा', ३. 'तदीयमत्रोप', ४. 'क' घ. पाठः.

## अथाष्टम उल्लासः ।

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह —

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ १ ॥**

सम्प्रदायप्रकाशिनी

### अथाष्टम उल्लासः ।

इत्थं दोषविवेचने कृते यद्यपि गुणविवेचनमवसरागतम् । अथापि कैश्चिद् गुणालङ्कारयोरभेद एवोक्तः, अन्यैः पुनरयथावद् भेद उक्त इति गुणालङ्कारविवेक एवादौ करणीय इत्यभिप्रेत्याह वृत्तिकारः— एवं दोषानित्यादि ।

तत्र गुणलक्षणमाह — ये रसस्येति । अङ्गिनोऽङ्गभूतशब्दार्थापेक्षयान्तरतमस्यात्मभूतस्य रसस्य धर्मा आत्मनः शौर्यादय इव । शौर्यादयो ह्यात्मन एव धर्माः, नतु करचरणाद्यङ्गानाम् । ते गुणाः कीदृशाः, उत्कर्षहेतवः । सत्स्वेव हि शौर्यादिषु आत्मोत्कृष्यते नासत्सु यथा, तथा माधुर्यादिषु सत्स्वेव रसोत्कर्षः नान्यथा । ननूत्कर्षहेतुत्वमलङ्काराणामपीत्यत आह — अचलस्थितय इति । समवाय-

साहित्यचूडामणिः

### अथाष्टम उल्लासः ।

शृङ्गारा[3]भोगवेलायामनालोचितभूषणाम् ।
प्रौढां सरस्वतीं वन्दे शुद्धलावण्यवर्षिणीम् ॥

गुणालङ्कारोभयभेदापलापवृत्तान्तेनालङ्कारिकानभिभवाय पूर्वापरोल्लाससङ्घटनाद्वारेणाह — गुणेति । विवेकः पृथक्कारः ।

तत्र गुणलक्षणमाह — य इति । अङ्गिनः शरीरिणः आत्मभूतस्य उत्कर्षहेतवो ये धर्माः ते गुणाः । यदाह—

"तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।"

इति । अचलस्थितयः समवायवृत्त्या वर्तमानाः । अङ्गिन इत्यात्मदृष्टान्तेन शब्दार्थयुगललक्षणं काव्यं शरीरमिव, श्रुतिकटुत्वादयो दोषाः श्वित्रादय इव,

१. 'त' ख. पाठः. २. 'ते की' ख. ग. पाठः. ३. 'र' घ. पाठः.

आत्मन एवं हि शौर्यादयो नाकारस्य यथा, तथा रसस्यैव माधुर्यादयः, न वर्णानाम्। क्वचित् तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनाद् 'आकार एवास्य शूरः' इत्या-

सम्प्रदायप्रकाशिनी

वृत्तय इत्यर्थः। शौर्यादिवत् समवायवृत्त्या रसमुत्कर्षयन्तो धर्मा गुणा इत्यर्थः।

तदेतद् व्याचष्टे— आत्मन एव हीत्यादिना। न वर्णानामिति वामनादिकटाक्षेणोक्तिः। ते हि वर्णधर्मानिमान् मन्यन्ते। ननु ललितादिवर्णान्वयव्यतिरेकानुविधायिनो हि माधुर्यादयः। तत् कथमुच्यते न वर्णानामित्यत आह— क्वचित्तु शौर्यादीति। यदयं वर्णान्वयव्यतिरेकानुविधानभ्रमो गुणेषु तस्यैतन्मूलं— यथा शौर्या-

साहित्यचूडामणिः

माधुर्यादयो गुणाः शौर्यादय इव, अनुप्रासोपमादयोऽलङ्काराः कङ्कणहारादय इव, रसादिध्वनिरात्मैवेति काव्यवृत्तान्तो व्यवस्थाप्यते। ननु गुणवदितिवृत्तं रसादयश्च गुणा इति प्रक्रियया गुणं[2] इति व्यवहार एवास्तु, अलमुक्तरूपात्मशरीर[3]व्यवहारनिर्बन्धेनेति चेत्। न। किं शरीरवर्ति[4]शौर्यादिसाधर्म्येण रसानां वाच्यधर्मत्वमुत तत्त्वसादृश्येन। न प्रथमः। सहृदयहृदयविशेषव्युदसनेन सर्वस्यापि तत्प्रतीतिप्रसङ्गात्[5]। यथा पामरादिसाधर्म्येण शरीरे शौर्यादिप्रतीतिः। न द्वितीयः। माणिक्यजातित्ववदपृथक्त्वेन तत्प्रतीतिप्रसङ्गात्। नखलु शरीरे शौर्य[6]स्येव माणिक्ये जाति[7]त्वस्य स्फुरत्तायामुन्मग्नत्वम् अत्यन्तलीनस्वभावत्वात्। वाच्ये तु विभावादौ रसादेरुन्मज्जनमेव स्वभाव इत्युक्तम्। नाकारस्येति। शवशरीरे शौर्याद्यभावात्। एवं रसस्यैव माधुर्यादयो गुणाः न त्ववयवस्थानीयानां वर्णानाम्। एतदन्वयव्यतिरेकाभ्यामवबोधयति— क्वचित्त्विति। आकारसौष्ठवशौर्यगुणद्वययोगिनि पुरुषे आकारमहत्त्ववैषौज्ज्वल्यादेरपरोक्षीकरणात्। तदेतद् वक्ष्यमाणाया भ्रान्तेर्मूलम्। व्यवहाराद् औपचारि-

१. 'व शौ' क. पाठः. २. 'णा' क. ख. पाठः. ३. 'रनिबन्धनेन', ४', ५. 'गौरत्वादि', ६. 'रूपस्ये', ७. 'त्य' घ. पाठः.

दैर्व्यवहाराद् अन्यत्राशूरेऽपि विततकृतित्वमात्रेण शूर इति, क्वापि शूरेऽपि मूर्त्तिलाघवमात्रेणाशूर इति, अविश्रान्तप्रतीतयो यथा व्यवहरन्ति, तद्वद् मधुरादिरसव्यञ्जकसुकुमारादिवर्णानां माधुर्यादिव्यवहारप्रवृत्तेः अमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादि च रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्य-

सम्प्रदायप्रकाशिनी

दिसमुचिताकारवतः शूर इति प्रसिद्धिप्राचुर्यादाकार एवास्य शूर इति व्यवहारप्रवृत्तेः भीरावप्याकारवैपुल्यमात्राच्छूर इति, यथाच शूरेऽपि मूर्तिलाघवमात्रादशूर इत्युत्प्रेक्षाव्यवहारः, तथा मधुरादिरसव्यञ्जकसुकुमारवर्णेषु माधुर्यव्यवहारप्रवृत्तेर्मधुरादिरसाभावेऽपि ललितेषु वर्णेषु माधुर्यव्यवहारः, मधुररससद्भावेऽपि क्वचिद् अललितेषु वर्णेष्वमाधुर्यव्यवहारश्च । एवं विवेकविधुराणामेव । अतो रसधर्मा एव माधुर्यादयः समुचितैस्तु वर्णैर्व्यज्यन्ते, नतु वर्णमात्राश्रयाः । व्यञ्जकत्वात् तु व्यङ्ग्यगुणसंस्पर्शोऽस्तीति मात्रशब्दाकूतम् । इतरथा भ्रमस्यैवानुदयः । ननु माधुर्यव्यञ्जका एवैते न मधुरा इति युक्तिमात्रेण कथं प्रतीमः

साहित्यचूडामणिः

कात् । अन्यत्रेति । शौर्यव्यतिरेकेण केवलाकारसौष्ठवशालिनि । क्वापीति । आकारसौष्ठवव्यतिरेकेण केवलशौर्यधर्मिणि । अविश्रान्तप्रतीतयः अप्रतिष्ठितबुद्धयः अप्रामाणिकप्रतिपत्तयः यथा व्यवहरन्ति तथा केचिदालङ्कारिका अपि । मधुरादीत्यादिपदादोजस्वि प्रसन्नं च । सुकुमारादीति । शूरस्याकारमहत्त्वस्थाने रसस्य वर्णसौकुमार्यादि । अत्राप्येतद् भ्रान्तिमूलं यदत्र रसमाधुर्यादेर्वर्णसौकुमार्यादेश्च कश्चिन्मेलकानुभूतिः । रसपर्यन्तं विश्रान्तया प्रतिष्ठितया प्रतीत्या वन्ध्याः केवलशब्दार्थभागोपक्षीणा व्यवहरन्ति । अतएवेति । यतः शौर्या-

१. 'रव' ख. पाठः. २. 'द्धिः' क. ख. घ. पाठः. ३. 'यात् तदा', ४. 'क्षावध्यव', ५. 'षु' ङ. पाठः. ६. 'र्यादिव्य' ख. पाठः. ७. 'र्शस्तद्द्वारकोऽस्ती', ८. 'यात्', ९. 'नतु म', १०. 'तिः' ङ. पाठः.

श्यन्ते, नतु वर्णमात्राश्रयाः । यथैषां व्यञ्जकत्वं तथोदाहरिष्यते ॥ १ ॥

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥ २ ॥

सम्प्रदायप्रकाशिनी

इत्यत आह — यथैषामित्यादि । उदाहरिष्यते, न केवलमुपपत्तिमात्रेण अपितु प्रतिपिपादयिषितगुणालङ्कारविवेकसिद्धावुदाहरणतोऽपि[2] दर्शयिष्यत इत्यर्थः ॥ १ ॥

अलङ्काराः[3] पुनरन्य एवेत्याह — उपकुर्वन्ति तमिति । ये हि धर्माः सन्तं रसमुपकुर्वन्ति । अनेन रसं विनाप्यवस्थानमेषां सूचितम् । गुणास्त्वपृथग्वृत्तयः । किञ्च यदुपकुर्वन्ति, नैतद् गुणा इव साक्षाद्, अपितु शब्दार्थरूपातिशयाधानद्वारेण । किञ्च जातुचित् कदाचित् सन्तमपि नोपकुर्वन्ति । गुणास्तु नित्योपकारिणः ।

साहित्यचूडामणिः

देरात्मधर्मत्वनियमः अतएव माधुर्यादयो रसधर्माः । किमन्तर्गडुभिर्वर्णैरित्याह — समुचितैरिति । यथा समुचितैराकारैः शौर्यादयो व्यज्यन्ते, एवम् । नतु वर्णमात्राश्रयाः, माधुर्यादयः । उदाहरिष्यत इति । अत्रैवोल्लासे ॥ १ ॥

गुणालङ्कारविवेकस्य वक्तव्यत्वात् तस्य च तदुभयसद्भावपरिज्ञानपूर्वकत्वादकाण्डेऽप्यलङ्कारलक्षणमुपक्षिपति — उपकुर्वन्तीति । तम् अङ्गिनं रसम् । सन्तमिति न पुनरविद्यमानम् उपकारोप(क्ष ? क्षा)या अभावात् । जातुचित्, न सर्वदा, क्वचित्तु सन्तमपि नोपकुर्वन्तीति वक्ष्यमाणत्वात् । संयोगवृत्त्या तमुपकुर्वन्त्यलङ्काराः नतु गुणवत् समवायवृत्त्या । यदाह —

"अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्"

इति । ध्वनिरात्मभूतोऽलङ्कार्यः यश्चित्तवृत्तिविशेषं सूचयति । कटकादिभिरपि शरीरवर्तिभिरात्मैवालङ्कार्यः नत्वचेतनं शवशरीरम् । यदि शरीरं च कटकादि-

१. 'त्रम् । अ', २. 'विमर्श', ३. 'अत्राल' ङ. पाठः, ४. 'नाव' ग. पाठः ५. 'णाः पृ' ङ. पाठः, ६. 'न चेत् सगुणा' क. ख. घ. पाठः.

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति, ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः । यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसिताः[1] । क्वचित्तु सन्तमपि नोपकुर्वन्ति ।

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला ॥

इत्यादौ वाचकमुखेन,

---

सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे — **ये वाचकेत्यादि** । ननु सन्तामित्युक्तम्, असति रसे का स्थितिरित्यत आह — **यत्र तु नास्तीत्यादि** ।

शब्दार्थद्वारेणोपकुर्वन्ति[2], सन्तमुपकुर्वन्ति, जातुचिदुपकुर्वन्तीति त्रितयमप्युदाहृत्य दर्शयति — **अपसारयेत्यादिना** ।

**वाचकमुखेनेति** । अनुप्रासादीनां शब्दालङ्कारत्वात् ।

साहित्यचूडामणिः

युक्तं हास्यावहम् अनौचित्यात् । नच देहस्य किञ्चिदनौचित्यं(?)मित्यात्मैवालङ्कार्यः[3] अहमलङ्कृत इत्यभिमानात् ।

ननु यत्र रसो नास्ति तत्र[4] किमलङ्काराणां कृतमित्याह[5] — **यत्र त्विति** । यत्र काव्ये स्फुटप्रतीतिको रसो नास्ति तत्र शिल्पभणितिमात्रविश्रान्ताः यथा चित्रवर्तिनो राजादेरलङ्काराः । रसस्य सत्त्वेऽपि कदाचिदलङ्काराणामनुपयोगः यज्जातुचिदित्युक्तमित्याह — **क्वचित्त्विति** । यथोदाहरिष्यति[6] ।

रसस्य सम्भवत उपकारस्थानमुदाहरति — **अपसारयेति** । अत्र वाचकमुखेनानुप्रासो रसस्य विप्रलम्भशृङ्गारात्मन उपकारी ।

---

१. 'सायिता । क्व' ख. पाठः. २. 'र्थाङ्गद्वा' ख. ग. पाठः. ३. 'त्यात्मैवा' घ. पाठः ४. 'त्र', ५. 'त्यत्राह', ६. 'दो' ग. पाठः.

मनोरोगस्तीव्रं विषमिव विसर्पन्नविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयान[1]त इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ।

चित्ते पहुट्टदि[2] ण खुट्टदि सा गुणेसु[3]
सेज्जाए लुट्टदि विहुट्टदि दिम्मुहेसु ।
वोळम्मि[4] वट्टदि पवट्टदि[5] कव्वबन्धे
झाणे[6] ण तुट्टदि चिरं तरुणी तरट्टी ॥

सम्प्रदायप्रकाशिनी

**मनोरोग** इति ।

**वाच्यमुखेनेत्युपमालङ्कृतिसूचनम् ।**

**चित्ते पहुट्टदीति[7] ।**

**चित्ते निर्खन्यते न स्खलति सा गुणेषु**
**शय्यायां लुठति विकसति दिङ्मुखेषु ।**
**भणिते वर्तते प्रवर्तते काव्यबन्धे**
**ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा ॥**

साहित्यचूडामणिः

**मनोरोग** इत्यादौ वाच्यं[9]द्वारोपमा ।

अथ विद्यमानस्यापि रसस्यालङ्कारैर्[10]अनुपकारैर्[11]उदाहरति — चित्त इति ।
चित्ते प्रलुठति न त्रुट्यति सा गुणेषु शय्यायां लुठति विसर्पति दिङ्मुखेषु ।
अपक्रमणे[12] वर्तते प्रवर्तते काव्यबन्धे ध्यानेन तुष्यति चिरं तरुणी विदग्धा ॥
इति ।

---

१. 'बलीया' क. पाठः. २. 'पखुट्ट', ३. 'सिणेहे से' ख. पाठः. ४. 'हो' क. पाठः. ५. 'विपट्ट' ख. पाठः. ६. 'जा' क. पाठः. ७. 'वहट्टईति' ख. पाठः. ८. 'ह्' ग. पाठः. ९. 'च्याधारो', १०. 'रूप' घ. पाठः. ११. 'रकमु', १२. 'क्रा' ग. पाठः.

इत्यादौ वाचकमेव,

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेण वियोगिना बिसलता नास्वादिता नोज्झिता
वक्त्रे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥

इत्यादौ वाच्यमेव, नतु रसम् । अत्र *च बिसलता जीवं रोद्धुं न क्षमेति प्रकृताननुगुणोपमा ।

सम्प्रदायप्रकाशिनी

इत्यादौ शब्दवैचित्र्य एव कविसंरम्भ इति रसाभावाद् वाचकमेवोपकरोत्यनुप्रासादिः ।

मित्रे क्वापीति । मित्रेऽर्के सुहृदि च । मित्रास्तमयादिना विपदुपनिपातोऽभिव्यज्यते । दयितासन्नमिति । तथाविधसारसंदर्शनमपि दुःखोत्तेजनाय ।

नन्वत्रोपमा वाच्यमेवोपकरोति नतु रसमित्युच्यते, तत् कथमित्यत आह — अत्र च बिसलतेति ।

साहित्यचूडामणिः

अत्र वाचकमेव नतु सन्तमपि रसमुपकरोत्यनुप्रासः ।

मित्र इति । सूर्ये सुहृदि च । योऽयमनास्वादनानुज्झनवेलायां चक्रवाकवक्त्रवर्तिन्या मृणाललताया उत्क्रान्तं जीवं निरोद्धुमर्गलया सादृश्यादुपमालङ्कारो वाच्यमेवार्थमलङ्कर्तुमलं न पुना रसम् । मृणाललता हि चक्रवाकेण नास्वादिता, कुतः, चक्रवाकीचञ्चुपुटार्पितोपयोगासिद्धेः । नचोज्झिता, कुतः, आलस्यात् । सा च विरहिणो विहगस्य कामिसृष्टिसाधारण्यादुद्दीपनतया हृदयव्यथावहत्वाज्जीवं हठान्निर्गमयितुमुत्सहते नतु निरोद्धुमित्युपमा प्रकृताननुगुणा प्रकृतं चक्रवाकविप्रलम्भं प्रत्यनुचिता । किञ्च प्राणोत्क्रान्तिकाले कण्ठे तृणादिसङ्गः प्राणस्थापक इत्युक्तः स्वोक्तयोरपेक्ष्यमाणत्वेनाप्यनौचित्यं किमङ्ग पुनरौपम्येऽपि शापे(?) इति वामनो दूषितवान् ।

१. 'मा' ग. च पाठः. २. 'सी' क. ग. ङ. पाठः. ३. 'क्चित् प्रा', ४. 'तदुक्ते', ५. 'त्वेऽप्य', ६. 'शा । अ' घ. पाठः.

* 'त्र बि' इति मूलकोशपाठः.

एष एवञ्च गुणालङ्कारप्रविभागः । एवञ्च 'समवाय-
वृत्त्या शौर्यादयः, संयोगवृत्त्या तु हारादय इत्यस्तु गुणाल-
ङ्काराणां भेदः । ओजःप्रभृतीनामनुप्रासादीनां चोभयेषामपि
समवायवृत्त्या स्थितिरिति गड्डुरिकाप्रवाहेणैषां भेद' इत्यभि-

सम्प्रदायप्रकाशिनी

इत्थं सिद्धं गुणालङ्कारप्रविभागं निगमयति — एष एव-
चेति । नतु वक्ष्यमाणो वामनाद्युपदर्शित इति यावत् । इत्थं विभाग-
सिद्धौ योऽयमभेदवादिनामुपहासः स तानेव स्पृशतीत्याह — एवञ्च
समवायवृत्त्येत्यादि । अस्तु गुणालङ्काराणामिति । लौकिकानां
विभागमुपगच्छाम इत्यर्थः । काव्यगुणालङ्काराणां त्वभेद एवेत्याह—
ओजःप्रभृतीनामित्यादि । इतिर्हेतौ । यत उभयेषामपि समवाय-
वृत्त्या स्थितिः, अतो भेदाभिधानं गड्डुरिकाप्रवाहेण बर्करप्रयाणनयेन ।
एकस्यां गड्डुरिकायामर्थपर्यालोचनं विनैव पुरःप्रयातायां सर्वैव पङ्क्ति-
स्तमेव पन्थानं प्रमाणीकृत्य प्रवर्तते । प्रकृतेऽप्येतदेवाभाणकमायात-
मिति यावत् । इति स्वरूपावच्छेदः । इति यदेतत् सोपहासमभिधानं
तदसत् । तत्पशुत्वं तेषामेव स्यात् । भेदस्य सम्यग्विवेचितत्वादिति
भावः । इत्थं गुणालङ्कारयोरैक्यं निराकृत्य यद् वामनादिभिर्भेदोऽन्यथा

साहित्यचूडामणिः

अथ दृष्टान्तीकृतानां गुणालङ्काराणां वृत्तिभेदमभ्युपगच्छामः । दार्ष्टा-
न्तिकानां पुनस्तदभेद एव । तद्भेदस्तु गतानुगतिकतामात्रप्रयुक्त इति परकीयं
प्रत्यवस्थानं परास्तं मत्ये(मित्यत आ ? मीत्या)ह — एवञ्चेति । अस्त्विति
कामचारकरणे लोट् । उभयेषामिति । गुणानामलङ्काराणां च । समवाय-
वृत्त्या न पुनरलङ्काराणां संयोगवृत्त्येति विशेषात् । गड्डुरिकाप्रवाहेण मेष-
जातिगमनन्यायेन गतानुगतिकतामात्रेण भेद इत्यभिधानमसाधु । तत्र युक्तय

१. 'स्ति', २. 'ड्डु' ख. पाठः. ३. 'रवि' क. घ. पाठः. ४. 'तेषामेव मूर्भि वसतीत्या', ५. 'च', ६. 'त्तीया स्थि' ङ. पाठः. ७. 'ड्डु' ग. पाठः. ८. 'यकुर' क. घ. पाठः. ९. 'ड्डु' क. ख. ग. पाठः १०. 'व भाणकमित्याशय इति स्व' क. ख. ग. घ. पाठः. ११. 'व । भे' ङ. पाठः. १२. 'रणे', १३. 'त्त्या यदा पु' घ. पाठः.

धानमसत् । यदप्युक्तं 'काव्यशोभायाः कर्तारो धर्मा गुणाः तदतिशयहेतवस्त्वलङ्कारा' इति, तदपि न युक्तम् । यतः, किं समस्तैर्गुणैः काव्यव्यवहारः उत कतिपयैः । यदि समस्तैः, तत् कथमसमस्तगुणा गौडीया पाञ्चाली च रीतिः काव्यस्यात्मा । अथ कतिपयैः, तत्

"अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ।"

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।

---

**सम्प्रदायप्रकाशिनी**

दर्शितस्तदुद्दलयितुमाह— यदप्युक्तमित्यादिना । यदिदं काव्यशोभाकर्तृत्वेन काव्यव्यपदेशहेतवो गुणाः लब्ध[1]तथाव्य[2]पदेशस्य[3] त्वतिशयहेतवोऽलङ्कारा इति विभाग उच्यते, न तद् युक्तं विकल्पासहत्वात् । तथाहि[4]—किं समस्तैर्गुणैः काव्यव्यवहारः क्रियते, उत कतिपयैः । नाद्यः । असमस्तगुणयोर्गौडीपाञ्चाल्योः काव्यात्मत्वाभ्युपगमविरोधात् । न द्वितीयः । 'अद्रावत्रे'त्यादावोजःप्रमुखकतिपयगुणसम्भवात् काव्यव्यपदेशप्रसक्तेः । इत्थं तावन्नास्ति काव्यव्यपदेशहेतुता गुणानामिति अन्या-

**साहित्यचूडामणिः**

उक्ताः । अथ वामनालङ्कारनिर्णीतं गुणालङ्कारभागमधिक्षिपति — **यदपीति** । **यत इति** । रीतिरात्मा काव्यस्य । रीतिश्च विशिष्टा पदरचना । वैशिष्ट्यं च गुणरूपम् । विशेषो गुणात्मेत्युक्तत्वात् । तत्र प्रथमा समग्रगुणा वैदर्भी, ओजःप्रभृतिकतिपयगुणा गौडीया, माधुर्यादिकतिपयगुणा पाञ्चालीति तिस्रो[5]ऽपि ताः काव्यस्यात्मभूता इति वामनीया मर्यादा । तत्र दूषणाय विकल्पयति — **किमिति** । आद्ये कल्पे दोषमाह — **तदिति** । वैदर्भी केवला काव्यस्यात्मा स्यात् । न गौडी वा[6] पाञ्चाली वा । द्वितीयं कल्पं[7] कन्दलयति— **अथेति** । पर्वतोऽग्निमानित्यादौ[8] तर्कशास्त्रानुकूलेऽप्योजःश्लेषार्थव्यक्त्यादिषु गुणेषु कतिपयेषु सत्सु काव्यव्यपदेशः प्राप्नोति । अनिष्टं च तत् ।

---

१. 'व्यव्य' क. ख. घ. पाठः. २. 'वहारस्याति' ख. पाठः. ३. 'स्य हे', ४. 'हीति स' क. घ. पाठः. ५. 'तिस्रो' घ. पाठः. ६. 'या' ग. पाठः. ७. 'यं कन्द', ८. 'दि' घ. पाठः.

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहार-प्रवर्तकौ ॥ २ ॥

इदानीं गुणानां भेदमाह —

---

सम्प्रदायप्रकाशिनी

प्तिर्दोषः । अतिव्याप्तिरपि । तथाहि—स्वर्गप्राप्तिरित्यादौ पूर्वापरवाक्यार्थीभूतविशेषोक्तिव्यतिरेकालङ्काराभ्यामेव गुणनैरपेक्ष्येण काव्यव्यपदेशदर्शनात् । नन्वत्रापि शृङ्गारानुगतमधुरगुणसापेक्षयोरेवानयोः काव्यव्यपदेशहेतुतेति चेत् । मन्दमिदम् । अभिव्यञ्जकललितवर्णाभावान्मधुरगुणव्यक्तिरेव नास्ति । दूरे तदपेक्षा निस्सपत्नचमत्कारातिशयकारिणोर्विशेषोक्तिव्यतिरेकयोः । अतोऽस्माभिरुपदर्शित एव विभागः श्रेयान् ॥ २ ॥

अथ भेदविवेचनप्रसक्त्यैव सामान्यतो लक्षितानां गुणानामयं विशेषलक्षणावसर इत्याह — इदानीमित्यादि ।

साहित्यचूडामणिः

किञ्च तदतिशयहेतवः खल्वलङ्काराः । गुणासिद्धौ[6] कथमतिशयकारणस्यालङ्कारस्यौचित्यमित्याह — स्वर्गेति । वरवर्णिनीति सामानाधिकरण्येनोक्तिः । पूर्वार्धे विशेषोक्तिः । यत् स एवाह — एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः[7] । उत्तरत्र व्यतिरेकः ।

गुणनिरपेक्षौ स्फुटप्रकाशमानगुणसंस्पर्शशून्यौ अनावश्यकतयापरामृष्टौ ॥ २ ॥

अथ स्वमतानुगुणं गुणविभागमाह — इदानीमिति ।

---

१. 'पूर्वोत्तर', २. 'र्थं' ङ. पाठः. ३. 'स्ति । अदू' क. ख. घ. पाठः. ४. 'क्षया नि' क. घ. पाठः. ५. 'योः । एकोऽतो' ङ. पाठः. ६. 'द्धोऽयमिति क', ७. 'क्तिरिति ज' घ. पाठः.

**माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।**

एषां क्रमेण लक्षणमाह—

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ३ ॥**

शृङ्गारे अर्थात् सम्भोगे । द्रुतिर्गलितत्वमिवं ।

श्रव्यत्वं पुनरोजःप्रसादयोरपि ॥ ३ ॥

---

सम्प्रदायप्रकाशिनी

माधुर्यौज इति । त्रय एवेतीयतैव नियमे सिद्धेऽपि न पुनर्दशेत्युक्तिर्निराचिकीर्षया प्रतिज्ञा ।

एतत्स्वरूपविवेचनपूर्वकमेवान्यनिराकरणं न्याय्यमित्यभिप्रायेणाह— एषां क्रमेणेति ॥ २½ ॥

आह्लादकत्वमिति । यदेतत् सम्भोगशृङ्गारे आस्वाद्यमाने सहृदयहृदयाह्लादकत्वलक्षणस्तद्धर्मः प्रतीयते स माधुर्यं गुणः, यत्र सति मनो गलितमिव भवति तदास्वादनसमये निर्मनस्कतैव जायत इत्यर्थः ।

विप्रलम्भस्य पृथगुपादानाद् गोबलीवर्दन्यायेन शृङ्गारशब्दस्यार्थः संकुचतीत्याह— अर्थात् संभोग इति।[२]श्रव्यत्वं माधुर्यमिति यदुक्तमन्यैस्तदनैकान्तिकमित्याह— [३]श्रव्यत्वं पुनरित्यादि ॥ ३ ॥

साहित्यचूडामणिः

माधुर्येति । एते त्रय एव गुणाः न पुनर्दशेति वामनालङ्का[४]रोक्तमभिसन्धायोक्तिः ॥ २½ ॥

आह्लादकत्वमिति । चित्तस्य यदाह्लादनिबन्धनं तन्माधुर्यम् । द्रुतिपर्याय आह्लादः यः प्राचीनकाठिन्यपर्युदासे पर्यवस्यति ।

अर्थादिति । विप्रलम्भे सातिशयस्य तस्य वक्ष्यमाणत्वात् । ननु द्रुतिर्द्रवद्रव्यस्वभावः कथमन्तःकरणस्योपपत्तिमानित्यत्राह— गलितत्वमिवेति । औपचारिकः प्रयोग इति यावत् । माधुर्यवर्णनायां हि सहृदयानां हृदयमार्द्रीभवति । ननु,

"श्रव्यं नातिसमस्तार्थशब्दमाधुर्यमिष्यते ।"

इति भामहेनाभाणि, तत् किमभिनवलक्षणकरणक्लेशेनेत्यत आह श्रव्य-

---

१. 'व सुश्राव्य' क. पाठः. २., ३. 'श्रा' क. ख. पाठः. ४. 'रम' ख. पाठः.

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।**

**अत्यन्तद्रुतिहेतुत्वात् ॥ ३½ ॥**

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ४ ॥**

---

सम्प्रदायप्रकाशिनी

**करुण** इति । तदेव माधुर्यं करुणादिषु त्रिष्वत्यन्तद्रुतिहेतुत्वात् सातिशयम् । तेषु हि शून्यमनस्कतैव जायते ॥ ३½ ॥

अथौजः — **दीप्त्यात्मेति** । ओजो वीररससमवायि, येन चित्तस्य ज्वलद्रूपो विस्तारो जायते ॥ ४ ॥

साहित्यचूडामणिः

त्वमिति । व्यभिचारादेतन्न लक्षणम् । नखल्वोजसः प्रसादस्य वा किञ्चिद्-श्रव्यत्वं, तद्गुणकस्य काव्यस्य दुष्टतापत्तेः ॥ ३ ॥

**करुण** इति । तद् माधुर्यं करुणविप्रलम्भशान्तेषु यथोत्तरमतिशयेनान्वीयते ।

कोऽयमतिशयान्वय इत्यत्राह — अत्यन्तेति । द्रवणातिशयो हि चेतसश्चर्वणीयमाधुर्यधाराधिरूढिः । यदाह —

"श्रृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥
श्रृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥"

इति । ननु कथं श्रृङ्गार एव मधुर इत्यवधारणमिति चेत् । न । परमार्थतः श्रृङ्गारस्यैव माधुर्यम्, उपचारेण शब्दार्थयोरित्याकूतादित्यलं रसान्तरव्यावर्तनश्रमेण, करुणादेरमधुरत्वप्रसङ्गात् । करुणस्यैव च सर्वरसोत्कर्षात् ॥ ३½ ॥

अथौजो लक्षयति — **दीप्त्यात्मेति** । दीप्त्यात्मन औज्ज्वल्यस्वभावाया विस्तृतेः प्रसरद्रूपतायाः कारणम् । वीररसे स्थितिर्यस्य । दीप्तिविस्तारयोः

---

१. 'तिः' क. ख. पाठः. २. 'बलोत्त', ३. 'ह । तथादि ह' घ. पाठः. ४. 'व स' ग. पाठः. ५. 'रो रसः स्थि' घ. पाठः.

च्चित्तस्य विस्ताररूपदीप्तत्वजनकत्वमोजः ॥ ४ ॥

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।**

वीराद् बीभत्से, ततोऽपि रौद्रे सातिशयमोजः ॥४½॥

**शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ॥ ५ ॥**

**व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ।**

---

सम्प्रदायप्रकाशिनी

**बीभत्सरौद्रेति ।**

**क्रमेणैतद् व्याचष्टे — वीराद् बीभत्स इत्यादि ।** अतिविस्तृतिहेतुत्वात् ॥ ४[1] ॥

अथ प्रसादः— **शुष्केन्धनेत्यादि ।** यथा शुष्केन्धनेमग्निः[2], यथा[3] च स्वच्छजलमन्यद् व्याप्नोति तथा चित्तं यः सहसा व्याप्नोति स प्रसादः । स च सर्वत्र साधारण्येन[4] वर्तते । यदा वीररौद्रादिषु चित्तं व्याप्नोति तदा शुष्केन्धनाग्निवत्, यदा[5] शृङ्गारकरुणादिषु तदा स्वच्छजलवदिति[6] ।

साहित्यचूडामणिः

पृथगर्थतायां कारिकायां दीप्त्या विस्तृतिः वृत्तौ विस्तारेण दीप्तिर्व्याख्यातेति नात्यन्तं वैषम्यम् । यदाह —

"रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः ।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम् ॥"

इति ॥ ४ ॥

अथ प्रसादं प्रकटयति — शुष्केति[7] ।

व्याप्यमनुद्दिष्टमभिधीयते । व्याप्यमिति व्याप्नोतीत्यनेन प्रसादवाचकतया सिध्यति । तस्य यत् कर्मभूतं चित्तम् । सर्वेष्विति । नहि माधुर्यस्यौजोनुगुणा[8] रचना सङ्गच्छते, नाप्योजसो माधुर्यानुकूला । प्रसादस्य तु तदुभयं तदतिरिक्तं च विषयः । यदाह —

---

१. 'ष्कमिन्ध' ग. पाठः. २. 'नाग्निः' क. घ., 'नोऽग्निः' ख. पाठः.
३. 'था स्वच्छं क्षीरादि वस्तु जलं त', ४. 'ण्ये व', ५. 'दा तु शृ' ङ. पाठः.
६. 'वदन्यदि' ख. ग. ङ. पाठः. ७. 'ति व्याप्नो' घ. पाठः. ८. 'र्यैऽप्योजो' घ. पाठः.

अन्यदिति व्याप्यमिह चित्तम्। सर्वत्रेति सर्वेषु रसेषु सर्वासु रचनासु च ॥ ५½ ॥

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ६ ॥**

गुणवृत्त्या उपचारेण। तेषां गुणानाम्। आकारे शौर्यस्येवेति ॥ ६ ॥

कुतस्त्रय एव न दशेत्याह —

---

सम्प्रदायप्रकाशिनी

सामान्येनोक्तं[1] व्याप्यं प्रसादकर्तृकतायां[2] विशिनष्टि[3]— **अन्यदितीत्यादि**। इह प्रसादे। सर्वशब्देन योग्यार्थसाकल्यमित्याह — **सर्वत्रेत्यादिना**[4] ॥ ५½ ॥

ननु शब्दार्थनिष्ठतया तेषां प्रतीतौ का गतिरित्यत आह — **गुणवृत्त्या पुनरिति**। नहि व्यञ्जके व्यङ्ग्यधर्मसंक्रान्तिर्वास्तवीति यावत्।

**आकारे शौर्यस्येवेति** प्रागुपपादितार्थानुस्मारणम् ॥ ६ ॥

साहित्यचूडामणिः

"समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥"

इति। यतः शुष्केन्धनाग्निवदिति प्रसादस्यौजसा संप्लव उक्तः, स्वच्छजलवदिति माधुर्येण ॥ ५½ ॥

ननु कथं शब्दार्थयोर्माधुर्यादिव्यपदेश[5] इति चेदाह — **गुणवृत्त्येति**। तत्राप्युक्तस्यैव दृष्टान्तस्यानुषङ्ग इत्याह — **आकार इति** ॥ ६ ॥

अथालङ्कारान्तरोक्तां[6] गुणपरिपाटीमात्मोपपादितायां त्रिगुण्यामन्तर्भावयितुमाह — **कुत इति**।

---

१. 'न्योक्तं वाच्यं प्र' क. घ., 'न्योक्तमपि वाच्यं प्र' ङ. पाठः. २. 'र्तृता' ङ. पाठः. ३. 'ष्टि। व्यापनाक्रियाबलादभिमतविशेष एव पर्यवस्यतीत्याह—अन्य' ङ. पाठः. ४. 'दि। न' ख. ग. ङ. पाठः. ५. 'दि तद्व्यप' ग. पाठः. ६. 'रोक्तां' क. ख. ग. पाठः.

**केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः ।**
**अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७ ॥**

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणोदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः, तेषामोजस्यन्त-

सम्प्रदायप्रकाशिनी

ननु न दशेत्युक्तं तत् कथमित्यत आह—**केचिदन्तर्भवन्तीत्यादि** । ये हि शब्दगुणा दश दण्ड्यादिभिर्दर्शिताः, तेषु केचिदेष्वेव त्रिष्वन्तर्भवन्ति । केचिद् दोषत्यागमात्ररूपाः । अन्ये तु न केवलमदोषात्मानः यावता विषयविशेषे दोषाश्च भवन्तीति न दशधा सम्भवन्ति ।

तत्रान्तर्भावं तावद् दर्शयति—**बहूनामपीत्यादि** । सन्धिसौष्ठववल[1]वशाद् बहूनां यदेकपदवदवभासनं स श्लेषः । यश्चैषामारोहावरोहात्मा क्रमः स समाधिः । या तु विकटता सा उदारता । यच्च समासमिश्रितं शैथिल्यं स प्रसाद इति । य एते चत्वारो गुणास्ते निरूप्यमाणा ओजस्येवान्तर्भवन्ति, दीप्त्यात्मविस्तृतिहेतुत्वानति-

साहित्यचूडामणिः

**केचिदिति** । अनुक्ताः केचिदुक्तेषु अन्तर्भवन्तीति । उपलक्षणं चैतत् । अलङ्कारे ध्वनौ वान्तर्भवन्ति । तथा वक्ष्यति—'अभिधास्यमानस्वभावोक्त्यलङ्कारेण'त्यादिना । केचन वैचित्र्यमात्रपर्यवसिता इत्यनुसन्धेयम् । परे इतरे गुणा दोषाणां लिखितपठितानां त्यागात् पारिशेष्येण स्वीकृताः । अन्ये गुणतयाभिमन्यमानाश्च केचिद् दोषत्वं भजन्ते । कुत्रचिदुदाहरणविशेषे । अहो महान् खल्वविवेको गुणबाहुल्यवादिनामिति यावत् । यत एवं ततो न दश । अपितु त्रय एव ।

**बहूनामिति** ।

१. 'धा तत्र स' क ख. ग. पाठः. २. 'लाद्' ख. ग. ङ. पाठः. ३. 'नामेक' ङ. पाठः.

भावः । पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम् ।

सम्प्रदायप्रकाशिनी

क्रमात् । पृथक्पदत्वरूपं तु माधुर्यं पर्यायान्तरेण स्वीकृतम् ।

साहित्यचूडामणिः

"यत्रैकपदवद् भान्ति पदानि सुबहून्यपि ।
अनालक्षितसन्धीनि स श्लेषः परमो गुणः ॥
आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम स गुणः पूता तेन सरस्वती ॥
विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् ।
शैथिल्यमोजसा मिश्रं प्रसादं च प्रचक्षते ॥
पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः ।
बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ॥
यत्रार्थव्यक्तिहेतुत्वं सोऽर्थव्यक्तिः स्मृतो गुणः ।
प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ॥
दुर्वलो दुर्विवादश्च समतेति गुणः स्मृतः ।
बन्धस्याजरठत्वं च सौकुमार्यमिति स्मृतम् ॥
औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविपश्चितः ।"

इति स्थित्या,

"वनान्तराले तव वीर ! वैरी निर्मक्षिको नित्यमचामरोऽपि ।
अचन्दनार्द्रोऽपि विपाण्डुराङ्गो निरातपत्रोऽपि भवत्यनूष्मा ॥"

अत्र यः श्लेषो मासृण्यलक्षणः,

"कविर्लोके वाग्मी गमक इति ये केचन गुणै-
रखर्वं गर्वेयुः परपरिभवारम्भसुभटाः ।
समायोगे तेषां सह सदसि गोपालकविना
कथङ्कारं तिष्ठेदशिथिलमहङ्कारगरिमा ॥"

इत्यत्र यश्च समाधिः,

१. 'त्वं तु' क. घ. पाठः. २. 'मो नाम गु' घ. पाठः. ३. 'त्रोपश्चे' ग. घ. पाठः.

साहित्यचूडामणिः

''हृदयकुडुवक्रोडादन्वक्षरार्पितविप्रुषः
प्रकृतिकलुषां ग्राहंग्राहं मषीमिव शेमुषीम्।
इह कतिपये वल्गज्जिह्वातलाञ्चलतूलिकाः
पवनपदवीतालीपत्रे लिखन्ति सुभाषितम् ॥''

**इत्यत्र** या चोदारता,

''प्रासादाग्रवितर्दिकाविहृतिषु प्रालेयिनीर्वल्लकी-
रध्यारोप्य गवाक्षभागफलकं बालातपालोहिनीः।
शुष्यन्तीरबलाः परीक्षितुममूरुच्चैः क्वणन्तीः क्रमात्
क्रन्दन्तीरिव ताडयन्ति तरलास्तन्त्रीरतन्द्रैर्नखैः ॥''

**इत्यत्र** यश्च प्रसादः, तेषामोजस्यन्तःपातः। शैथिल्यं हि प्रसादः। तस्य न यद्योजसा मिश्रणं तदा शुद्धां दोषपदवीमवतरतीति तत्परिहारायोक्तम्— **ओजोमिश्रितेति**। यथाह वामनः— 'प्रसादो* गुणसम्प्लवादि'ति। सम्प्लवः करुणप्रेक्षणीये सुखदुःखसम्प्लवादनुभवसिद्धः। एतेन शुद्धमोजो व्याख्यातम्। यथा ममैव—

खलजिह्वावलीढस्य काव्यस्य श्रवणार्हता।
श्वदंष्ट्रया विमृष्टस्य कुणपस्येव कल्पते ॥

**इति**।

यस्या वृत्तत एव कल्पितमभूदारोपितास्ते गुणाः
सङ्कोचं व्यपनीय पल्लवतया लक्ष्म्या परिष्कार्यसे।
धिक् ते तां च तदस्य लङ्घनधियं मूर्धानमुद्दिश्य या
वृत्त्या यत्र दिवापि दर्शयसि नच्छाययेति गाढं तमः ॥

**इत्यत्र** माधुर्यम्। साक्षादुपात्तं कण्ठेनोक्तम्। नन्वाह्लादकत्वं माधुर्यमिति यौष्माकीणं लक्षणं, वामनीयं तु पृथक्पदत्वमिति। तत् कथमनेन तस्य साक्षादुपादानमित्याशङ्क्याह— **भङ्ग्येति**। प्रकारभेदेन पृथक्पदत्वनिबन्धनोऽपि कश्चिदाह्लादोऽस्तीति मतान्तरे माधुर्यमस्य माधुर्यानुप्रवेशीति यावत्।

१. 'जोविमि', २. 'वः। क' घ. पाठः. ३. 'ते। य' ग. पाठ'. ४. 'युक्तं तां', ५. 'श्छा', ६. 'च्चितम्। क' घ. पाठः.

* 'गुणः संप्लवाद्' इति मुद्रितपुस्तकपाठः.

प्रसादेनार्थव्यक्तिरभिहिता । मार्गाभेदरूपा समता क्वचिद् दोषः । तथाहि—'मातङ्गाः किमु वल्गितैरि'त्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः । कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात् तन्निराकरणेनापारुष्यरूपं सौकुमार्यम्, औज्ज्वल्यरूपा कान्तिश्च स्वीकृते । एवं न दश शब्दगुणाः ।

सम्प्रदायप्रकाशिनी

प्रसादार्थव्यक्त्योर्न भेदः कश्चित् । मार्गाभेदरूपा तु समता 'मातङ्गाः किमु वल्गितैरि'त्यादौ दोषः । तत्र सिंहाभिधानावसरे मार्गभेद एव गुणः । यत् त्वपारुष्यरूपं सौकुमार्यं स दोषाभाव एव, पारुष्ये कष्टत्वापत्तेः । औज्ज्वल्यरूपा कान्तिरपि अनौज्ज्वल्ये ग्राम्यत्वोपत्तिरिति दोषपरिहारात्मिकैव । इत्थं शब्दगुणा दश न सम्भवन्ति ।

साहित्यचूडामणि

"क्रीडालोला कनकवलभौ साकमालीभिरेषा
यातायातैरधिकमधिकं पश्यतः पश्यतो मे ।
स्निग्धां दृष्ट्योः स्तनमुकुलयोरुन्नतामानतभ्रू-
रन्यामन्यामवयवदशामश्नुते पक्ष्मलाक्षी ॥"

इत्यत्रार्थव्यक्तिरास्माकीनेन प्रसादेन सङ्गृहीता । तेन तस्या अन्तःपातः । क्वचिद् दोष इति ।

"एको यज्जलमानुषेषु भगवान् नारायणो गण्यते
शुक्तिः काचन यस्य खण्डपरशोः श्लाघ्यं शिखामण्डनम् ।
यस्मिन् बुद्बुदशय्यया परिचितौ चन्द्रार्कयोर्मण्डलौ
कस्तं रेचयितुं क्षमश्चुलुकयन्नार्यादगस्त्यादृते ॥"

इत्यत्र यो मा(र्ग ? र्गा)भेदो गुणतयाभिमन्यते स क्वचिदन्यत्र दोषो भवति । तदेवोपपादयति— मातङ्गा इति । मार्गभेदस्यैवात्र रसावहत्वात् । मसृणस्यानुद्धतस्य मार्गस्य यस्त्यागः स प्रत्युत गुणः । महासत्त्वस्य सिंहस्य वाच्यत्वादिति व्याख्यातचरम् । कष्टत्वेति ।

१. 'ततो न' क. पाठः. २. 'त्वोतपत्ति' ख. ग. पाठः. ३. 'ग्धा', ४. 'ति । मा' ख. पाठः.

"पदार्थे वाक्यर*चनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च"

सम्प्रदायप्रकाशिनी

अर्थगुणास्तु न केवलं न दश, अपितु स्वरूपत एव न सन्तीत्याह — पदार्थे वाक्येत्यादि । य(ये ? दे)कस्य पदार्थस्याभिधाने वाक्यमारभ्यते, यच्च वाक्यार्थे पदमात्रमभिधीयते, यौ च व्याससमासौ

साहित्यचूडामणिः

"शत्रून् निपात्य चपलः शलभानु[1]पैति
निर्वापणेन पवनेन पटुर्बभूव ।
किं कथ्यते मसृणशीतलधन्यधा[2]म्नो
माणिक्यदीपमुकुलस्य महान् प्रभावः ॥"

इत्यत्र यत् सौकुमार्यं तत् कष्ट[3]त्वस्य श्रुतिकटुताया दोषस्य निराकरणादूरीचक्रे ।

"त्वयि सकृदपि श्लाघारम्भश्लथन्मणिकुण्डले
झटिति लभते व्याचक्षाणः कृती कृपणो गृहान् ।
करिकलकलत्रस्यत्क्रीडाकुरङ्गकुटुम्बिनी-
तरलनयनच्छायासंचारचन्द्रकिताङ्गणान् ॥"

इत्यत्र या कान्तिः सा ग्राम्यताया अवैदग्ध्यरूपायाः प्रतिक्षेपादुपलब्धा । निगमयति — एवमिति ।

अथार्थगुणानन्तर्भावयति — पदार्थ इति ।

"पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥"

इत्युक्तत्वात् । तत्र पदार्थे वाक्यवचनं यथा ममैव —

"लोचनेनैव जानन्ति लोके ये केचन ध्वनिम् ।
भुजङ्गा एव ते किन्तु वमन्त्यमृतमाननैः ॥"

इत्यत्र चक्षुःश्रवोलक्षणे पदार्थे पूर्वार्धाकारं वाक्यं रचितम् । वाक्यार्थे पदाभिधा यथा —

१. 'नवेति', २. 'ना', ३. 'ष्टस्य' घ. पाठः.

* 'वचनम्' इति मूलकोशपाठः.

**इति या प्रौढिः ओज इत्युक्तं, तद् वैचित्र्यमात्रं, न गुणः। तदभावेऽपि काव्यव्यवहारप्रवृत्तेः । अपुष्टार्थत्वाधिकपदत्वा-नवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन साभि-**

---

**सम्प्रदायप्रकाशिनी**

**मासौ तदात्मिका प्रौढिरोज इत्यपि न[1] सम्भवति, यतस्तद् वैचित्र्यमात्रं, न गुणः। इतरथा तदभावे काव्यव्यवहारो न प्रवर्तेत[2]। नच[3] तथा न प्रव-र्तते। अतो न गुणः। यच्च साभिप्रायत्वरूपमोजः, तदपुष्टार्थत्वपरिहार-**

साहित्यचूडामणिः

"किं ते गण्डे कितव! कुटिलाताम्रमालग्नमेतत्
किं तन्मुग्धे! परिमृशतु ते पाणिरज्ञातमाः किम्।
प्रष्टव्योऽयं प्रणयकलहेष्वस्तमर्थः सुधांशो-
रित्यालापो रहसि शिवयोः पेशलस्त्रायतां वः॥"

इत्यत्र कपोलस्थले मम लग्नचन्द्रलेखामुद्राङ्कस्त्वां नखक्षतशङ्कया क्षोभयतीति वाक्यार्थेऽज्ञातमिति पदमभिहितम्। इत्थं धारणस्योपरि न तत्परिज्ञानमपीत्यहो ते धाष्टर्यातिशय इति वाक्यार्थे आः किमिति[4] पदमभिहितम्। व्यासो यथा—

"बीजस्यार्पणमालवालघटना कुल्याम्भसो योजनं
रक्षा कण्टकशाखयेति सकलस्तुल्यः क्रियासंग्रहः।
दुर्लङ्घ्यो विषमः स्वभावमहिमा पत्रप्रकाण्डोदयो
माधुर्ये विपरीत इक्षुरभवन्निम्बश्च निम्बः स्वयम्॥"

इति। अस्यैव समासो यथा—

"एकस्मादेव सरसो वृक्षाणामम्बुसारणी।
स रसो विषमः कस्मादुभयोरिक्षुनिम्बयोः॥"

इति। एवंविधा प्रौढिर्या तल्लक्षणमोजो न गुणः, यावद् वैचित्र्यमात्रम्। तदेवो-पपादयति—**तदभावेऽपीति**। यदभावे काव्यव्यवहारस्यैव विसंवादः स गुण इति रहस्यम्। अथ दोषपञ्चकनिरासेन प्रौढिशेषस्य पुनर्गुणचतुष्कस्य च लाभ इत्याह—**अपुष्टेति**।

---

१. 'सु' ख. ग. पाठः, २. 'र्तते। न' क. घ., 'र्तेत। अ' ङ. पाठः. ३. 'च प्र' क. घ. 'च न' क. ख. पाठः. ४. 'मिदमिति', ५. 'ति हि र' घ. पाठः.

प्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्ववपुरुदारता च स्वीकृतानि । अभिधास्यमानस्वभावोक्त्यलङ्कारेण, रस-

सम्प्रदायप्रकाशिनी

रूपम् । अर्थवैमल्यात्मकः प्रसादो यः तदनधिकपदत्वमेव । उक्तिवैचित्र्य रूपं तु माधुर्यं नवीकरणमात्रम् । अपारुष्यरूपं सौकुमार्यम् अमङ्गलत्वप-

साहित्यचूडामणिः

*''गहिरमहुरत्थगब्भो असिढिळघडणोपसण्णसोमाळो ।
वक्को च्चिअ जइ रुच्चइ कव्वाळावो व्व कामिणिकडक्खो ॥''

इत्यत्र विशेषणानां यत् साभिप्रायत्वं तदपुष्टार्थत्वपरिहारादाक्षिप्यते ।

''ताम्रातटान्तपुलिने तव कुञ्जरेन्द्रानाधोरणाः श्रवणतालशिखाधिरूढाः ।
मुक्ताशिलाशकलकण्टकवेधखिन्नानुल्लाघयन्ति कनकाङ्कुशकोटिसूच्या ॥''

इत्यत्र अर्थवैमल्यात्मा यः प्रसादस्तस्याधिकपदत्वापाकरणादूरीकारः ।

''आस्तां सत्त्वमनुक्रिया बत महामेरोः किमिक्षोर्लता
दूरे दोःपटिमा कथन्नु फणिनां पत्युः पदे षट्पदाः ।
शौर्यं तिष्ठतु शौरये स्थिरमरुत्पुञ्जाय पुष्पं कियद्
धन्वी हन्त हरोऽपि काव्यसुभटः कामोऽपि धन्वी कथम् ॥''

इत्यत्र यदुक्तिवैचित्र्यरूपं माधुर्यं तदनवीकारव्युदासादासीदिति । तत्र वाच्य-मनतिवर्तमाने 'पुत्रेण पित्रा पुनरध्यरोहि सुत्रामराजधानी'त्यत्र यत् सौकुमार्यं तत् त्रिविधेऽश्लीले तृतीयभेदनिरासद्वारा सिध्यति ।

''धम्मिल्लकुण्डलितकेवलकेसराणां कर्पूरगर्भकलसीत्करणाक्षराणाम् ।
भ्रूभङ्गजिह्मदरकूणितलोचनानां वक्त्रे शुचौ निवसति स्वयमिक्षुधन्वा ॥''

इत्यत्र यदग्राम्यत्वाकारमौदार्यं तद् ग्राम्यत्वपरिवर्जनादार्जितमिति । अभिधास्यमानेति ।

१. 'दीर्घ' ख. पाठः. २. 'र्थपुरुषार्थत्व', ३. 'व', ४. 'तावदस्तु' ग. पाठः. ५. 'वद म', ६. 'द्द', ७. 'ग्रान् ध', ८. 'तति का', ९. 'रेण सि' घ. पाठः.

* गभीरमधुरार्थगर्भोऽशिथिलघटनोपसन्नसोमालो (?) ।
वक्र एव यदि रोचते काव्यालाप इव कामिनीकटाक्षः ॥

ध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थ-

सम्प्रदायप्रकाशिनी

रिहाररूपम् । अग्राम्यत्ववपुरुदारता तु ग्राम्येतरत्वम् । अतो नैते गुणाः । या तु वस्तुस्वभावस्फुटत्वरूपार्थव्यक्तिः सा वक्ष्यमाणेन स्वभावोक्त्य-

साहित्यचूडामणिः

''मन्दाकिन्याः पयसि भगवान् क्लृप्तनित्याभिषेको
बिभ्रद् दोष्णा तटभुवि जटाः शीकरानुद्वमन्तीः ।
रेखामिन्दोर्भुजगवलयं भस्म शार्दूलकृत्तिं
मालामस्थ्नामपि परिजनादाददानः पुनातु ॥''

इत्यत्र यार्थव्यक्तिः तस्याः स्वभावोक्त्या विषयापहारः । वामनमर्यादया त्वर्थ-व्यक्त्या स्वभावोक्त्यपलापः । भोजस्य पुनरुभयोपसङ्ग्रहः । यथोक्तं विषयविभागाय —

''अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते ।
जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥''

इति ।

''मीनैरन्तः शबलितभुवः स्पष्टदृष्टैः प्रसत्त्या
हंसद्वन्द्वैः सविधपुलिनादादरेणावगाढाः ।
मन्दोल्लासे मरुति ललितानुद्वहन्तस्तरङ्गा-
नाक्लिप्यन्ते कथमिव मया नर्मदायाः प्रवाहाः ॥''

इत्यत्र,

''क्रीडातल्पे दुकूले कुसुमपरिकरे चामराणां च पार्श्वे
वैलक्ष्याकारशाली विवलितनयनः स्मेरवक्त्रो विचिन्वन् ।
चूडालङ्कारमिन्दुं रहसि विगलितं निह्नुतं हैमवत्या
नर्मान्ते दत्तमीशः पुनरपि शिरसि स्थापयन् वः पुनातु ॥''

इत्यत्र च या दीप्तरसत्वाकारा[2] कान्तिः सा रसध्वनिना पूर्वत्र उत्तरत्र गुणीभूत-व्यङ्ग्येन च सङ्गृह्यते ।

१. 'म', २. 'नीरसत्वाका' ब. पाठः.

व्यक्तिः दीप्तरसत्वरूपा कान्तिश्च स्वीकृते। क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्वरूपा[1] समता दोषाभावमात्रं, न पुनर्गुणः। कः खल्वनुन्मत्तोऽन्यप्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायो-

सम्प्रदायप्रकाशिनी

लङ्कारेण, या तु[2] दीप्तरसत्वरूपा कान्तिः सापि रसध्वनिगुणीभूतव्यङ्ग्याभ्यां स्वीकृता। यश्च क्रमः कौटिल्यमनुल्बणत्वमुपपत्तियोगश्चेति चतुर्णां धर्माणां घटनात्मा श्लेषः, स वैचित्र्यमात्रम्। तदभावेऽपि काव्यव्यवहारप्रवृत्तेः। या च प्रस्तावावैषम्यरूपा समता, सा दोषा-

साहित्यचूडामणिः

"महति जनिता वंशे पाणौ कृतासि सकौतुकं
कथमिव मुखं रागी पास्यामि ते कलभाषिणि!।
इति विजयते राधातल्पे हरेः स्मरतः प्रियां
जनकतनयां स्वप्नालापः स्ववेणुलतान्वयी॥"

इत्यत्र क्रमस्य[4] कर्तव्यतया निर्णीतस्य वस्तुनो यत् कौटिल्यमुपाध्यन्तरात् प्रकारभेदः तस्य यदनुल्बणत्वमनुद्रेकः (तत्र या) प्रतीतिपारुष्यव्यपोहेन प्रतिपत्तिरौचित्यं[5] तस्य योग उपायः तद्घटनात्मा श्लेषोऽपि पूर्ववद् विचित्रत्वमात्रं, न पुनर्गुणः।

"मत्सत्यं वद बुद्बुदेन किमपां वज्रोपलः स्पर्धते
पिञ्छस्य प्रतिगर्जितुं सुरधनुर्लेखा न किं लज्जते।
खद्योतेन नखंपचस्य खदिराङ्गारस्य को मत्सरो
धिक् सादृश्यकथामिमां कवयतः पापीयसः प्रेयसीम्॥"

इत्यत्र यदवैषम्यलक्षणं साम्यं तस्य दोषगुणद्वितयव्यतिरेकेण तादवस्थ्यलक्षणा कोटिरन्या विषयः न गुणाकारा। अत्रोपपत्तिः— कः खल्विति। अर्थदृष्टिस्वभावः[6] समाधिरपि न गुणः। 'अर्थदृष्टिः समाधिः' (अधि० ३. अ० २. सू० ७) इति सूत्रम्। अर्थश्च द्विविध उक्तः, अयोनिरन्यच्छायायोनिश्च। तत्राद्यो यथा—

१. 'वैषम्याभावरूपा' ख. पाठः. २. 'तु' ङ. पाठः. ३. 'प्रवक्तव्य' क. ख. पाठः. ४. 'श्चि', ५. 'वृत्ति', ६. 'ष्टिः स्व' घ. पाठः.

नैरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत् कथं न दोषाकरं काव्यमिति अर्थदृष्टिरूपः समाधिरपि न गुणः ॥ ७ ॥

सम्प्रदायप्रकाशिनी

भाव एव । नह्यनुन्मत्तोऽन्यप्रस्तावेऽन्यदभिदधाति । अर्थदृष्टिरूपः समाधिरपि न गुणः, अयोनेर्नूतनस्य अन्यच्छायायोनेरन्यार्थानुसारिणो वाक्यार्थस्य दर्शनाभावे काव्यत्वभङ्गप्रसङ्गात् ॥ ७ ॥

साहित्यचूडामणिः

"आमेखलं सञ्चरतां घनानां छायामधःसानुगतां निषेव्य ।"

इत्यादि हिमवद्वर्णने । द्वितीयो यथा —

"यत्र प्रियाणामभिसारकाले बद्धः प्रकाशं प्रति साभ्यसूयाः ।
उद्यत्प्रदोषानुपकण्ठसानून् सिद्धाङ्गनाः सस्पृहमाश्रयन्ते ॥"

इति मेरुवर्णने । यद्वा "निश्शेषच्युतचन्दने"त्याद्यः[2] ।

"सत्यं निष्प्रपमौनगर्भवदनव्याख्यातभावाक्षरं
भग्नभ्रूलतमेकलक्षहृदयं चञ्चत्कटाक्षाञ्चलम् ।
आरादम्बुजकोशदेश्यमलिके सन्दर्शयन्नञ्जलिं
सन्ध्यां वन्दितुमुन्मुखोऽसि न पुनर्वातायनस्थां प्रियाम् ॥"

इति द्वितीयः । अनुपपन्नं चैतद् विभागकरणम् । तत्र यदाह —

"संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ।
नैकरूपतया सर्वे ते मन्तव्या विपश्चिता[3] ॥

संवादो ह्यन्यसादृश्यं तत् पुनः प्रतिबिम्बवत् ।
आलेख्याकारवत् तुल्यदेहवच्च शरीरिणाम् ॥

तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम् ।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः ॥"

१. 'र्थस्यानुसारेणैव वार्थ' क. घ. पाठः. २. 'नादिराद्यः' घ. पाठः. ३. 'ताम्' क. ख. घ. पाठः.

**तेन नार्थगुणा वाच्याः**

वाच्याः वक्तव्याः ।

**प्रोक्ताः शब्दगुणास्तु ये ।**

**वर्णाः समासो रचना *तेषां व्यञ्जकतामिताः ॥ ८ ॥**

सम्प्रदायप्रकाशिनी

यत एवमसम्भवः, तेन[1] नार्थगुणा वाच्याः, वक्तव्या एव न भवन्ति ।

ये तु शब्दगुणत्वेनान्यैरुक्ता ओजःप्रभृतयस्त्रयो[2] रसगुणास्तेषां वर्णादयो व्यञ्जका इत्याह — प्रोक्ताः शब्देत्यादि । तेषां वर्णाः समासो रचना चेति त्रितयं सम्भूय व्यञ्जकम् ॥ ८ ॥

साहित्यचूडामणिः

इति । तस्मादयोनिरन्यच्छायायोनिश्चेत्ययमयुक्तप्रायोऽर्थविभागः ॥ ७ ॥

निगमयति — तेनेति ।

"राजा भोजो गुणानाह विंश(तिश्च ? तिं च)तुरश्च यान् ।

वामनो दश तत्सारानाह[3] त्रीनेव भामहः ॥

त्रैगुण्यमेतदवलम्ब्य गुणान्तराणामुत्पत्तिरूपमुपकल्पितवैश्वरूप्यम् ।

आत्मा रसध्वनिरयं कलयन्नभिख्यां लोकोत्तरः स्फुरति काव्यमये शरीरे ॥"

इत्यन्तरश्लोकौ ।

अथ माधुर्यादिव्यञ्जकं वर्णादिविभागमाह — वर्णा इति ॥ ८ ॥

१. 'न अर्थगुणा न वा' ख. ग. पाठः. २. 'यो गु' क. ख. पाठः. ३. 'तानाह ... त्रीने', ४. 'मूलमु' घ. पाठः.

* 'स्तेषाम्' इति मूलकोशपाठः.

के कस्येत्याह—

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा॥ ९॥**

टठडढवर्जाः[1] स्पर्शाः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो मध्यमः समासो वेति समासः, 'तथा' माधुर्यवती पदान्तरयोगे[2] च रचना माधुर्यस्य व्यञ्जिका। उदाहरणम्—

सम्प्रदायप्रकाशिनी

कीदृशा वर्णादयः कस्य गुणस्य व्यञ्जकाः— **मूर्ध्नि वर्गान्त्यगा** इति। वर्णेषु तावद् मूर्ध्नि स्वस्ववर्गान्त्ययुक्ताः टवर्गरहिताः कादयो मावसानाः लघू रेफणकारौ चेति वर्णाः, मध्यमः समासः समासाभावो वा, मधुरा पदघटना चेति माधुर्यव्यञ्जको वर्गः।

तदेतद् व्याचष्टे—**टठडढेत्यादि**। **पदान्तरयोग** इति। पदान्तरयोगे सति माधुर्यवती सन्धिसौभाग्यवतीत्यर्थः।

साहित्यचूडामणिः

**क** इति। कस्य गुणस्य के वर्णादयो व्यञ्जकत्वं प्राप्ता इत्यपेक्षायामाहेति यावत्।

**मूर्ध्नि** स्वशिरसि। वर्गाणां कुचुटुतुपूनां येऽन्त्याः ङञणनमाः तान् गच्छन्तीति। अटवर्गाः टवर्गरहिताः। रणौ वर्णौ लघू। वृत्तिः समासः। तस्या अभावो वा। अवृत्तिमतिवृत्तिं च विहाय मध्यमवर्तिनी वृत्तिर्वा। तथेति। माधुर्यानुगुणा[3]। तदुपायश्च तादृक्पदान्तरयोगः।

टवर्गनिषेधे फलितमाह—टठेति। रणाविति णकारस्याङ्गीकारात्। कादयो मान्ताः स्पर्शपदस्याभिधेयाः।

१. 'र्जाः का', २. 'गे र' ख. पाठः. ३. 'विगुणाः।' क. ख. ग. पाठः.

अनङ्गरङ्गप्रतिमं तदङ्गं
भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा[1] यथैताः
स्वान्तानि शान्तापरचिन्तितानि[2] ॥

**योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।**
**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥ १० ॥**

वर्गप्रथमतृतीयाभ्यां तद्द्वितीयचतुर्थयोः, रेफेण अध

---

सम्प्रदायप्रकाशिनी

**अनङ्गरङ्गेति** । अत्रानङ्गरङ्गेत्यादौ मूर्ध्नि वर्गान्त्यगा अटवर्गाः स्पर्शाः, रेफश्च लघुः, पदान्तरयोगे घटना च मधुरा ॥ ९ ॥

ओजस आह — **योग आद्येति** । वर्गाद्यतृतीयाभ्यां वर्णाभ्यां सह अन्त्ययो[3](स्तृ ? द्वि)तीयचतुर्थयोर्योगः । कीदृशयोः, रेण तुल्ययोः । अध उपरि उभयत्र च रेफसहितयोः* । टवर्गश्च, शकारषकारौ चेति वर्णाः, दीर्घः[4] समासः[5], उद्धता च घटना ओजसि व्यञ्जको वर्गः ।

साहित्यचूडामणिः

**अनङ्गेति** । अत्र गकारतकारौ स्पर्शविशेषौ स्वस्वशिरसि ङकारनकारौ धारयतः । 'अपसारये'त्यादौ रेफश्च ह्रस्वान्तरितः ॥ ९ ॥

अथौजोव्यञ्जकमाह — **योग इति** । वर्गेषु य आद्यः प्रथमो वर्णः ककारादिः, यश्च तृतीयो गकारादिः, ताभ्यां सहान्त्ययोः खघयोर्योगो नैरन्तर्यम् । अन्त्यत्वं च स्वस्वापेक्षया । ततश्च प्रथमस्यान्त्यः खकारादिः, तृतीयस्य घकारादिः । किञ्च रेफेण योगः स्थाननिर्देशाभावाद् वर्णस्याध उपर्युभयत्र वा । अर्केत्यधः वक्रेत्युपरि वर्भ्रेत्युभयत्र । यस्य कस्यचिदक्षरस्य रेफेण योगः, न पुनर्नियतस्य ।

---

१. 'तरसा', २. 'न्तनानि' ख. पाठः. ३. 'न्य' क. पाठः. ४. 'र्गः श', ५. 'र्घस' ख. पाठः.

---

* वृत्तिविरुद्धमिदं व्याख्यानं दृश्यते ।

उपरि उभयत्र वा यस्यकस्यचित्, तुल्ययोः तेन तस्यैव सम्बन्धः, टवर्गः अर्थात् णकारवर्जः, शकारषकारौ, दीर्घः समासः, विकटा सङ्घटना ओजसः । उदाहरणं—"मूर्द्ध्ना-मुद्वृत्तकृत्ते"त्यादि ॥ १० ॥

**श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत् ।**
**साधारणः समग्राणां स प्रसादो गुणः स्मृतः ॥११॥**

---

सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे— **वर्गप्रथमेत्यादि** । **अर्थाण्णकारवर्ज** इति । माधुर्ये णकारस्य स्वीकारात् सामान्यविशेषभावन्यायेन तद्वर्ज इत्यर्थः । **मूर्द्ध्नामुद्वृत्तेति** । अत्र मूर्द्ध्नामित्यादौ (द्वि ? तृ)तीयस्य (तृती ? तुरी)ययोगः रेण तुल्यता च । उद्धुराणामित्यत्र दीर्घौ रेफ-णकारौ । 'ईशाङ्घ्रिदोष्णामि'त्यादौ शषौ, वृत्तिदैर्घ्यमुद्धतो गुम्फश्च स्फुटः ॥१०॥

अथ प्रसादः—**श्रुतिमात्रेणेति** । शब्दानां श्रवणमात्रेणार्थ-प्रतीतिर्यस्य महिम्ना जायते, स सर्वेषु रसेषु सर्वत्र समासे सर्वासु च घटनासु साधारणः प्रसादो गुणः ।

साहित्यचूडामणिः

किञ्च तुल्ययोर्योगः । नेह स्थानप्रयत्नसादृश्यं तुल्यत्वं, किं तर्हि[2], (अक्ष-रस्य) कस्यचिदक्षरेण केनचिद् योग इत्याशयवानाह—**तेन तस्यैवेति** । **टवर्ग** इति । यो माधुर्ये निषिद्धः । **णकारवर्ज** इति । माधुर्ये लघोर्णकारस्योपयोगात् । शषौ तालव्यमूर्धन्यावूष्माणौ । मूर्द्ध्नामित्यत्र तवर्गतृतीयेन[3] दकारेण तच्चतुर्थस्य धकारस्य योगः । मित्थ्येत्यत्र तवर्गप्रथमेन तकारेण द्वितीयस्य थकारस्य योगः । मूर्द्ध्नामिति रेफेणादौ योगः । अङ्घ्रीत्युपरि । उद्वृत्तेति तकारस्य तकारेणैव योगः । ईशपिशुनशब्दयोः शकारः । दोर्ष्णामिति षकारः । पटुरटत्कूर-धारः कुठार' इति टवर्गः । समासदैर्घ्यं सङ्घटनौद्धत्यं च स्पष्टम् ॥ १० ॥

अथ प्रसादव्यञ्जकमाह—**श्रुतीति** । नहि प्रसादे वर्णनैयत्यं केव-लम् । यत्र शब्दश्रवणसमनन्तरमर्थप्रतीतिः स प्रसादः ।

---

१. 'णेति । शब्दानां श्रवणमात्रेणार्थ' ख. ग. पाठः. २. 'र्हि, दकारे केन', ३. 'तवर्गस्य तृतीयद' घ. पाठः. ४. 'ष्णामिषामि' क. ख. ग. पाठः. ५. 'र्थनप्रती' घ. पाठः.

समग्राणां रसा[1]नां[2] समासानां संघटनानां च । उदाहरणं —

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

---

**सम्प्रदायप्रकाशिनी**

**परिम्लानमि[3]ति** । अत्र श्रुतिमात्रेणार्थप्रत्यय[4]ः प्रसादादेव ॥ ११ ॥

**साहित्यचूडामणिः**

**परिम्लानमिति** । अत्र शब्दानामहमहमिकयार्थप्रत्यायनौन्मुख्यात् प्रसादः । प्रसङ्गात् कृशाङ्ग्या इत्यादौ माधुर्योचिता वर्णाः, तनोर्मध्यस्येत्यादावोजोनुकूलाः, मध्यमः समासः, संघटना चानुद्धता । यदाह —

"शषौ सेरफसंयोगौ टकारश्चापि भूयसा ।
विरोधिनः स्युः शृङ्गारे ते न वर्णा रसश्च्युतः ॥
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा ।
तदा तं दीपयन्त्येव तेन वर्णा रसश्च्युतः ॥
असमासा समासेन मध्यमेन च भूषिता ।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता ॥
गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा ।"

इति ॥ ११ ॥

---

१. 'सादीनां' ख. पाठः. २. 'नां सं' क. पाठः. ३. 'ति । श्रु', ४. 'यः अत्र प्रसादत्वादे' ङ. पाठः.

यद्यपि गुणपरतन्त्राः संघटनादयस्तथापि,

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ १२ ॥

क्वचिद् वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः। यथा —

मन्थायस्तार्णवाम्भःप्लुतिकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥

---

सम्प्रदायप्रकाशिनी

ननु सङ्घटनादीनां गुणव्यञ्जकत्वात् तत्पारतन्त्र्ये[1] युक्ते[2] क्वचित् स्वतन्त्रा अपि दृश्यन्ते, तत् कथमित्यत आह — यद्यपीति ।

परिहरति — तथापि वक्तृवाच्येत्यादि । अन्यथात्वं गुणपारतन्त्र्याभावः ।

तत्र वक्त्रौचित्याद् दर्शयितुमाह — क्वचिद् वाच्येत्यादि । रचनादयः, स्वतन्त्रा दृश्यन्त इति शेषः ।

मन्थायस्तेति । कृष्णा द्रौपदी ।

साहित्यचूडामणिः

अथोक्तप्रकारव्यत्यासोऽपि क्वचिदुपाधिवशेन शोभत इत्याह — यद्यपीति ।

अन्यथात्वमपीति । किमु[3]त तथात्वम् । अन्योन्यव्यतिरेकादुदाहरणप्रपञ्चः स्पष्टः ।

---

१. 'न्त्र्यं', २. 'क्तम् । क्व' ङ. पाठः. ३. 'मु तथा' घ. पाठः.

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम्, अभिनेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः। वक्ता चात्र भीमसेनः।

क्वचिद् वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः। यथा —

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।

सम्प्रदायप्रकाशिनी

वाच्यप्रबन्धानपेक्षतां दर्शयति — अत्रहि न वाच्यमित्यादि। वाच्यं प्रश्नरूपम्। अभिनेयार्थं चेति। अभिनेयार्थे हि नाटकादौ उद्धतरचनादयो नेष्यन्ते, अपितु वक्त्रौचित्यादेवम्भाव इति दर्शयति — वक्ता चात्रेति। भीमसेनो हि धीरोद्धत इति युक्तास्तदुक्तावुद्धतरचनादयः।

क्वचिद् वाच्यमहिम्नैव दर्शयितुमाह — क्वचिद् वक्तृप्रबन्धेत्यादि।

प्रौढच्छेदेति। निर्व्याक्षेपखण्डनानुरूपेणोत्पतनरयेण भवता राहूपरागत्रासेनाकृष्टाश्वत्वात् तिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।

साहित्यचूडामणिः

रचनौद्धत्ये उपाधिमाह — अत्रहीति। ननु वाच्यस्य क्रोधव्यञ्जकत्वेऽपि प्रबन्धौचित्यादस्तु रचनौद्धत्यमित्यत्राह— अभिनेयार्थमिति। न पुनराख्यायिकादिश्रव्यम्। नाटकादौ रौद्रेऽपि न समासदैर्घ्यम्। यथा — 'यो यः शस्त्रं बिभर्ती'त्यादौ। नन्वेतत् प्रतिकूलवर्णविवेके दूषितम्। अत्रतु भूष्यत एवेति महती व्याहतिरिति चेत्। सत्यम्।

"गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः॥"

१. 'च्योचिता एते। य', २. 'रोधत्रा' क. पाठः. ३. 'र्थमिति', ४. 'परोधत्रा' ग. पाठः. ५. 'गतत्रासे सत्याकृ' ङ. पाठः. ६. 'दौ तु रौ', ७. 'सांस्त' घ. पाठः.

कुर्वत् काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥

क्वचिद् वक्तृवाच्यानपेक्षया प्रबन्धोचिता एते । तथाहि—आख्यायिकायां शृङ्गारेऽपि न मसृणा वर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न

सम्प्रदायप्रकाशिनी

अत्राहि वक्तृप्रबन्धनैरपेक्ष्येण वाच्यस्यासुरशिरसो महिम्नैव रचनादिपारुष्यम् ।

प्रबन्धौचित्यादाह— क्वचिद् वक्तृवाच्येत्यादि । तथाह्याख्यायिकायामित्यादि । आख्यायिका हर्षचरितादिः । कथा

साहित्यचूडामणिः

इत्यत्र गुणाः सङ्घटना चैकं तत्त्वमिति पक्षे रसादयो वाच्यादयो वा नियमनिबन्धनानि । गुणवक्त्रन्तरपरतन्त्रसंघटनापक्षे तु रसादय एव नियमहेतवः । यतो नीरसे कवौ तन्निबद्धे वा वक्तरि संघटनायाः कामचारः । रसभावसम्पन्नयोस्तु तयोरसमासा मध्यमसमासा वा सङ्घटना । अथ सङ्घटनापरतन्त्रगुणपक्षे सङ्घटनानियामका वक्तृवाच्यप्रबन्धा एव गुणनियमनिमित्तानि । इत्थं च पक्षत्रयेऽपि नोपप्लवः कश्चित् । अतश्च गुणपरतन्त्रसंघटनापक्षेण[3] दोषोद्भावनं, विपर्ययेण गुणत्वाङ्गीकार इति । यद्वा नात्रौजो गुणः मसृणवर्णत्वादसमासत्वादनुद्धतरचनत्वाच्च । नापि माधुर्यं रौद्ररसप्राधान्यात् । अस्तु तर्हि गुणः प्रसाद इति ब्रूमः । यदाहुः— 'समर्पकत्वं काव्यस्य' इत्यलमतिवैचक्षण्येन ।

१. 'दि । 'क. ख. घ. पाठः. २. 'ने' घ. पाठः. ३. 'न' क. ख. घ. पाठः.

दीर्घसमासादयः । एवमन्यदप्यौचित्यमनुसर्तव्यम् ॥ १२ ॥

इति काव्यप्रकाशे गुणालङ्कारभेदानियतगुणनिर्णयो नाम
अष्टम उल्लासः ।

---

सम्प्रदायप्रकाशिनी

**बृहत्कथादिः[1] । नाटकादावित्यादिशब्दात् प्रकरणभाणादयः । एवमन्यदपीति । चम्प्वादौ वक्त्राद्यनुसारेणौचित्यमनुसर्तव्यम् ॥ १२ ॥**

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यां
काव्यप्रकाशबृहट्टीकायाम्[2]

**अष्टम उल्लासः ।**

---

साहित्यचूडामणिः

**एवमन्यदपीति** । कपटपात्रप्रवेशादौ प्रतीते[3] पात्रानुगुण्येन वर्णसंघटनादि स्वयमूहनीयं, यथा रत्नावल्यादाविति सिद्धम् ॥ १२ ॥

मौलौ धार्यं प्रसूनं यदि कृतमितरैर्मूलपत्रप्रकाण्डै-
रालेह्यं[4] माक्षिकं चेदलमिह सरघाकोशमृत्कीटकल्कैः ।
एवं काव्ये गुणांश्चेदभिलषथ वृथा सञ्चितैः किं प्रपञ्चै-
र्माधुर्यौजःप्रसादानुचितपरिचयानाद्रियध्वं विदग्धाः ! ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्याम्
अष्टम उल्लासः ।

---

१. 'दि ।' क. ख. घ. पाठः. २. 'यां गुणविवेचनो नाम अ' क. पाठः. ३. 'के', ४. 'ह्य', ५. 'लेह्यं मा' घ. पाठः.

## अथ नवम उल्लासः ।

गुणविवेचने[1] कृते अलङ्काराः प्राप्तावसरा इति सम्प्रति शब्दालङ्कारानाह —

**यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते ।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥१॥**

---

सम्प्रदायप्रकाशिनी

अथ नवम उल्लासः ।

उल्लासयोः सङ्गतिमाह वृत्तिकारः — गुणविवेचने कृत इत्यादिना ।

प्रतीतौ प्राथम्यादिहोल्लासे शब्दालङ्कारनिरूपणम् । तत्राप्युक्तान्यथाकरणलक्षणाया विच्छित्तेः स्थूलत्वादादौ वक्रोक्तिं लक्षयति— यदुक्तमन्यथेत्यादि । एकेनान्याभिप्रायेणोक्तं वाक्यमितरः

साहित्यचूडामणिः

अथ नवम उल्लासः ।

क्वणन्माणिक्यमञ्जीरमेखलाङ्गदकङ्कणाम् ।
कवीनां रसनारङ्गे नृत्यन्तीं भारतीं भजे ॥
अथ शब्दैकविषयानलङ्कारान् प्रचक्ष्महे ।
यावतः प्राहुराचार्याः संक्षेपेण चिरन्तनाः ॥
तत्रापि यमकादीनामस्पृष्टरससम्पदाम् ।
काव्यानां गड्डभूतत्वाद् दिङ्मात्रमुपवर्ण्यते ॥
को नाम रसिको लोके लावण्यामृतवर्षिणि ।
कपोलफलके तन्व्याः कुर्यादेरण्डकुण्डलम् ॥
पठन्ति शब्दालङ्कारान् बहूनन्ये मनीषिणः ।
परिवृत्तिसहिष्णुत्वान्न ते शब्दैकभागिनः ॥
ते च वक्रोक्त्यनुप्रासौ यमकं श्लेष इत्यपि ।
चित्रं च पञ्चमः षष्ठश्चाभासः पुनरुक्तवत् ॥

इति ।

---

१. 'णे विवेचिते अ' क. पाठः.

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र[1] सभङ्ग-श्लेषेण यथा —

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।

सम्प्रदायप्रकाशिनी

श्लेषेण काक्वा वा यदितरार्थपरतया योजयति, सा वक्रोक्तिः श्लेष-काकुमूलत्[2]तया द्विधा ज्ञेया । तत्र श्लेषवक्रोक्तिः सभङ्गाभङ्गपदनिबन्ध-नतया द्विधेति त्रिभेदैषा ।

तत्र सभङ्गपदां श्लेषवक्रोक्तिमुदाहरति — नारीणामिति । यदि नारीणामनुकू[3]लतामाचरसि तदा त्वमभिज्ञोऽसीति कयाचिदुक्ते, अरी-णामनुकूलं नाचरसीत्युक्तमिति कृत्वा परिहासपरो दयितोऽन्यथयितु-माह — कश्चेतनो वामानां प्रतिकूलानां प्रियमादधातीति । वामाः स्त्रिय इति कृत्वा सा तदप्यन्यथयति — तर्ह्यबलानां हितकृन्न भवानिति ।

साहित्यचूडामणिः

यदुक्तमिति । अन्येन जनेनान्यथोक्तमन्येनान्यथा योज्यते इत्यावृत्त्या योज्यम् । श्लेषो वक्ष्यते । काकुरुक्ता ।

पदभङ्गेति । श्लेषो हि द्विधा भग्नपदोऽभग्नपदश्च । यत्र भट्टोद्भटमर्या-दया क्रमेण शाब्दत्वमार्थत्वं च समर्थयिष्यते ।

नारीणामिति । अङ्गनानामनुकू[4]लमाचरसि चेत् जानासि ज्ञातेति लोके परिगृह्यसे । तदेतदरीणां वैरिणामनुकूलं नाचरसि चेदित्यन्यथा कुर्वाण आह — कश्चेतन इति । एवञ्च नारीणामित्यस्य न वैरिणामिति पदभङ्गेनान्यथा यो-जना । वामानां प्रतिकूलानामित्येतद् महिलार्थतयान्यथा क्रियते — हितकृ-दिति । भवान् महिलानां न हितकारी । अथ करोत्यर्थं कर्तनार्थत्वेनाङ्गनार्थं

१. 'त्र भ' क. पाठः. २. 'त्वाद् द्वि' ङ. पाठः. ३. 'लमा' ख. ग. पाठः. ४. 'लमाच' ग. पाठः.

युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्नतु दारुमयी क्वचित् ॥

सम्प्रदायप्रकाशिनी

अबला बलरहिता इति, हितं कृन्ततीति हितकृदिति[2] च कृत्वा स पुनस्तरामन्यथयति — किं[3] बलाभावप्रसिद्धात्मनो हितकर्तनं युक्तमिति । बलोऽसुरस्तदभावेन प्रसिद्धः शक्र इति कृत्वा सा भूयोऽप्यन्यथयति— पुरन्दरमतच्छेदं विधातुं भवतः सामर्थ्यं कुत इति । अत्र विच्छित्तिर्वाक्यमात्रे स्फुटमेव पर्यवसिता व्यङ्ग्योऽर्थस्तु न कश्चित् प्रतीयत इति चित्रोदाहरणत्वेन प्रागुपादानम् । अनुप्रासादीनां तु रसानुगुणत्वेन व्यङ्ग्यसंस्पर्श इति समनन्तर्यम् । इतरथा तु वर्णालङ्काराणामेव प्राथम्यं युक्तम् ।

अथाभङ्गश्लेषः — अहो केनेति । अत्र क्रूरा केन निर्मितेति- विवक्षिते केन दारुणा काष्ठेनेति कृत्वान्यथयति — बुद्धिः सत्त्वादिगुणत्रयात्मिका नतु दारुमयी ।

साहित्यचूडामणिः

दुर्बलार्थतया चान्यथा करोति—युक्तमिति । बलस्य शरीरसारभूतस्याभावेन प्रसिद्धात्मनामित्येतद् बलस्यासुरविशेषस्य पराजयेन प्रख्यातः स्वभावो यस्येति पुरन्दरार्थतया विपर्यस्यन्नाह — सामर्थ्यमिति ।

अथाभङ्गश्लेषेणोदाहरति — अहो इति । दारुणा भीषणेत्येतद् दारुभूतेन करणेनेत्यन्यथाक्रियते । त्रिगुणा सत्त्वरजस्तमोमयी ।

१. 'नां' ख. पाठः. २. 'ति कृ' क. घ. ङ. पाठः. ३. 'किमबलभा', ४. 'द' ग. पाठः. ५. 'ठैव' क. घ. पाठः. ६. 'समशरम्' क. घ., 'समगन्तरम्' ख., समशरीरम्' ङ. पाठः. ७. 'था व' ख. ग. ङ. पाठः. ८. 'याश्रयात्मि' ग. पाठः, ९. 'णी' घ. पाठः.

काका यथा—

गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ ॥

**वर्णसाम्यमनुप्रासः**

स्ववैसादृश्येऽपि व्यञ्जनमात्रसदृशत्वं वर्णसाम्यम् ।
रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ।

---

सम्प्रदायप्रकाशिनी

अथ काकुवक्रोक्तिः—**गुरुपरतन्त्रेति** । अत्र दूरं गन्तुमुद्यत इत्येतन्नैष्यतीति काका नासौ परतन्त्रतां गमिष्यतीत्यन्यथात्वं नीयते ॥ १ ॥

अथ प्राथम्याद् वर्णालङ्कारप्रस्तावः—**वर्णसाम्यमिति** । स्वरनैरपेक्ष्येण व्यञ्जनमात्रसाम्यं वर्णसाम्यम् ।

तदेतदाह—**स्ववैसादृश्य** इति । लक्ष्यपदं निर्वक्ति—**रसाद्यनुगत** इति । आदिशब्देन भावादयो गृह्यन्ते । रसभावाद्यनुसारी 'मूर्ध्नि वर्गान्त्यगा' इत्याद्यनतिलङ्घनेन प्रकृष्टो वर्णानां विनिवेशोऽनुप्रास इत्यर्थः ।

साहित्यचूडामणिः

अथ काक्वोदाहरति—**गुर्विति** । नैष्यतीति नायिकोक्तौ प्रत्युतागमनं संभवीत्याकूतम् । सख्युक्तौ तु नकारशिरसि काकुप्रयोगात् सर्वाकारमेष्यत्येवेति ॥ १ ॥

अनुप्रासं लक्षयति—**वर्णेति** । स्वराणामचां वैलक्षण्येऽपि यद् व्यञ्जनानां हलां सादृश्यं तदिह वर्णसाम्यं विवक्षितम् । इह खल्वर्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति । तत्रार्थपौनरुक्त्यं प्ररूढं दोषः । (शब्दपौनरुक्त्ये व्यञ्जनपौनरुक्त्यमनुप्रासः स्वरव्यञ्जनपौनरुक्त्यं च प्ररूढं दोषः?) शब्दपौनरुक्त्ये व्यञ्जनपौनरुक्त्यमनुप्रासः, स्वरव्यञ्जनपौनरुक्त्यं च यमकं, केवलस्वरपौनरुक्त्यम् अचारुत्वान्न गण्यते । यथाह—

---

१. 'यार्थं दू', २. 'नसं' क. पाठः, ३. 'गमयिष्य' 'क. ग. घ. पाठः, ४. 'प्रत्यागमनसं' ग. पाठः

छेकवृत्तिगतो द्विधा ।

छेका विदग्धाः । वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः । गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च ।

---

सम्प्रदायप्रकाशिनी

तं विशेषतो लक्षयति — छेकवृत्तीति ।

कश्छेकः का वृत्तिरित्यत आह — छेका विदग्धा इत्यादि । नियतेति । यथावन्नियतेषु वर्णेषु रसविषयो योऽयं व्यञ्जनव्यापारः सा[1] वृत्तिरित्यर्थः । द्वन्द्वान्त[2]श्रुतविशेषणद्वारा[3] प्रत्येकाभिसम्बन्धी द्विरूप इत्याह — गत इत्यादि । छेकवृत्त्युपलक्षितत्वात् तथा व्यपदिश्यत इत्यर्थः ।

साहित्यचूडामणिः

"नार्नर्थवन्तोऽनुप्रासा नचाप्यसदृशाक्षराः ।"

इति ।

अनुप्रासशब्दं निर्वक्ति — रसादीति ।

छेकपदमप्रसिद्धं व्याचष्टे — विदग्धा इति । गृहचराः पक्षिमृगादयः छेका इति केचित् । वृत्तिः रसविषयो व्यापारः । अत्र तु तद्वती वर्णरचना वृत्तिः । सा च परुषादिवर्णारब्धत्वात् त्रिधा । अनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया पारुष्यलालित्यमध्यमत्वस्वरूपविवेचनाय वर्गत्रयव्युत्पादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः वर्तन्तेऽनुप्रासजातय आस्विति । यथाह भामहः —

"सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक्पृथगनुप्रासमुशन्ति कवयस्तथा ॥"

इति । ननु जातिमति जातेर्वृत्तिरिति शास्त्रशय्या । तत् कथं जातौ जातिमतो वृत्तिरिति चेत् । न ।

"लोकोत्तरे हि गाम्भीर्ये वर्तन्ते पृथिवीभुजः ।"

इत्युक्तवत् तदनुग्रहस्यैवात्र वृत्तिशब्दार्थत्वात् । तस्माद् वृत्तयोऽनुप्रासायमानाः । यदुक्तं 'जातिर्जातिमतो नान्ये'ति ।

---

१. 'स' क. घ. ङ. पाठः. २. 'न्द्वान्तरश्रु' ख., 'न्द्वानन्तरश्रु' ग. पाठः. ३. 'रं' क. घ. पाठः. ४. 'ना', ५. 'सानुप्राणायः' ग. पाठः.

किं तयोः स्वरूपमित्याह —

**सोऽनेकस्य सकृत् पूर्वः**

अनेकस्यार्थाद् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः । उदाहरणं —

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥

**एकस्याप्यसकृत् परः ॥ २ ॥**

सम्प्रदायप्रकाशिनी

तयोः स्वरूपजिज्ञासायामाह — **किं तयोरिति** ।

**सोऽनेकस्येति** । सकृदित्यत्र साम्यमित्यनुषज्यते । अनेकस्य वर्णस्य सकृत् साम्यं छेकानुप्रास इत्यर्थः ।

व्याचष्टे— **अनेकस्येत्यादि** । अर्थात् प्राकरणिकत्वरूपात् ।

**ततोऽरुणेति** । अत्र कामकामिनीत्यनेकस्य सकृत् साम्यम् ।

अथ वृत्त्यनुप्रासः — **एकस्यापीति** । एकस्यानेकस्य च व्यञ्जनस्य मुहुः साम्यं वृत्त्यनुप्रासः ।

साहित्यचूडामणिः

**अर्थाद् व्यञ्जनस्येति** । स्वरवैसादृश्ये इत्युक्तत्वात् । **एकवारमिति** । 'संख्यानियमे पूर्वं छेकानुप्रासः (सू० ४) । द्वयोर्व्यञ्जनसमुदाययोः परस्परमेकधा सादृश्यं संख्यानियम' इत्यलङ्कारसर्वस्वसूत्रस्थित्या द्वयोः सादृश्योक्तौ छेकानुप्रासः ।

**तत इति** । स्पन्दमन्दीति नकारदकारात्मकस्य व्यञ्जनसमुदायस्य सकृत् सादृश्यम् । एवं कामक्षामेति ककारमकाररूपस्य गण्डपाण्डुति णकारडकाराकारस्यापि मन्तव्यम् ।

**एकस्यापीति** । 'अन्यथा तु वृत्त्यनुप्रासः (सू० ५) इति सूत्रस्थित्या पूर्वस्माद् वैपरीत्यमस्य लक्षणम् ।

१. 'रसू', २. 'था वृ' घ. पाठः.

**एकस्य अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः । तत्र**

**माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते ।**

**ओजःप्रकाशकैस्तैस्तु परुषा**

---

सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे— एकस्यापिशब्दादिति । **द्विर्बहुकृत्वो वेति** । उभयथापि सकृत्त्वाभावो दर्शितः ॥ २ ॥

ननु वृत्त्युपलक्षितोऽयमनुप्रास इत्युच्यते, किंरूपास्ताः कियत्यश्चेत्यत आह— माधुर्येत्यादि । 'मूर्ध्नि वर्गान्त्यगा' इत्यादिना प्राक् प्रदर्शितैर्माधुर्यव्यञ्जकैर्वर्णैरुपलक्षिता चेत् सा वृत्तिरुपनागरिकेष्यते हृदयावर्जने नागरिकाकल्पेयमिति कृत्वा । 'योग आद्यतृतीये'-त्यनुशासनानुसाराद् ओजःप्रकाशकैर्वर्णैरुपलक्षिता परुषा ।

साहित्यचूडामणिः

उक्तसमुच्चयार्थोऽयमपिशब्द इत्याह — अपिशब्दादिति । असकृत्त्वं निश्चिनोति— द्विर्बहुकृत्वो[1] वेति ॥ २ ॥

अथ वृत्तिं विविनक्ति— माधुर्येति । 'मूर्ध्नि वर्गान्त्यगा' इत्यादिप्रतिपादितैः उपनागरिका नागरिकयोपमिता । *'उपादयः कुष्टाद्यर्थे तृतीयया' (वा० २. २. १८) इति समासः । यदाहोद्भटः —

"सरूपसंयोगयुक्तां मूर्ध्नि वर्गान्त्ययोगिभिः ।
स्पर्शैर्युतां च मन्यन्त उपनागरिकां बुधाः ॥"

इति । ओजःप्रकाशकैरिति । 'योग आद्यतृतीयाभ्यामि'[3]ति निर्णीतैः ।

---

१. 'द्विर्वा बहु' घ. पाठः. २. 'स्व' ग. पाठः. ३. 'त्यादिनि' घ. पाठः.

---

* 'अवादयः —' इति मुद्रितपुस्तकपाठः.

उभयत्रापि प्रागुदाहृतम् ।

कोमला परैः ॥ ३ ॥

परैः शेषैः। तामेव केचिद् ग्राम्येति वदन्ति । उदाहरणम् —

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला ॥

सम्प्रदायप्रकाशिनी

वृत्तिद्वयमिदं गुणप्रस्तावे प्रसङ्गादुदाहृतमित्यनुस्मारयति — उभयत्रापीति ।

कोमला परैरिति । परैः अमधुरैः अपरुषैः प्रसादविशेषप्रकाशकैरित्यर्थः ।

अस्याः संज्ञान्तरमाह — तामेवेति । तामिमां ग्राम्यकल्पतया ग्राम्येति चाहुः । अतो वृत्त्यन्तरभ्रमो न कार्य इति यावत् । तत्र माधुर्यप्रकाशकत्वेन मधुरवर्णविषयप्रसादप्रकाशकत्वेन चोपनागरिकैवोदाहृता 'अनङ्गरङ्गे'ति, 'परिम्लानमि'ति च । अतो माधुर्यौजोविषयत्वेनैवोदाहरणमनुस्मारितम् । प्रसादविशेषप्रकाशकत्वादनुदाहृतचरीमिमामुदाजिहीर्षुराह — उदाहरणमिति ।

अपसारयेति । अत्रहि वर्णा नातिकोमलपरुषाः ॥ ३ ॥

साहित्यचूडामणिः

प्रागिति । 'अनङ्गरङ्गे'ति 'मूर्ध्नामुद्वृत्ते'ति च ।

कोमलेति । प्रसादप्रत्यायकैः कोमला नाम वृत्तिः । तां कोमलामेव केचिदुद्भटादयो ग्राम्येति वदन्ति । यथाह —

"शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥"

इति ।

अपसारयेति । अत्र रेफस्य लकारस्य बहुकृत्वः सादृश्याद् वृत्त्यनुप्रासः सारादेर्व्यञ्जनसमुदायस्य चासकृत् सादृश्यात् ॥ ३ ॥

१. 'प्रायिक' क. ख. घ. पाठः.

**केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।**

एतास्तिस्रो वृत्तयः वामनादीनां मते वैदर्भीगौडीयापाञ्चाल्याख्या रीतय उच्यन्ते ।

---

सम्प्रदायप्रकाशिनी

या एता बहिरङ्गतरस्य वर्णालङ्कारस्याङ्गभूता एव वामनादिभिर्वैदर्भीप्रमुखा रीतयः काव्यात्मत्वेनोक्ताः । तस्यायमुपहासावसर इत्याह — केषाञ्चिदिति । एता इति अङ्गतां साभिनयं दर्शयति ।

व्याचष्टे — एतास्तिस्र इत्यादि । कथं वर्णालङ्काराङ्गभूतो वर्णधर्मः काव्यात्मत्वेन सिद्धान्तितो मुग्धैरिति यावत् । एवं वृत्तित्रयोदाहरणमुखेन वृत्त्यनुप्रासस्त्रिभेदक इति स्पष्टमुपदिष्टम् ।

साहित्यचूडामणिः

प्रसङ्गेन रीतिमालोचयति — केषाञ्चिदिति । एताः उपनागरिका परुषा कोमला । माधुर्यादीनां गुणानामुचितवृत्त्यर्पणप्रवीणानां ललितदीप्तमध्यमवर्णनीयविषयाणां विदर्भगौडपञ्चालदेशहेवाकप्राचुर्येण त्रैविध्यम् । सैव रीतिर्गुणसमुदाययोरिति याव'ज्जातिर्जातिमतो नान्या' 'समुदायश्च समुदायिभ्यो नान्य' इति रीतिवृत्तयो न गुणालङ्कारव्यतिरिक्ता इति रहस्यम् । यदाह —

"रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्थिताः ॥
शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः ।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे ॥
अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम् ।
अशक्नुवद्भिर्व्याकर्तुं रीतयः संप्रवर्तिताः ॥"

इति । तत्र शब्दगता वृत्तय एताः उपनागरिकानागरिकाग्राम्याः । अर्थगतास्तु कैशिक्यादयः प्रसिद्धाः ।

---

१. 'त्यभिप्रायेणाह', २. 'यं निर्दिशति' ङ. पाठः. ३. 'क्ताः', ४. 'पा' ग. घ. पाठः. ५. 'तु । यदुक्तं — स' घ. पाठः.

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ४ ॥**

शब्दगतोऽनुप्रासः शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात्। लाटजनवल्लभत्वाच्च[1] लाटानुप्रासः। एष पदानुप्रास इत्यन्ये ॥ ४ ॥

सम्प्रदायप्रकाशिनी

इत्थं वर्णानुप्रासं निरूप्य शब्दानुप्रासं प्रस्तौति— **शाब्दस्त्विति**। शब्दगतोऽयमनुप्रासः। ननु शब्दसाम्ये सत्यर्थैक्यात् पौनरुक्त्यं प्राप्तमित्यत उक्तं— तात्पर्यमात्रतो भेदे सतीति। तात्पर्यमात्रेति कथनान्नार्थभेदः। अर्थभेदे यमकत्वप्राप्तेः।

व्याचष्टे— **शब्दगत** इत्यादि। शब्दगत इति निरुक्त्या संज्ञा नियमिता। शब्दार्थयोरिति[2] यमकाद् व्यावृत्तिर्दर्शिता। अन्वयमात्रेति पौनरुक्त्यं परिहृतम्। लाटजनेत्यवैचित्र्यादसार्वजनीनता द्योतिता[3]। शब्दानुप्रास इति संज्ञा। इ(दं ? मम्) अनिपुणाः केचित् पदानुप्रास इत्याहुः, तद् दूषयिष्यत इत्यभिप्रायेणाह— **एष पदानुप्रास** इति ॥ ४ ॥

साहित्यचूडामणिः

एवं वार्णमुक्त्वा शाब्दमनुप्रासमाह— **शाब्दस्त्विति**।

**शब्दार्थयोरभेदे**ऽपि समयग्रहणादिना भेदाभावेऽपि पार्यन्तिकवाक्यार्थमात्रभेदादयमनुप्रासः शाब्दः, लाटदेशदृष्टत्वात् तत्समाख्या यथा विदर्भादिषु दृष्टतया रीतीनां वैदर्भ्यादिसमाख्या। तत्त्वतस्तु देशनिर्देशैर्न किञ्चिदुपक्रियते काव्यानाम्। यदाहोद्भटः—

“स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात्।
शब्दानां वा पदानां वा लाटानुप्रास इष्यते ॥”

इति। यच्च सूत्रं ‘तात्पर्यभेदवत् तु लाटानुप्रासः’ (सू० ८) इति। तत्रानुपलक्ष्यमाणसुप्तिङन्ताः शब्दाः, तेष्वेवोपलक्ष्यमाणेषु पदानि ॥ ४ ॥

---

१. ‘त्वाल्लाटा’ ख. पाठः. २. ‘रपीति’ ग. ङ. पाठः. ३. ‘ता। अ’ क. ख. घ. ङ. पाठः.

**पदानां सः**

सः लाटानुप्रासः । उदाहरणं —

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥

**पदस्यापि**

अपिशब्देन स इति समुच्चीयते । उदाहरणं —

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्वनुपुनः कलङ्कविकलो भवेत् ॥

सम्प्रदायप्रकाशिनी

**पदानामिति**।सङ्ख्याप्रधानेको[1]ऽयं विभक्त्यर्थः। स लाटानुप्रासो बहूनां पदानां साम्ये सम्भवति।

**यस्येति** । अत्र[2] द्वितीयचतुर्थपादयोः पदान्युद्देश्यविधेयभावविपर्यसनेन भिन्नतात्पर्याणि ।

एकस्याप्याह — प[3]दस्यापीति ।

अन्तरितं समुच्चे[4]यं स्मारयति — **अपिशब्देनेति** ।

**वदनमिति** । अत्र वदनमेव सुधाकरः, निष्कलङ्कः सुधाकरः क्वान्यत्रेति तात्पर्यभेदः । इत्थं पदनिबन्धनौ द्वौ भेदौ ।

साहित्यचूडामणिः

**पदानां स** इति । कदाचित् पदानां सः लाटानुप्रासः सम्भवी ।

**यस्येति** । अस्त्रीकस्य चन्द्रो दावानलः । सस्त्रीकस्य तु दावानलश्चन्द्र इत्यन्वयमात्रभेदादयमनुप्रासः प्रवर्तते ।

**पदस्यापीति** । न केवलं पदानामेव यावदेकस्यापि पदस्यायमनुप्रासः ।

**वदनमिति** । अत्र सुधाकरपदस्य कदाचिद् वदनसामानाधिकरण्याद् अन्यदा[6] कलङ्कवैकल्यानौचित्याच्चान्वयः ।

१. 'नोऽयं', २. 'स्य', ३. 'एकस्या' ङ. पाठः. ४. 'च्च' क, ग, घ, पाठः. ५. 'था', ६. 'दौ' घ. पाठः.

**वृत्तावन्यत्र तत्र वा ।**

**नाम्नः सवृत्त्यवृत्त्योश्च**

एकस्मिन् समासे, भिन्ने वा समासे, समासासमासयोर्वा नाम्नः प्रातिपदिकस्य, नतु पदस्य, सारूप्यम् । उदाहरणं —

---

सम्प्रदायप्रकाशिनी

अथ प्रातिपदिकनिबन्धना: — **वृत्तावन्यत्रेत्यादि** । तत्रान्यत्र वेति क्रमः । सोऽयं प्रातिपदिकसाम्यनिबन्धनो लाटानुप्रासः एकसमासगतत्वेन भिन्नसमासगतत्वेन समासासमासगतत्वेन च त्रिधा सम्भवति ।

तदेतद् व्याचष्टे—**एकस्मिन्नित्यादि** । **नतु पदस्येति** वदता पदानुप्रास इति व्यवहर्तवन्तो मन्दा इति सूचितम् । नच प्रातिपदिकनिबन्धनतायां पदानुप्रासः, अतः शब्दानुप्रास इत्येवं प्रेक्षावतां व्यवहारः, येन वर्णानुप्रासव्यावृत्तिरपि भवति, पदप्रातिपदिकनिबन्धनभेदद्वयोपसंग्रहोऽपि सम्पद्यते ।

साहित्यचूडामणि:

"लोचने तव चकोरलोचने! वारुणीमदविलासचारुणी ।"

इत्यादौ विभक्त्यादेरपौनरुक्त्येऽपि शब्दार्थपौनरुक्त्यमात्रेण लाटानुप्रासत्वम् । ननु

"त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।"

इत्यादावनन्वयेनास्य विषयापहारापत्तिः, अनेन वा तस्येति चेत् । न । अन्योन्यापेक्षशब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थितेः भिन्नविषयत्वात् ।

कारिकायां व्युत्क्रमेणोक्त क्रमेण व्याचष्टे — **एकस्मिन्निति** तत्रेत्यस्य टीका । भिन्न इत्यन्यत्रेत्यस्य । अर्थाद् वाकारस्यापि स्थानचलनम् । **प्रातिपदिकस्येति** । सुबन्तत्वे पदत्वम्, अन्यथा प्रातिपदिकत्वं सुपो लोपात् ।

---

१. 'अ' क. घ. पाठः. २. 'कनि' ग. ङ. पाठः. ३. 'ष' क. घ. पाठः. ४. 'हृरन्तो' ङ. पाठः. ५. 'तु प्रा' ख. ग., 'वधा प्रा' ङ. पाठः. ६. 'पि बहुतरश' ग. पाठः. ७. 'त् अ' घ. पाठः. ८. 'ब्दग' ग. पाठः.

सितकरकररुचिरविभा विभाकराकार! धरणिधव! कीर्तिः ।
पौरुषकमला कमला सा* च तवैवास्ति नान्यस्य ॥

तदेवं पञ्चधा मतः ॥ ५ ॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः ।
यमकं

सम्प्रदायप्रकाशिनी

सितकरेति । अत्र करकरेत्येकत्र समासे, रुचिरविभा विभाकरेति भिन्ने, पौरुषकमला कमलेति समासासमासयोः ।

प्रस्तावं निगमयति— तदेवमिति ॥ ५ ॥

अथ शब्दसाम्यप्रस्तावाद् यमकम्—अर्थे सतीत्यादि । अर्थभेदेन भिन्नानां शब्दानां पुनःश्रुतिर्यमकम् । अर्थभिन्नानामिति लाटानुप्रासो व्यावर्तितः । यम्यमानस्यांशस्य क्वचिदनर्थकत्वाल्लक्षणमव्यापकं

साहित्यचूडामणिः

सितेति । अत्र करशब्दयोरेकत्र समासे साहश्यम् । विभाकराकारेत्यामन्त्रितम् । विभाशब्दयोर्भिन्ने समासे साहश्यम् । पौरुषकमला पुरुषकारसम्पत् । कमला सा च छत्रचामरादिचिह्ना प्रसिद्धा लक्ष्मीश्च । कमलाशब्दयोः प्रथमः समासे, अन्यस्त्वसमास इति त्रैविध्यम् ।

पञ्चधेति । पदविषयस्य द्वैविध्यस्योक्तत्वात् ॥ ५ ॥

अथ यमकं लक्षयति— अर्थ इति । अर्थभिन्नानां भिन्नार्थानाम्, आहिताग्न्यादिपाठात् । यदाह भामहः—

"तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
वर्णानां यः पुनर्वादो यमकं तन्निगद्यते ॥"

१. 'त्वादिलक्ष' ग. पाठः.

* 'पि' इति मूलकोशपाठः ।

'समरसमरसोऽयमि'त्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुमित्यर्थे सतीत्युक्तम्। सेति, सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता।

---

सम्प्रदायप्रकाशिनी

स्यात्। अत उक्तम्— अर्थे सतीति। यदा वर्णविन्यासवैपरीत्येऽपि पुनःश्रुतित्वं भवति तदातिव्याप्तिर्मा भूदिति सेत्युक्तम्।

तदेतद् व्याचष्टे— समरसमरसेत्यादि। अत्रहि समरसमरेति यमकम्। तत्र समरशब्दोऽर्थवान्। द्वितीया तु समरश्रुतिर्नार्थवती, समरस इत्युत्तरवर्णसहितस्यैवार्थवत्त्वात्। एवंविधे विषयेऽर्थभिन्नानामितीयदेव यदि लक्षणं क्रियेत, तदा स्यादव्याप्तिः। अतोऽर्थे सतीत्युक्तमित्यर्थः। सरो रस इत्यादौ तु भिन्नार्थत्वेऽपि पुनःश्रुतिसद्भावेऽपि नास्ति यमकत्वं, पुनःश्रुतेर्वैरूप्यात्। अत उक्तं— सेति। सा तेनैव क्रमेण स्थिता।

साहित्यचूडामणिः

इति। स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम्' (अल०-सू०-६) इति सूत्रम्।

नन्वर्थभिन्नानामित्येतावत्युक्ते 'समरसमरसोऽयमि'त्यादौ यमकत्वं न स्यादित्यव्याप्तिर्लक्षणदोषः येन प्राथमिकस्यैव समरशब्दस्यार्थवत्त्वं न द्वितीयस्य, सम एकरूपो रसः प्रीतिर्यस्येति सकारावधौ तस्यार्थवत्त्वाभावात्। उभयोरर्थवत्त्वाभावे कथं भिन्नार्थत्वमित्याशङ्क्याह— अर्थे सतीति। सरामि तां स्मरामितामित्यादिवद् यत्र द्वयोरर्थवत्ता तत्र मुख्यं नार्थवत्त्वम्। तेनैव क्रमेणेति। येनैव क्रमेण पूर्वश्रुतिः, तेनैव पुनःश्रुतिरिति प्रकाशयितुं सत्यनुभूतार्थविषयस्य तद्वृत्तस्य प्रयोगः। अन्यथा पिकः कपिः जारा राजा रसः सरः हरः रह इत्यादावपि यमकत्वप्रसङ्गः, पुनः श्रुतित्वाविशेषात्। एतेन,

"आवृत्तिमेव संघातगोचरां यमकं विदुः।"

इत्यादि प्रत्युक्तम्।

---

१. 'स्ये पु' क. पाठः. २. 'रसेति', ३. 'क्रम्।' ङ. पाठः. ४. 'वै', ५. 'क्रः न पु' ग. पाठः.

**पादतद्भागवृत्ति तद् यात्यनेकताम् ॥ ६ ॥**

प्रथमो द्वितीयादौ, द्वितीयस्तृतीयादौ, तृतीयश्चतुर्थे, प्रथमास्त्रिष्वपीति सप्त । प्रथमो द्वितीये तृतीयश्चतुर्थे इति, प्रथमश्चतुर्थे द्वितीयस्तृतीय इति द्वे । तदेवं पादानां नवभेदत्वम् । अर्धावृत्तिः श्लोकावृत्तिश्चेति[1] द्वे । द्विधा विभक्ते पादे

सम्प्रदायप्रकाशिनी

एवं सामान्यलक्षणमुक्त्वा विशेषानाह — **पादतद्भागेत्यादि** । तद् यमकं पादवृत्ति पादभागवृत्ति चेति द्विधाभूय पुनरवान्तरविशेषवैचित्र्येण वैविध्यं भजते ।

तत्र तावत् पादवृत्ति सप्तधा सम्भवतीति दर्शयति — **प्रथमो द्वितीयादावित्यादि** । प्रथमः पादो द्वितीयादिषु त्रिषु यम्यत इति त्रयो भेदाः । तत्र[2] यदा प्रथमो द्वितीये यम्यते तदामुखं नाम यमकम् । यदा तृतीये तदा सन्दंशः । चतुर्थे आवृत्तिः । यदा[3] द्वितीयस्तृतीये तदा गर्भः । चतुर्थे सन्दष्टकम् । यदा[4] तृतीयश्चतुर्थे तदा पुच्छः । यदा तु प्रथमस्त्रिष्वपि तदा पङ्क्तिः । त एते पादावृत्तिरूपाः सप्त । अथ द्वौ[5] सङ्कीर्णावाह — **प्रथमो द्वितीये तृतीय इत्यादि** । यदा तु प्रथमतृतीययोः परिपाट्या द्वितीयचतुर्थयोर्यमनं तदा युग्मकम् । यदा तु प्रथमद्वितीययोश्चतुर्थतृतीयाभ्यां तदा परिवृत्तिः । इमौ संकीर्णौ । इत्थं नव । अर्धा-

साहित्यचूडामणिः

अस्य च विभागमनन्तप्रकारमासूत्रयितुमाह — पादेति । प्रथमः पादो द्वितीये तृतीये चतुर्थे च यम्यते । एवं द्वितीयस्तृतीये चतुर्थे च, तृतीयश्चतुर्थे । तथा प्रथमस्त्रिष्वपि द्वितीयतृतीयचतुर्थेषु यौगपद्येन यम्यते ।

सप्तेति । प्रथमस्य त्रयः, द्वितीयस्य द्वौ, तृतीयस्यैकः, प्रथमस्य यौगपद्यादेक इति । द्विधेति । पादचतुष्कस्य प्रत्येकं द्वैधीकरणे । पूर्ववत् पादभेदवत् । आदिपदैस्तत्प्रकारबाहुल्यमुन्मील्यते । प्रथमस्य पादस्य प्राथमिकः खण्डः

---

१. 'तिद्वेधा' ख. पाठः. २. 'या' क. ग. घ. ङ. पाठः. ३. 'त्र प्र' क. ख. ग. घ. पाठः. ४. 'या' क. ग. घ. ङ. पाठः. ५. 'द्वयं' क. घ. पाठः. ६. 'दा स द्वि' क. घ., 'दा तद्वितीे' ख. पाठः. ७. 'दा तु तृ' क. ङ. पाठः. ८. 'यचतुर्थौ त', ९. 'द्वे' ङ. पाठः. १०. 'द्वे' घ. पाठः.

प्रथमादिपादादिभागः पूर्ववद् द्वितीयादिपादादिभागेषु, अ-न्तभागोऽन्तभागेष्विति विंशतिर्भेदाः । श्लोकान्तरे हि न भागावृत्तिः। त्रिखण्डे त्रिंशत् । चतुःखण्डे चत्वारिंशत् । प्र-थमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगते आद्यार्धा-दिभागे यम्यत इत्याद्यन्वर्थतानुसारेणानेकभेदम् । अन्ता-दिकम्, आद्यन्तिकं, तत्समुच्चयः, मध्यादिकम्, आदि-

सम्प्रदायप्रकाशिनी

वृत्तिः श्लोकावृत्तिश्चेत्येकादश । अथ पादभागवृत्तिविशेषान् विवेच-यति — द्विधा विभक्त इत्यादि । यदा पादानां द्विभागक्रिया तदा प्रथमो भागः पादावृत्तिन्यायेन यम्यत इति नवविधः, अर्धयो-र्भागस्यैकरूप्यमनेऽर्धावृत्तिन्यायेनैक इति भागनिबन्धनः प्रतिभागं दशविधः। इत्थं च सति द्विधा विभक्तेषु पादेषु विंशतिः। ननु श्लोकावृ-त्तावपि किं न भागधिबन्धनो भेद इत्यत आह—श्लोकान्तरे हीति। इत्थं त्रिखण्डे त्रिंशत् । चतुःखण्डे चत्वारिंशत् । एते शुद्धाः । अथ भागनिबन्धनाः सङ्कीर्णाः — प्रथमपादादीति । यदा तु प्रथमस्य पादस्यान्त्यार्धरूपो भागो द्वितीयस्याद्यार्धरूपे यम्यते तदान्त आदौ यम्यत इत्यन्वर्थाश्रयणादन्तादिकम् । एवमादिभागस्यान्तभागेनाद्य-न्तिकम् । यदानयोरर्धद्वये समावेशस्तदा द्विधा समुच्चयः । एवं पाद-मध्यभागस्य पादान्तरादिभागैर्यमने मध्यादिकम् । आदिभागस्य

साहित्यचूडामणिः

क्रमादुपरितनपादत्रयादिखण्डेषु यम्यत इत्यादि । श्लोकान्तरे भागावृत्तिर्नास्ति, चमत्कारविशेषाभावात्, पादान्तरे पुनरस्त्येवेति भावः । अन्वर्थतेति । गुण-नार्थो हि यमिः, यथा यमौ कुशलवाविति । अन्तादिकमिति । पूर्वपादान्तो-त्तरपादादिभागयोर्यमनात् । तद्विपर्ययादाद्यन्तिकम् । एवमन्यत्रापि । गङ्गः शरीरे

१. 'दग' ख. पाठः. २. 'द्य' क. ख. पाठः. ३. 'त्यन्व' ख, पाठः. ४. 'प्य' ख. ग. पाठः. ५. 'ति विभा' क. पाठः. ६. 'दियमकम्', ७. 'द्यन्तयमकम्', ८. 'न्त' घ. पाठः. ९. 'र' ग. पाठः.

मध्यम्, अन्तमध्यं, मध्यान्तकं, तेषां समुच्चयोः, तस्मिन्नेव पादे आद्यादि[†] भागानां मध्यादिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम्। तदेतत् काव्यगडुभूतमिति नास्य भेदलक्षणं कृतम्। दिङ्मात्रं चोदाह्रियते —

सम्प्रदायप्रकाशिनी

मध्यभागैरादिमध्यम्। अन्तभागस्य मध्यभागैः अन्तमध्यम्। मध्यभागस्यान्तभागैर्मध्यान्तकम्। प्रतिरूपं द्वैरूप्ये चत्वारः समुच्चयाः। त एते पादभागानां पादान्तरभागापेक्षया भेदाः। अथैकस्मिन्नेव पादे वैचित्र्यमाह— तस्मिन्नेवेत्यादि। यदा त्वेकत्र पादे आदिमध्यान्तभागानां नियतानियतक्रमतया यमनं, तदेतद् यमकं प्रभूततमभेदम्। तथाहि— पादावृत्तिनिबन्धनाः प्रभूतमाः। पादभागानां पादान्तरभागनिबन्धनाः प्रभूततराः। एकैकत्र तु पादे भागानां मिथो-यमननिबन्धनास्तु प्रभूततमा एव। तर्हि को लक्षणाकरणहेतुरित्यत आह—तदेतत् काव्येत्यादिना। गडुः श्वयथुः। दिङ्मात्रं चेति। यस्यापि वृत्तौ प्रस्तावः कृतस्तदपि साकल्येन नोदाहियत इति भावः।

साहित्यचूडामणिः

मेदोग्रन्थिः। यदाह —

"यमकादिनिबन्धेषु पृथग् यत्नोऽस्य जायते।
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते॥
रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः॥"

इति।

१. 'ध्यकम्', २. 'यः', ३. 'त' ख. पाठः. ४. 'ह—'एकस्मि' ङ. पाठः. ५. 'त्रादि' क. घ. पाठः. ६. 'दे' क. ख. ग. ङ. पाठः. ७. 'विधावृत्ति' क. घ. पाठः. ८. 'त्र पा' क. पाठः. ९. 'तु' घ. पाठः. १०. 'द्द' ग. पाठः.

* 'न्ति' इति, † 'दिभागो म' इति च मूलकोशपाठः.

सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जयेँ ॥

विनायमेनो नयतासुखादिना विना यमेनोनयता सुखादिना ।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥

सम्प्रदायप्रकाशिनी

सन्नारीति । साध्वीं नारीं बिभर्ति पुष्णाति या उमा गौरी तां यातीति सन्नारीभरणोमायः तं विधुशेखरमाराध्य सन्ना व्यापादिताः अरीणामिभरणा गजयुद्धानि येन स त्वम् अमायो मायारहितः पृथिवीं जयेँ । अयं प्रथमपादस्य तृतीये यमनलक्षणः सन्दंशः । षडन्ये शुद्धाः पादावृत्तिभेदा द्रष्टव्याः ।

विनायमेनँ इति । विना ऋते । अयमसौ । एनः अपराधम् । नयता अपनयता । असुखादिना प्राणभक्षकेण । विना पुंविहगकल्पैः यमेन अन्तकेन । ऊनयता ऊनं कुर्वता । सुखादिना सुखादनशीलेन । महाजनः सर्व एवायं लोकः । अदीयत अखण्ड्यत । मानसान्मनसः । अरं क्षिप्रम् । महाजनोदी महानुत्सवान् अजन्ति

साहित्यचूडामणिः

तत्र प्रथमतृतीयपादयोर्यथा — सन्नारीति । सतीर्नारीः । बिभ्राणामुमां याति अयत इति वा सन्नारीभरणोमायः तं विधुशेखरमाराध्य सन्नारीभरणः नष्टशत्रुगजसमर इति ।

प्रथमो द्वितीये तृतीयश्चतुर्थ इत्येतद् यथा — विनेति । मरणाद् बिभ्यतः कस्यचिदुक्तिः । अयमपराधं विना नयता मारयता असुखादिना प्राणानिन्द्रियाणि च खादितुं शीलवता । विनेति । विशब्दो वैफल्ये, निष्फलो ना भवनँ यमेन कृतान्तेन ऊनयता ऊनं कुर्वता सुखमानन्दमत्ति नाशयतीति सुखादित्वात् सुखादिना सम्मर्द प्रमुखे ऊनयता तेनायं महाजनः अदीयत अखण्ड्यत मानसात् चित्ताद् अरं झटिति महताम् अजानां क्षेपाणामुपक्षेपाणां[10]

१. 'यः' । ख. पाठः. २. 'यः' ङ. पाठः. ३. 'नेति' क. ख. ग. पाठः. ४. 'ल्पा', ५. 'शशिशे', ६. 'मनुर' घ. पाठः. ७. 'त', ८. 'अवा ख', ९. 'श्रा' ग. पाठः. १०. 'क्षणानां नो' घ. पाठः.

स त्वारं भरतोऽवश्यमबलं विततारवम्।
सर्वदा रणमानैषीदवानलसमस्थितः॥

सत्वारम्भरतोऽवश्यमवलम्बिततारवम्।
सर्वदारणमानैषी दवानलसमस्थितः॥

---

सम्प्रदायप्रकाशिनी

भक्षयन्ति ये[1] महाजाः खलाः तेषां नोदनशीलः। यतमानसादरं यतमानानां सादं राति ददाति यत् कर्मेति क्रियाविशेषणमिदम्। महाजनोदी अयं महाजनः एनो विना नयता असुखादिना ऊनयता सुखादिना यतमानसादरं यथा भवति तथा अरं मानसाद् विन्नकल्पोऽदीयत। इदं प्रथमतृतीययोः द्वितीयचतुर्थाभ्यां युग्मकम्। एवं परिवृत्तिर्ज्ञेया।

अथ श्लोकावृत्तिः — सत्वारम्भेति। युगलकम्। स तु वर्ण्यमानो नायकस्तु आरं शत्रुसमूहं भरतः भोरात् अवश्यमवशवर्तिनम् अबलं बलरहितं विततारवं दीर्घस्वनं सर्वदा अनिशं रणं युद्धम् आनैषीत् अगमयत् अवान् अगच्छन् अलसं सतन्द्रम् अस्थितः अस्थीनि तस्यतीति अस्थीं खण्डयितेत्येकदा श्लोकार्थः। अन्यदा च सत्त्वारम्भरतः सत्त्वगुणोपलक्षितेष्वारम्भेषु अनुरक्तः अवश्यं सर्वथा अवलम्बिततारवं परिगृहीततरुविकारभूतवल्कलं सर्वदारणमानैषी सर्वेषां

साहित्यचूडामणिः

नोदी[4] मरणव्यतिरिक्तदुरितपरिहारक्षमः। यतमानतया यत्नयोगितया सादरमास्थासहितं कृत्वेति।

श्लोकावृत्तिर्यथा — सत्त्वेति। सत्त्वप्रधानेष्वारम्भेषु कार्येषु निरतः अवश्यं सर्वथा अवलं गजतुरगादिशून्यं विततारवं विस्तृताक्रोशं सर्वेषां दारणो

---

१. 'ये ते म' ङ. पाठः. २. 'भ' ख. ग. ङ. पाठः. ३. 'स्थ्नां ख ण्डयतीत्य' ङ. पाठः. ४. 'दी र' ग. पाठः.

अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥

सम्प्रदायप्रकाशिनी

दारणानां मानं मान्यतामिच्छन् सः दवानलसमस्थितः दावाग्निसदृश-स्थितिकः । अलसमर्मवान् अस्थितः अवश्यं सत्त्वारम्भरतः सर्वदारण-मानैषी दवानलसमस्थितः स तु अवश्यम् अवलम्बिततारवम् आरं सर्वदा भरतो रणमानैषीत् । एवमर्धावृत्तिरुदाहर्तव्या ।

अथ भागावृत्तिनिबन्धनम्— अनन्तमहिमेति । वेधा न वेद यां यां ब्रह्मापि न वेद या च मानवे प्रणते दयां भजते । इदं द्वितीय-चतुर्थयोः सन्दष्टकम् ।

साहित्यचूडामणिः

विनाशनो यो मानो गर्वः तमेषितुं शीलवान् दवानलसमः दावपावकसदृशः स्थितः स्थास्नुरित्येकः श्लोकः । अन्यस्तु—स त्विति वर्णनीयः आरम् अरीणां समूहं भरतः सन्नाहात् अवश्यम् अविधेयं सत् अवलम्बितानि वस्त्रतया स्वीकृतानि तारवाणि वल्कलानि येन तत् सर्वदा नित्यं रणं समरम् आनैषीदा-नीतवान् अवान् अगच्छन् । वातिर्गतिकर्मा । अलसमित्यालस्यविशिष्टं अग-च्छन् अस्थीनि तस्यतीत्यस्थितः । सुबन्तत्वेऽपि धातुत्वाद् दीर्घाभावः । सात्त्विकोद्योगनिरतः सर्वविनाशनाहङ्कारकौतूहली दवाग्निसदृशः शीघ्रगामी मर्मभेदी स वर्णनीयो नृपतिः अविधेयं फलशून्यं विकटाक्रन्दं परिगृहीत-वल्कलमरिसमूहं सर्वकालं रणमानीतवान् । इति श्लोकद्वयार्थः ।

अथ पादखण्डयमकेषु द्वितीयपादान्तभागस्य तुरीयपादान्तभागे सा-रूप्यं यथा — अनन्तेति । यां वेधा न वेद अद्यापि ब्रह्मा न जानाति, या च प्रणते मानवे मनुष्ये दयां कृपां कुरुते ।

१. 'दधते' ख. पाठः. २. 'दाराणां मा', ३. 'अनल' क. घ. ङ. पाठः. ४. 'मं' क. घ. ङ. पाठः. ५. 'द्दवान् अ', ६. 'या कृ', ७. 'हं सर्वदा स' ङ. पाठः.

यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवेहितां शिवे हितां स्मरामितां स्मरामि ताम् ॥

सरस्वति! प्रसादं मे स्थिते! चित्तसरस्वति ।
सर स्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति! ॥

---

सम्प्रदायप्रकाशिनी

यदानत इति । यदानतः यस्यै प्रणतः अयदानतः शुभावहविधिदानात् नयात्ययं विनयात्ययं न याति न गच्छति अयमसौ । शिवेहितां कल्याणसमीहितां शिवे शङ्करे हिताम् आप्तां स्मरामितां कामेनापरिच्छिन्नां स्मरामि अनुचिन्तयामि तां गौरीम् । अयमर्धावृत्तिस्थानीयो दशमो भागवृत्तिभेदः समुद्गकाख्यः ।

अथ भागावृत्तिषु सङ्कीर्णाः[1] । सरस्वति![2] वागीश्वरि![3] चित्तसरस्वति हृत्समुद्रे स्थिते! मम प्रसादं कुरु । सर उपगच्छ । कथं, सु सुष्ठु अति अतिशयेन च । क्षेत्रकुरुक्षेत्रसरस्वति! शरीररूपे कुरुक्षेत्रे सरस्वत्याख्यसरिद्भूते! ।

साहित्यचूडामणिः

अथ सर्वपादेष्वादिभागान्त्यभागेषु यमकं यथा — यदानत इति । यस्यै प्रणतः अयः शुभावहो विधिः तस्य वितरणात् नयात्ययं नीतिव्यत्यासं न याति न प्राप्नोति अयं पुमान्, शिवेहितां कल्याणचेष्टां शिवे परमेश्वरेऽनुकूलां स्मरामिताम् अमितस्मराम् „अलौकिकशृङ्गारां„ स्मरामि चिन्तयामि तां देवीम् ।

अथ सङ्कीर्णभेदो यथा —सरस्वतीति । सरस्वति! वाग्वादिनि! चित्तसरस्वति हृदयसमुद्रे स्थिते! क्षेत्रं शरीरं तदेव कुरुक्षेत्रं समन्तपञ्चकप्रदेशः तस्य सरस्वति! नदीविशेषभूते! मे प्रसादं कुरु । ततश्च सर प्रसर स्वति अविक्रुततरम् । उत्कर्षार्थम् उपसर्गद्वयप्रयोगः ।

अर्धद्वयेऽपि प्रथमादिभागो द्वितीयान्तभागे, प्रथमान्तभागो द्वितीयादि-

---

१. 'र्णः' ङ. पाठः. २. 'ती', ३ 'री', ४. 'चि' क. घ. पाठः.

ससार साकं दर्पेण कन्दर्पेण ससारसा ।
शरं नवाना विभ्राणा नाविभ्राणा शरन्नवा ॥
मधुपराजिपराजितमानिनीजनमनःसुमनःसुरभिश्रियम् ।
अभृत वारितवारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत् ॥

सम्प्रदायप्रकाशिनी

**ससारेति** । ससार जगाम । साकं सह । दर्पेण कन्दर्पेण च । ससारसा सारससहिता । शरं नलम् । नवानाः नूतनशकटा । बिभ्राणा दधती । नाविभ्राणा अवीनाम् उरभ्राणां भ्राणः शब्दो न विद्यते यस्यां सा । ईदृशी शरद् ऋतुविशेषः ससारेति समन्वयः ।

अथैकस्मिन् पादे— मधुपराजीति । भ्रमरपङ्क्त्या पराजितं मानिनीजनस्य मनो याभिस्तासां सुमनसां पुष्पाणां सुरभिश्रियं सौरभ्यलक्ष्मीं जगदिदं लोकोऽयमधारयत् । कीदृग् जगत्, वारितवारिजविप्लवं निवारितपद्मोपप्लवं, तथा स्फुटितताम्रतताम्रवणं विकसितारुणविततचूतारामं च ।

साहित्यचूडामणिः

भागे यम्यते । यथा — ससारेति । (ससार) प्रससार । शरद् ऋतुविशेषः । दर्पेण मानेन, कन्दर्पेण मन्मथेन च साकं समम् । ससारसा सारसाख्यविहङ्गमसहिता । नवानाः नवं कर्दमशान्त्या नूतनं शकटं यस्याम् । शरं काशं बिभ्राणा धारयन्ती । वयः पक्षिणस्तेषां भ्राणः शब्दः स न विद्यते यस्याम् इत्यविभ्राणा तादृशी न भवति । पुनर्निषेधो विधौ विश्राम्यति । नवेति । ससार वा नवा इति सन्देहः ।

पादानां चतुष्खण्डतायां सर्वत्र द्वितीयखण्डानां तृतीयखण्डे यमनं यथा —मधुपेति । मधुपानां भृङ्गाणां राज्या पङ्क्त्या पराजितं कदर्थितं मानिनीजनमनः मनस्विनीलोकचित्तं याभिस्ताभिः सुमनोभिः पुष्पैः सुरभि सुगन्धि जगद् । वारितवारिजविप्लवं वारितो निरस्तः वारिजानां विप्लवो विनाशो येन, स्फुटितानि विकसितानि ताम्राणि शोणानि ततानि विस्तीर्णानि आम्रवणानि चूतकाननानि यत्र तादृक्षं जगत् श्रियमभृत शोभामवहत् ॥ ६ ॥

१. 'नां बराणां' क. ग. घ. ङ. पाठः. २. ''शं' ख. ग. ङ. पाठः. ३,, ४. 'ऽत्राः ।' ग. घ. पाठः. ५. 'तुःखण्ड', ६. 'तथा स' ग. पाठः. ७. 'रि' घ.पाठः.

एवं वैचित्र्यसहस्रैः स्थितमन्यदप्युन्नेयम् ॥ ६ ॥

**वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः ।**

**श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ७ ॥**

'अर्थभेदेन शब्दभेद' इति दर्शने 'काव्यमार्गे स्वरो न गण्यते' इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यद्

सम्प्रदायप्रकाशिनी

तदेतत् कवेः शक्तिमत्त्वमात्रप्रकाशनफलं, नतु सहृदयहृदया-वर्जकमित्यभिप्रायेणोपसंहरति — एवं वैचित्र्येत्यादि ॥ ६ ॥

अथ शब्दविच्छित्तिप्रस्तावाच्छ्लेषः — वाच्यभेदेनेत्यादि । 'प्रत्यर्थं शब्दनिवेश(न ? ना)' इति न्यायाद् अर्थभेदेन भिन्नाः शब्दाः यत्रोच्चारणे यद् भिन्नं स्वरूपं निह्नुवते स श्लेषालङ्कारः ।

व्याचष्टे — अर्थभेदेनेत्यादि । ननु एकवृन्तगतफलद्वयनयेन एक एव शब्दो नानार्थप्रतिपादने प्रभवतीति कथं वाच्यभेदात् शब्द-भेदः, भेदाभ्युपगमेऽपि अर्थभेदात् स्वरसन्निवेशो भिन्न इति कथं युगपदुच्चारणार्हतेत्याशङ्क्यार्थभेदेनेत्याद्युक्तम् । यत् तावद् 'अर्थभे-देन शब्दभेद' इति दर्शनं तदाश्रयणे शब्दभेदः । स्वरभेदः काव्यमार्गे

साहित्यचूडामणिः

इदानीं श्लेषमुन्मेषयति — वाच्येति । अर्थभेदेन स्वयमपि भिन्नाः शब्दा युगपत् पृथक् प्रयासशून्यं भाषणमुच्चारणं स्पृशन्ति ।

नन्वेकरूपाणामपि शब्दानामनेकार्थाभिधानसामर्थ्यमङ्गीचक्रे कैश्चित् । तत् कथं श्लेषशब्दार्थस्य शब्दद्वयनिष्ठत्ववैयात्यमित्याशङ्क्याह — अर्थेति । अर्थभेदेन हेतुना शब्दानामपि भेद इति दर्शने श्लेषोऽयमलङ्कारः, नान्यत्रानुप-पत्तिशङ्का । नन्विन्द्रशत्रुप्रभृतौ उच्चारणवेलायां कदाचिदुदात्तस्वरः, अन्यदान्य इति वेदे स्वरस्य भेद(व)त्त्वाङ्गीकारे शब्दैकत्वपारिशेष्येण श्लिष्यमाणशब्द-द्वयासिद्धेरयं न सङ्घटत इति चेत् तत्राह — काव्यमार्ग इति । शब्दार्थं

१. 'दया' क. घ. पाठः. २. 'त' ग. घ. ङ. पाठः. ३. 'नो भ', ४. 'त-'ह्यभ्यु', ५. 'रनिवे' ङ. पाठः. ६. 'नम' घ. पाठः. ७. 'ङ्क्या । न' ग. पाठः.

युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः। स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा[2]। क्रमेणोदाहरणम्—

अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको गतवयाः।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी॥

सम्प्रदायप्रकाशिनी

न गण्यत इति न्यायबलाच्च[3] युगपदुच्चारणोपपत्तिः। अतो भिन्नं स्वरूपं यदपह्नुवते[4] स श्लेषालङ्कारः। अक्षरादीनि विभज्याह— स च वर्णपदेत्यादि। एभिरष्टधा वर्णश्लेषः पदश्लेष इत्यादि।

क्रमेणोदाहरति—अलङ्कार इत्यादिना। शङ्काकरम् एतद्योगी किमभिगम्यो न वेति शङ्काकृदित्यर्थः। विधौ कर्मणि। वक्रे अभिलषितार्थपरिपन्थिनि। मूर्ध्नि स्थितवति परिपाकोन्मुखतया प्रत्यासन्ने। अन्यदा विधौ चन्द्रे। अत्र विधिविधुशब्दयोः सप्तमीविभक्तावन्त्यवर्णयोः श्लेषः।

साहित्यचूडामणिः

निश्चिनोति — भिन्नमिति। क्षीरनीरन्यायेन[5] सम्भवतोऽपि भेदस्यापलापः श्लेषः। अथैनं रुद्रटदृष्ट्या विभजते — स इति। वर्णादीनां भेदादष्टविधः।

अलङ्कार इति। विधौ वक्रे प्रतिकूलस्वभावे विधातरि मूर्ध्नि स्थितवतीति लोकोक्तिः। तत्त्वतस्तु विधौ बालचन्द्रे कुटिलाकारे मौलौ स्थितवतीति। अत्र विधिर्विधुरिति द्वयोः श्लेषः, विधाविति यौगपद्येनोक्तत्वात्।

१. 'स च', २. 'धा। उदा' क. पाठः. ३. 'दु' क. घ. पाठः. ४. 'ह्नुते' ग. पाठः ५. 'नीरक्षीरन्या' घ. पाठः.

पृथुकार्तस्वरपात्रं भूषितनिश्शेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥

सम्प्रदायप्रकाशिनी

**पृथुकेति** । व्याख्यातं प्राक् । अत्र पृथुकार्तस्वरमिति पृथुकानामार्तस्वर इति पदानाम् ।

**भक्तिप्रह्वेति** । भक्तिप्रह्वानां विलोकने प्रणययुक्ते इति नेत्रापेक्षया नपुंसकलिङ्गद्विवचनं, प्रणययुक्तेति तन्वपेक्षया स्त्रीलिङ्गैकवचनम् । एवमुत्तरत्रापि । नीते हितप्राप्तये, नीता ईहितप्राप्तये इति च । निधी रसिकतां, निधिः रसिकतामिति च सन्धेरैकरूप्यम् । कुरुतामिति नेत्रापेक्षया परस्मैपदद्विवचनं, तन्वपेक्षयात्मनेपदैकवचनम् । कर्त्रभिप्रायत्वं वैवक्षिकम् । तनुर्वेति वाशब्दः समुच्चये, नतु विकल्पे । नह्यन्यतरतोऽभिमतार्थमाशास्ते, अपितु प्रतिपत्तिदार्ढ्येनोभयतोऽपि । अत्र लिङ्गश्लेषः स्फुटः ।

साहित्यचूडामणिः

**पृथुकेति** । व्याख्यातम् । पृथुपदविशिष्टकार्तस्वरपात्रस्य, पृथुकशब्द(स्य ?)विशिष्टार्तस्वरस्य च पदयोः श्लेषः । एवमुत्तरत्रापि ।

**भक्तीति** । विलोकनं प्रति नेत्रपक्षे भक्तिप्रह्वाः कर्मभूताः तनुपक्षे तु कर्तारः । नीलोत्पलस्पर्धित्वं सन्निवेशादिवैशिष्ट्येन, श्यामलिममात्रेण च । नपुंसकपक्षे हितप्राप्तये अनुकूलार्थसिद्ध्यै, अन्यथा पुनरीहितस्याभिलषितस्य प्राप्तये । महानिधी रसिकतामित्यत्र तनुविशेषणैकवचनत्वे 'ढ्रलोपे —' (६-३-१११) इति दीर्घः । कुरुतामिति लोटि परस्मैपदे द्विवचनम्, आत्मनेपदे पुनरेकवचनम् । वाकारः समुच्चये ।

१ 'नत्वं', २. 'त' ङ. पाठः. ३. 'पीति ।' घ. पाठः.

एष वचनश्लेषोऽपि ।

महदे सुरसंधम्मे तमवसमासंगमागमाहरणे ।
हरबहु! सरणं तं चित्तमोहमवसरउ मे सहसा ॥

सम्प्रदायप्रकाशिनी

लाघवाय श्लेषान्तरमप्युदाहृतमित्याह— एष वचनेति । नानयोर्लिङ्गवचनयोर्नित्यसंसृष्टता, विविक्तविषयतायाः सुलभत्वात् ।

महदे इति ।

मह्यं देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः ।
हरवधु! शरणं त्वं चित्तमँओघोऽपसरतु मे सहसा ॥

पुल्लिङ्गानामपि प्राकृते क्वचिन्नपुंसकलिङ्गत्वमभ्यनुज्ञायते । तेन चित्तमोहमिति नपुंसकता । भो हरवधु! मह्यं धर्मे रसं देहि । तमोवशामविवेकपरतन्त्रामाशां लिप्सां गमागमात् प्रवृत्तिपौनःपुन्यात् हर अपनय, नः निराशान् कुर्वित्यर्थः । त्वं शरणम् । सहसा सद्यः मे चित्तेमओघः चिदावरणानां तमसां प्रवाहोऽपसरतु । संस्कृतापेक्षया तु महदे! उत्सवदे! सुरसन्धं येन सुरैः सन्धानं दैवानुकूल्यं, तम् अव रक्ष । समासङ्गम्

साहित्यचूडामणिः

इदमेव वचनश्लेष इत्याह— एष इति । स च नेत्रे तनुर्वेति स्फुटं प्रकाशते ।

"प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
मुक्तात्मानः शिवं नेमिरन्येऽपि ददतां जिनाः ॥"

इत्यादि केवलो वचनश्लेष उदाहार्यः ।

महदे इति । हे उमे! गौरि! महदे उत्सवदे । आगमानामाम्नायानामाहरणमानयनं यया । मे मम सुरसन्ध सुराणां देवानां सन्धेव सन्धा प्रतिज्ञा यत्र समासङ्गो भक्तिः तम् अव पालय । किञ्च बहुसरणमनेकप्रसरणं चित्तमोहं हृदयकालुष्यम् अवसरे तदुचिते काले हर क्षपयेति संस्कृतम् । प्राकृतं तु

मम दत्स्व रसं धर्मे तमोवशामाशां गमागमाद्धरैताम् ।
हरवधु! शरणं त्वं चित्तमो(हं! हः) अपसरतु मे सहसा ॥

१. 'मयोघो' क. घ., 'मोहोऽप' ख. पाठः. २. 'त्तमयोघः' क., 'त्तमोहः अप' ख. ङ., 'त्तमोहं चि' ङ. पाठः. ३. 'म', ४. 'ताः' घ. पाठः.

अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥

रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्वसम्पत्सहस्रम् ।

सम्प्रदायप्रकाशिनी

आसक्त्यतिशयम् । आगमाहरणे शास्त्राणां स्वीकरणे । हर अपनय । बहुसरणं विविधसंसारयोगिनम् । तमनुभवैकगोचरं[1] दुःखदायिनम् । चित्तमोहं मनोभ्रमम् । अवसरे यथोचितकाले । उमे भवानि । सहसा बलेन । भो महदे उमे! आगमाहरणे सुरसन्धं मे समासङ्गमव । बहु-सरणं तं[2] चित्तमोहमवसरे सहसा हर ।

अयं सर्वाणीति । हृदि वक्ष्यति धारयिष्यति, ज्ञेषु विद्वत्सु वक्ष्यति कथयिष्यतीति लृटि वहिवच्योः प्रकृतेरैकरूप्यम् । अमित्राणां सामर्थ्यं कृन्तति, मित्राणां सामर्थ्यं करोति चेति सामर्थ्यकृत् । अत्र कृन्ततिकरोत्योः क्विपि सारूप्यम् । इत्थं तिङ्सुप्प्रकृत्यपेक्षया प्रकृति-श्लेषो द्विधा[4] दर्शितः ।

रजनिरमणेति । प्रथमार्धं क्रियाविशेषणम् । स्यामित्येकदोत्तम-पुरुषः । अन्यदा स्यादिति प्रथमपुरुषः । नन्दितेत्येकदा तृन्, आनन्द-

साहित्यचूडामणिः

इति । हे हरवधु! त्वं मे शरणम् । मम धर्मे रसं प्रीतिं दत्त्व वितर । गमागमात् संसारात् तमोगुणाधीनामिच्छां हर अपनय । चित्तस्य मोहः सहसा अप-सरतु । प्राकृतत्वाल्लिङ्गव्यत्यासः ।

अयमिति । ज्ञेषु विद्वत्सु वक्ष्यतीति वहतेर्वक्तेश्च लृटि रूपम् । सामर्थ्यं कृन्तति करोतीति च सामर्थ्यकृदित्युभयथा क्विप्प्रत्यय इति प्रकृत्योः श्लेषः ।

रजनीति । रजनिरमणमौलेः इन्दुशेखरस्य पादपद्मेत्यादि क्रियाविशेष-णम् । क्षण उत्सवः । अहं नन्दिता स्यामिति तृचि रूपम् । अथच तथा सति

१. 'र' ग. ङ. पाठः. २. 'ते' ङ. पाठः. ३. 'तच्चित्त' क. ङ. पाठः. ४. 'द्विर्दर्शि' क. ग. पाठः. ५. 'हं' घ. पाठः. ६. 'थापि क्वि' ग. घ. पाठः.

प्रमथनिवहमध्ये जातुचित् तत्प्रसादा-
दहमुचितरुचिः स्यान्नन्दिता सा तथा मे ॥

सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसाम्मुख्यमायासि तनुवर्तनम् ॥ ७ ॥

---

सम्प्रदायप्रकाशिनी

शीलः कदा स्यामित्यर्थः । अन्यदा नन्दिनो भावो नन्दितेति तल् । नन्दित्वं कदा स्यादित्यर्थः ।

सर्वस्वमित्यादि । सर्वं[2] स्वम् अपहर, छेदनतत्परो भूयाः, उपकारसाम्मुख्यमायासबद् देहवर्तनं यथा भवति तथापनयेत्येकदा । अन्यदा भो हर! त्वं सर्वस्वं, त्वमेव संसारच्छेदतत्परः, नीतेरुपकारस्य च यथा साम्मुख्यं तथा शरीरवृत्तिमनुप्रयासीति । अत्र हरेत्यादौ तिङ्सुब्विभक्ती श्लिष्टे । अनयोः प्रत्ययत्वाविशेषेऽपि वाक्यविषयत्वाद् भेदान्तरत्वम् । वचनश्लेषः प्रागुदाहरणे दर्शितः । इत्थं सभङ्गपदत्वे अष्टधा ॥ ७ ॥

साहित्यचूडामणिः

मे नन्दिता स्यात् नन्दिनः शैलादेर्भावः स्यादिति तल्प्रत्यये रूपमिति प्रत्ययोः श्लेषः ।

सर्वस्वमिति । अत्र खलनिन्दापरमेश्वरस्तुत्युभयशालिनि सर्वत्र सुप्तिङ्रूपयोर्विभक्त्योः श्लेषः । हरेत्यामन्त्रितं लोटो रूपं च । भवेति कदाचिल्लोटि अन्यदा भवस्य संसारस्य छेदे तत्पर इति । नयेत्यपि लोटि, उपकारेण सह साम्मुख्यम् आयासि आढौकसे आयासयितृ च । तन्वित्यपि लोटि, तनोः शरीरस्य वर्तनं च ॥ ७ ॥

---

१. 'ता' क. ख. ग. पाठः. २. 'र्वं', ३. 'त्वम् । इ' क. घ. ङ. पाठः. ४. 'तः । प्रकृत्यादिभेदसम्भवाद्दशविधः । इ', ५. 'ऽन्तरू' ग. पाठः.

भेदाभावात् प्रकृत्यादेर्भेदोऽपि नवमो भवेत् ।

नवमोऽपीत्यपिर्भिन्नक्रमः ।

योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः ।

शतकोटिदतां बिभ्रद् विबुधेन्द्रः स राजते ॥

अत्र प्रकरणादिनियमाभावाद् द्वावप्यर्थौ वाच्यौ ।

---

सम्प्रदायप्रकाशिनी

अभङ्गपदत्वमाह — भेदाभावादित्यादि । भेदस्य भङ्गरूपस्याभावः ।

अपिशब्दं समु(च्च ? च्चे)यशिरसि निवेशयितुमाह—नवमोऽपीत्यादि ।

योऽसकृदिति । गोत्रा गिरयः, गोत्राणि कुलानि च । पक्षा गरुतः, स्ववर्ग्यांश्च । शतकोटिना वज्रेण खण्डयतीति, शतानां कोटीर्ददातीति च शतकोटिदः । विबुधानामनिमिषाणां विदुषां चेन्द्रः । अत्र गोत्रादिपदेष्वभङ्गश्लेषः ।

नन्वत्र प्राकरणिकत्वेन नायकः प्रतीयत इति कथमयं श्लेष इत्यत आह—अत्र प्रकरणादीति । ताटस्थ्येनोक्तेः प्रकरणाद्यभावः ।

साहित्यचूडामणिः

अथ रुद्रटोक्ताद् भेदाष्टकादधिकोऽपि कश्चिदुत्प्रेक्षितुं शक्य इत्याह — भेदाभावादिति ।

य इति । परगोत्राणां शत्रुवंशानां प्रतिभटभूतानां शैलानां च । पक्षो बलं गरुच्च, तच्छेद एव क्षण उत्सवः नियमो वा तत्र क्षमः । शतकोटिमपरिमितमर्थं ददाति, अथ शतकोटिना दम्भोलिना द्यति खण्डयति इति शतकोटिदः । तद्भावं बिभ्रत् । अत्र शतकोटिद इति न कश्चिदुक्तेष्वेकतमो भेदः । मेलकपक्षस्तु नवमं प्रकारं प्रयोजयिष्यति ।

नन्वत्र कस्यचिदर्थस्य वाच्यत्वमन्यस्य च व्यङ्ग्यत्वमस्तु । अलमनेन श्लेषशब्देनेति चेत् तत्राह — अत्रेति । अथोद्भटमर्यादया चोदयति —

---

१. 'प्रत्वादभा' क. ख. घ. ङ पाठः. २. 'गों' ङ. पाठः ३. 'क्तः' क. घ. ङ. पाठः. ४. 'तः', ५. 'दस्य म' घ. पाठः.

ननु स्वरितादिगुणभेदाद् भिन्नप्रयत्नोच्चार्याणां तदभावादभिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्ययमर्थालङ्कारमध्ये गणितोऽन्यैरिति कथमयं शब्दालङ्कारः। उच्यते। इह दोषगुणा-

सम्प्रदायप्रकाशिनी

अथ शब्दै[३]कालङ्कारतामस्य समर्थयितुं विचारमारभते— ननु स्वरितेत्यादिना। श्लेषस्तावद् द्विरूपः सभङ्गपदोऽभङ्गपदश्चेति। तत्र प्रतीतिवैषम्यमनुपश्यामः। तथाहि—यदा सभङ्गपदत्वं तदा प्रत्यर्थं स्वरितादिगुणभेदादुच्चारणे प्रयत्नभेदः। अतः शब्द एव भेदसमधिगमाच्छब्दश्लेषो युक्तः। अभङ्गपदत्वे तु स्वरभेदाभावादुच्चारणे प्रयत्नैक्यमिति न शब्दतो भेदावगमः, अपितु एकवृन्तगतफलद्वयन्यायेन अर्थतः। अतोऽयमर्थश्लेषो युक्तः। इत्थं द्वैरूप्यसम्भवाद् द्विविधोऽयमर्थालङ्कारमध्ये गणितश्चिरन्तनैः। अतः कथमयं शब्दालङ्कारः। कथं च शब्दालङ्कारप्रस्तावे सङ्गच्छते। किञ्च नियमेनासावलङ्कारान्तरप्रतिभोत्पत्तिहेतुस्तेषां मतः। तच्च तदपि नेष्टमित्याक्षेपनिष्कर्षः। परिहरति — उच्यते इह दोषगुणेत्यादिना। इह हि[६] न केवलमलङ्काराणां, यावता

साहित्यचूडामणिः

नन्विति। स्वरितोदात्तादिगुणवैलक्षण्यात् केचिद् भिन्नप्रयत्नोच्चार्याः, अन्ये तस्य स्वरितादेरभेदाद् अभिन्नप्रयत्नोच्चार्याश्च। तत्र पूर्वत्र शाब्दत्वं श्लेषस्य यत्र प्रायेण पदभङ्गः, उत्तरत्रार्थत्वं यत्र न पदभङ्गः। उभयविधोऽप्ययमुपमादेरलङ्कारान्तरस्य प्रतिभामुत्थापयति। अतश्चास्यार्थालङ्कारत्वं युक्तं, न शब्दालङ्कारत्वमिति। परिहरति — उच्यत इति। सामान्येन काव्यव्यवहारे शाब्दार्थत्वे निबन्धनं निश्चेतव्यं, यदनुगुणोऽयमत्रत्यो विभाग इत्याकूत्याह— इह हीति। न केवलमलङ्कार एवायं नियमः, यावद् गुणदोषयोरपीत्याह—

१. 'दोद्भिन्न', २. 'भेदाद' ख. पाठः. ३, 'ब्दाल' ङ. पाठः. ४. 'त्र वै' क. घ. पाठः. ५. 'तः। तद' ङ. पाठः. ६. 'हि के' क. घ. पाठः. ७. 'शाब्दस्वार्थ' घ. पाठः.

लङ्काराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते । तथाहि — कष्टत्वादिगाढत्वाद्यनुप्रासादयो व्यर्थत्वादिप्रौढ्याद्युपमादयश्च तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते ।

---

सम्प्रदायप्रकाशिनी

दोषादीनां सर्वेषामेव धर्माणां यो विभागः, स तत्तच्छब्दार्थान्वयव्यतिरेकाभ्यामेव व्यवस्थितिं लभते । यत्र शब्दे सति ये दोषगुणादयः सन्ति, असति तु न सन्ति, ते शब्दान्वयव्यतिरेकानुविधानाच्छब्दधर्माः । एवमर्थान्वयव्यतिरेकानुविधायिनश्चेदर्थधर्मा इतीयमेव विभागव्यवस्था, नपुनरुच्चारणप्रयत्नभेदाभेदानिबन्धना । तमिमं विभागं दृष्टान्तेन हृदयङ्गमीकरोति —तथाहि कष्टत्वेत्यादि । कष्टत्वं श्रुतिकटुत्वम् । आदिशब्दात् च्युतसंस्कृत्यादेः शब्ददोषान्तरस्य परिग्रहः । गाढत्वं शब्दगुणः । आदिशब्दाल्ललितत्वादेः शब्दगुणान्तरस्य । अनुप्रासादय इत्यादिशब्दाद् यमकादेः शब्दालङ्कारान्तरस्य । त एते हि शब्दे सति सन्ति, असति तु न सन्तीति शब्दभावाभावानुविधायित्वाच्छब्दधर्मा इत्येव व्यवस्थाप्यन्ते । व्यर्थत्वमपुष्टत्वमर्थदोषः । प्रौढिर्वैदग्ध्यमर्थगुणः । आदिशब्दात् साभिप्रायत्वादीनां परिग्रहः । उपमादय इत्यादिशब्दाद् रूपकादेरर्थालङ्कारान्तरस्य । एतेऽपि ह्यर्थान्वयव्यतिरेकानुविधानादर्थधर्मतया व्यवस्थाप्यन्ते ।

साहित्यचूडामणिः

दोषेति । उद्देशानुगुण्याद् दोषगुणालङ्काराणामित्युक्तिः । अन्वयव्यतिरेकाभ्यामेवेति । आश्रयाश्रयिभावनिबन्धनतायामपि तयोरवर्जनीयत्वस्य वक्ष्यमाणत्वात् । कष्टत्वं शाब्दो दोषः । गाढत्वं गुणः । अनुप्रासोऽलङ्कारः । एकस्य व्यर्थत्वमार्थो दोषः । प्रौढिर्गुणः । उपमा अलङ्कारः । तज्जातीयपरिग्रहार्थं सर्वत्रादिपदप्रयोगः । प्रौढिगाढत्वयोर्गुणत्वं पराभ्युपगमेनैव । स्वपक्षे

---

१. 'यस्तद्धा' ख. पाठः. २. 'दीनां यो' ङ. पाठः. ३. 'न्धाः ।' क. घ., 'न्धा ।' ग. पाठः. ४. 'ते ह्य', ५. 'भाविरवाद' ङ. पाठः.

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।

इत्यभङ्गश्लेषः,

प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥

इति सभङ्गश्लेषश्चेति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि

---

सम्प्रदायप्रकाशिनी

इत्थं प्रकृतेऽपि व्यवस्था युक्तेति प्रसिद्धोदाहरणपुरस्सरमाह — स्वयं च पल्लवेत्यादि । भास्वद्भ्यामुद्द्योतमानाभ्यां कराभ्यां पाणिभ्यामित्येकदा । भास्वतः सूर्यस्य करैः किरणैरित्यन्यदा । सुखेनाप्तुं शक्यं स्वापं, तथाविधं न भवतीत्यस्वापं दुर्लभं यत् फलं कैवल्यादि तत्र लुब्धानां महात्मनामीहितप्रदेत्येकदा । अन्यदा तु स्वापस्य निद्रायाः फलं स्तैमित्यादि, तत्र यो लुब्धो न भवति तस्मिन् जने हितप्रदेति । अत्र भास्वत्करेत्यभङ्गश्लेषः । अस्वापफललुब्धे हितेति सभङ्गः । तदेतदुभयं शब्दैकान्वयव्यतिरेकानुविधायीति शब्दालङ्कार एव, न पुनराद्यस्याभङ्गपदत्वमात्रादर्थश्लेषता ।

साहित्यचूडामणिः

तयोरोजस्यन्तर्भावात् । तत्र दुष्टत्वस्य 'कार्तार्थ्यं कर्हिं लप्स्यत' इति तद्भावः । 'आह्लादं लभते कंदे'ति तदभावः । 'मालतीदाम लङ्घितं भ्रमरैरि'ति, 'मालतीमालालोलालिकलीला यथा'(?)इति च गाढत्वस्य तद्भावतदभावौ । एवं 'रावणो लोकरावणः, 'लोकनादनं' इत्यनुप्रासस्य । इत्थं व्यर्थतादावप्यूह्यम् ।

औद्भटीयमेवात्रोदाहरणद्वयमुपादत्ते — स्वयं चेति । न केवलमुक्तरूपस्य हिमाद्रेस्तनया, यावत् स्वयमप्येवंविधेति प्रकरणावसेयोऽर्थः । गौरीपक्षे किसलयवदारक्ताभ्यां भास्वद्भ्यां कान्तिमद्भ्यां पाणिभ्यां विराजिता, सुखेनाप्तुं लब्धुमशक्यं यत् फलं तत्र लुब्धानामभिलाषवतामभिमतं प्रददाति । सन्ध्यापक्षे तु किसलयवदाताम्रैरुदयारुणिमशालिभिः भास्वतः सूर्यस्य करैः किरणैर्विरा-

---

१ 'ष इति' क. पाठः. २. 'तद्' क. ख. पाठः. ३. 'त' ग. पाठः. ४. 'त', ५. 'द' ख. पाठः.

शब्दश्लेषत्वमुपपन्नं, नत्वाद्यस्यार्थश्लेषत्वम् । अर्थश्लेषस्य तु स विषयः, यत्र शब्दपरिवर्तनेऽपि न श्लेषत्वखण्डना । यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥

---

सम्प्रदायप्रकाशिनी

ननु तर्ह्यर्थश्लेषस्य विषयापहार इत्यत आह—अर्थश्लेषस्य त्विति । परिवर्तनेऽपीति तदन्वयव्यतिरेकानुविधानाभाव उक्तः ।

उदाहृत्य दर्शयति—स्तोकेनेत्यादि । स्तोकेन, दत्तेनार्थेनेति शेषः । अत्रहि स्वल्पेनेत्यादिपर्यायपरिवर्तनेऽपि नार्थयोः श्लेषः खण्ड्यते ।

साहित्यचूडामणिः

जिता, स्वापफले आलस्यादौ यो न लुब्धः । तस्मिन् हितमनुकूलत्वं प्रददाति । अत्र पूर्वार्धे श्लेष आर्थः । उत्तरत्र शाब्दः । अत्रास्वापादौ यद्यैकपद्यं तदा थाथादि स्वरेणान्तोदात्तत्वं लघुप्रयत्नत्वं च, यदा तु पदद्वयं तदा किं आद्ये 'तत्पुरुषे तुल्यार्थ'(६-२-२) इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं गुरुप्रयत्नत्वं च ।

द्वावपीत्यर्थद्वयगामिनौ । नपुनः पाश्चात्त्यः सभङ्गश्लेष एव, पूर्वार्धे भास्वत्करशब्दयोरपि सूर्यकिरणादिना परिवर्तने श्लेषाभावाद् । फलितमर्थमाह—नत्विति ।

तर्हि कथमर्थश्लेषस्य विषय इति चेत् तत्राह—स्तोकेनेति । अत्र शब्दपरिवर्तनेऽपि न श्लेषखण्डना । एवमर्थालङ्कारत्वमस्य निराकारि ।

अथ

"अलङ्कारान्तरगतां प्रतिभां जनयत् पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत् प्रतीयताम् ॥"

---

१. 'ना । स्तो' ख. पाठः. २. 'त', ३. 'ने ना' ख. ग. ङ. पाठः. ४. 'त', ५. 'द्ये पादे त', ६. 'तत्र हि श' घ. पाठः. ७. 'न्तरत्व', ८. 'करोति । अ' पाठः.

इति। नचायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः, अपितु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथाहि—यथा 'कमलमिव मुखं मनोज्ञमेतत् कचतितरामि'त्यादौ गुणसाम्ये क्रियासाम्ये उभयसाम्ये वा उपमा, तथा 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशु-

---

### सम्प्रदायप्रकाशिनी

इत्थमभङ्गपदस्यापि शब्दालङ्कारतां व्यवस्थाप्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुतापि नास्तीत्युपक्रमते — नचायमुपमेत्यादिना। अयमिति प्रकृतोदाहरणद्वयस्थं परामृशति। 'स्वयं च पल्लवे'ति 'स्तोकेनोन्नतिमि'त्यनयोर्हि श्लेष उपमा च प्रतीयते। तत्रोपमाप्रतिभोत्पत्तिहेतुस्तद्बाधकः श्लेष इति चिरन्तनाः। तत् तथा न भवतीति प्रतिज्ञाय, कथं तर्हीत्यत आह — अपितु श्लेषेत्यादि। इह न श्लेषालङ्कारः, अपितु श्लेषप्रतिभोत्पत्तिहेतुः श्लेषबाधिकोपमैव, उपमालक्षणसम्भवादिति यावत्। ननु गुणक्रियासाम्ये सत्युपमा, शब्दसाम्ये तु श्लेषः; प्रकृतोदाहरणे तूभयसाम्यसम्भवात् कथमुपमैवेति शङ्कां प्रसिद्धोदाहरणप्रदर्शनेनोन्मूलयति — तथाहि यथेत्यादिना। मनोज्ञमिति गुणसाम्ये। कचतितरामिति क्रियासाम्ये तदुभयसाम्ये वा।

### साहित्यचूडामणिः

इति न्यायेन यन्मूलोऽयमर्थालङ्कारत्वभ्रमः, तदुपमाद्यलङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वमपहस्तयितुमाह — नचेति। अयं प्रकृतोदाहरणयुगलवर्ती। अपित्विति। उक्तार्थवैपरीत्येन श्लेषप्रतिभोत्पत्तिनिमित्तमुपमादि, येन शब्दालङ्कारत्वोपपत्तिरिति भावः। उक्तमर्थमुदाहरणेन शोधयति—कमलमिवेति। मनोज्ञत्वं गुणः। कचनं क्रिया। वाकारेण सर्वथोपमायां साम्येन भाव्यं, तत्प्रतिपादनं तु बहुप्रकारमिति प्रत्याय्यते। तेनेति। येनोपमायां साम्यमात्रे निर्बन्धः।

---

१. 'ज्ञा' ग., ङ. पाठः, २. 'षः। क' ग. पाठः.

बिम्बमिवे'त्यादिशब्दमात्रसाम्येऽपि सा युक्तैव । तथाह्युक्तं रुद्रटेन —

"स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु ।
आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः ॥"

सम्प्रदायप्रकाशिनी

यथेयमुपमा केवलगुणक्रियासाम्यहेतुका, तथा 'सकलकलमि'त्यादौ कलकलसहितं पुरं बिम्बं तु निश्शेषकलायुक्तमिति शब्दमात्रसाम्ये-ऽपि[1], पूर्वाचार्याणां तथाभ्युपगमादिति शेषः । अभ्युपगमं दर्शयति— तथाह्युक्तमिति ।

स्फुटमर्थेति[2] । इहापीति[3] । गुणक्रियासाम्यरहिते केवलशब्द-साम्यवति सकलकलमित्यादावित्यर्थः । उपमासमुच्चययोरर्थालङ्कारयोः सतोरपि शब्दसाम्यमात्रात्[4] प्रवृत्तिदर्शनादुपमायास्तथानभ्युपगमे[5] समु-च्चयस्याप्यनभ्युपगमः[6] प्रसजेदिति सूचितम् । एवं गुणक्रियासाम्य-शब्दसाम्ययोरुपमाप्रयोजकत्वं समानयोगक्षेमम् ।

साहित्यचूडामणिः

सकलकलमिति । कलकलेन सह वर्तते अथच सकलाः कला यत्र । शब्द-मात्रेति । पुरस्य चन्द्रबिम्बस्य च साम्यं शब्दोल्लेखमात्रलक्षणमपि द्वयोरुपमां प्रयोजयतीति किं तस्यार्थत्वनिर्बन्धेन । यथा —

"बालेवोद्यानमालेयं सालकाननशोभिनी ।"

इति ।

अत्र रुद्रटोक्तिं संवादायोद्धाटयति—स्फुटमिति । प्राचुर्यादर्थालङ्कारा-वेवोपमा समुच्चयश्च । क्वचित्तु शब्दमात्रादपि तौ निर्वाह्यौ । तस्माद् इहापीति शब्दालङ्कारपक्षेऽपि भवतः । 'पुरं सुधांशुबिम्बं चे'ति 'बाला चोद्यानमाला चे'ति[7]

१. 'पि तदुभयसाम्ये पू' ङ. पाठः. २. 'ति शेष्यत इ' क. घ. पाठः. ३' 'ति । के' क. ख. घ. ङ. पाठः. ४. 'ब्दमात्रसाम्यात' क. घ. पाठः. ५. 'थाभ्यु' ख. पाठः. ६. 'स्यान' क. घ., 'स्याभ्यु' ख. पाठः. ७. 'ति स' घ. पाठः.

इति । नच 'कमलमिव मुखमि'त्यादिसाधारणधर्मप्रयोगशून्य उपमाया विषय इति वक्तुं युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः ।

देव! त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥

सम्प्रदायप्रकाशिनी

ननु साधारणधर्मः शब्दार्थश्लेषात्मेति तद्वान् श्लेषस्य विषयोऽस्तु, तच्छून्यस्तूपमाया इत्यत आह—नच कमलमिवेत्यादि। शब्दार्थश्लेषरूपसाधारणधर्मशून्यः 'कमलमिव मुखमि'त्येतावानेव सन्दर्भो विषय इति न वक्तुं युक्तम् । कुत इत्यत आह — पूर्णोपमाया इति । ननूपमायाः सम्भवति श्लेषविविक्तो विषयः। श्लेषस्य विषय उपमाद्यलङ्कारविविक्त एव । तथा न तावदिहोपमा रूपकादि वा। तदात्मकत्वोक्त्या लोकत्रयस्यापि प्राकरणिकत्वात् प्राकरणिकाप्राकरणिकत्वाविवक्षणान्नोपमा । नापि रूपकम्, अभेदस्य साध्यत्वात् । रूपके हि सिद्धतयारोपः । एकस्योपपत्त्या त्रैयात्मकस्योक्तेर्न विरोधः । अत एकोऽपीत्यनुक्तिः । विशेष्ये पृथगुपादानाद् न ध्वनिः । इत्थं कविसंरम्भाच्छ्लेषस्य विविक्तविषयता सम्भवति यतः, अतः 'स्वयं च पल्लवे'त्यादौ सावकाशयोर्द्वयोर्योगात् सङ्कर एव, नतु श्लेषस्योपमाबाधकत्वम् ।

साहित्यचूडामणिः

पाठे समुच्चयालङ्कारः । ननु यत्र मनोज्ञत्वकचनादिसाधर्म्यप्रयोगः[६] तत्र श्लेष एव। अन्यः पुनरुपमाया विषय इत्याशङ्क्याह—नचेति । पूर्णा लुप्तेत्युपमाप्रभेदो दशमे समर्थयिष्यते ।

ननु पूर्णोपमाया इव श्लेषस्यापि निर्विषयत्वप्रसङ्ग इत्यत्राह — देवेति । पाता रक्षिता अलं पर्याप्तं कृत्वा, पातालं नागलोकश्च। आशानां मनोरथानां निबन्धनं, दिङ्निबन्धनमन्तरिक्षं च। चामरमरुतां प्रकीर्णकपवनानां भूमिरास्पदम्, अमरमरुद्भूमिः स्वर्गश्च अमराणां सर्वेषां विशेषतो मरुद्गणस्य च भूमिः ।

१. 'णशब्दसधर्मेश' क. घ. पाठः. २. 'तू' क. पाठः. ३. 'मर्थ्यात्' क. घ. पाठः. ४. 'श्र' क. घ. पाठः. ५. 'नध्व' क. घ., 'नाध्व' ख., 'नाद् ध्व' ग. पाठः. ६. 'तियोगः', ७. 'मा दशमोद्योते स' घ. पाठः.

इत्यादि श्लेषस्य चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति द्व-योर्योगे सङ्कर एव । उपपत्तिपर्यालोचने तु उपमाया एवायं युक्तो विषयः । अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् । नच 'अबिन्दुसुन्दरी नित्यगलल्लावण्यबिन्दुके'त्यादौ विरोध-प्रतिभोत्पत्तिहेतुः श्लेषः, अपितु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः । नह्यत्रार्थद्वयप्रतिपादकः[1] शब्दश्लेषः, द्वितीयस्यार्थस्य प्रतिभात-[2]

सम्प्रदायप्रकाशिनी

सूक्ष्मोपपत्तिपर्यालोचने तु न सङ्करः, अपितूपमाया एवायं विषयः। का सोपपत्तिरित्यत आह—अन्यथा विषयेत्यादि । अन्यथा सङ्क-राभ्युपगम इत्यर्थः । इत्थं प्रकृतोदाहरणादावुपमाबाधकत्वं श्लेषस्य निरस्यालङ्कारान्तरबाधकत्वमपि नास्तीति दर्शयति— नचाबिन्दु-सुन्दरीत्यादि[3] । अप्सु इन्दुः अबिन्दुः इन्दोः प्रतिबिम्बमित्यर्थः । तद्धि सातिशयसुभगम् । अत्राबिन्दु बिन्द्विति योऽयं विरोधाभासः न स श्लेषेण बाध्यते, अपितु श्लेषप्रतिभोत्पत्तिहेतुना विरोधेन श्लेष एव बाध्यते । कथमित्यत आह— नह्यत्रार्थद्वयेति । बिन्दुर्न भवति भवति चेत्यर्थद्वयम्[4] । नहि तत्प्रतिपादकोऽत्र श्लेषः, बिन्दुर्न भवतीत्य-

साहित्यचूडामणिः

द्वयोर्योग उपमाश्लेषयोरेकत्र सन्निपाते सङ्कर एव वक्ष्यमाणालङ्कारः, न पुनरेक एवोपमा श्लेषो वा । ननु कथं श्लेषप्रतिभोत्पत्तिनिमित्तत्वादुपमायां पर्यवसानमिति चेत् तत्राह—उपपत्तीति । उपपत्तिर्युक्तिः । तत्पर्यालोचने पुन-रुपमाया एव गोचरो भवितुमर्हति । विपर्यये बाधं उक्त एवेत्याह— अन्यथेति । व्याख्यातम् । अथालङ्कारान्तरेष्वपि युक्तिमेनां योजयिष्यन् विरोधे तावदाह — नचेति । अप्सु सलिले प्रतिफलन्निन्दुरबिन्दुः तद्वत् सुन्दरी । कचकचायमानला-वण्यत्वं साधर्म्यम्[5] । बिन्दुराहित्यं च व्यङ्ग्यम् । विरोधे न श्लेषस्य प्रतिभेत्यत्र युक्तिमाह—नहीति । अर्थद्वयप्रतिपादक[6] इति । प्रतिपादनमभिधानम् । द्विती-

१. 'कश', २. 'तिभासभा' ख. पाठः. ३. 'दि । अबि' क. घ. पाठः, ४. 'द्वितयं' ग. पाठः. ५. 'धक उ', ६. 'क' घ. पाठः.

मात्रस्य प्ररोहाभावात् । नच विरोधाभास इव विरोधः श्लेषा-
भासः श्लेषः । तस्मादेवमादौ *श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारा-
न्तरमेव । तथाच—"सद्वंशमुक्तामणिः",

नाल्पः कविरिव स्वल्पश्लोको देव! महान् भवान् ।

---

सम्प्रदायप्रकाशिनी

स्यार्थस्य प्ररोहाभावात् । अतः श्लेषाभासोऽयमिति यावत् । ननु
विरोधश्लेषयोर्द्वयोराभासत्वे कथमन्यतर इत्यत आह—नच विरोधा-
भास इत्यादि । विरोधालङ्कारस्य हि विरोधाभासत्वमेव लक्षणं
नतु श्लेषस्य श्लेषाभासत्वमित्यर्थः[1] । निगमयति— तस्मादेवमादा-
वित्यादि । एवमादाविति यदुक्तं तद् दर्शयितुमाह— सद्वंशेति । अत्र
वंशशब्दे[2] श्लेषो मुक्तामणित्वरूपणेऽङ्गम्[3] । तथाहि — कथं मुक्तामणि-
त्वमित्याकाङ्क्षायां वंशस्य वंशत्वादिति श्लेषो रूपकमवस्थापयति । अत
एकदेशविवर्तिरूपकेणेह[4] श्लेषो बाध्यते । तथा 'नाल्पः (श्लोक ? कविः)
यशसः पद्यस्य च प्रतिपादकः श्लोकशब्दश्लेषो महानिति व्यतिरेका-

साहित्यचूडामणिः

यस्येति । बिन्दुराहित्यरूपस्य व्यञ्जनव्यापारमात्रलब्धस्य । प्ररोहाभावाद्
अभिधावैचित्र्यलक्षणालङ्कारपर्यन्तं प्रसर्पणाभावात् । नन्वयं विरोधेऽपि समः
समाधिरित्यत्राह—नचेति । आभासताव्यतिरेकेण न विरोधोऽलङ्कारः । नचैषे
न्यायः श्लेषे । इतोऽपि बहुष्वलङ्कारेषु दर्शयितुमाह—तथाचेति । सन् विशु-
द्धोऽन्वय एव वेणुः तस्य मुक्तामणिः । एतदेकदेशविवर्तिरूपकमित्यौद्भटाः ।
परम्परितमित्यपरे । भविष्यति चैतत् पद्यम् । यशश्च श्लोकः । अत्र व्यतिरेको-
ऽलङ्कारः ।

---

१. 'त्वम् । नि' क. घ. पाठः. २. 'ब्द' क. ख. घ. पाठः. ३. 'दिरू(प)श्ले' क. घ. पाठः. ४. 'ष एव न्या' घ. पाठः.

---

* 'दिषु वाक्येषु श्ले' इति मूलकोशपाठः,

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।

आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः ।

यश्चित्रमच्युतशरो लक्ष्मभाङ्क्षीन्नमस्तस्मै ॥

इत्यादावेकदेशविवर्तिरूपकश्लेषव्यतिरेकसमासोक्तिविरोधत्व-मुचितं, नतु श्लेषत्वम् ।

सम्प्रदायप्रकाशिनी

ब्जमिति श्लेषमूलो व्यतिरेक एव । अनुरागवतीत्यत्रे विशेष्यांशे शब्दद्वयाभावादप्राकरणिकोऽर्थो व्यङ्ग्य एव । अतो न श्लेषः । श्लेषे द्वयोर्वाच्यत्वनियमात् । अतो विशेषणांशे प्रतीतस्य श्लेषस्य बाधिका समासोक्तिरेव । तथा 'आदाय चापमि'त्यत्रै शैलरूपं चापमादाय अहीश्वरं गुणं कृत्वा विष्णुशरस्त्रिलोचनो लक्ष्मभाङ्क्षीदिति वास्तवार्थातिरिक्तो योऽयं निश्चलं चापं गृहीत्वा गुणं हीनं कृत्वा दृष्टिसौष्ठवरहितः सन्नमुक्तशर एव लक्ष्मभाङ्क्षीदिति विरोधाभासः, स श्लेषमाभासयन् स्वयमलङ्कारत्वेनावतिष्ठते ।

साहित्यचूडामणिः

अनुरागवतीति । अनुराग आरुण्यं स्नेहविशेषश्च । तस्याः सन्ध्यायाः पूर्वं प्रवृत्तः, नायिकायाः प्रत्यासन्नवर्ती च । अत्र समासोक्तिरलङ्कारः ।

आदायेति । अहीनां भुजङ्गानामिनं स्वामिनं, हीनं विकलं च । विषमा त्रित्वसंख्याना लक्ष्यविमुखी च दृष्टिर्यस्य । अच्युतो लक्ष्मीपतिः अगलितश्च शरो यस्य । अत्र विरोधोऽलङ्कारः । एवं

"ते गच्छन्ति महापदं भुवि परा भूतिः समुत्पद्यते
तेषां तैः समलङ्कृतं निजकुलं तैरेव लब्धा क्षितिः ।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिता नित्यशो
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥"

इत्यत्र श्लेषप्रतिभोत्पत्तिहेतुर्व्याजस्तुतिरलङ्कारः । श्लेषमात्रतात्पर्ये तुष्टेन रुष्टेन वेति चाटुकवाक्यबन्धस्य वैयर्थ्यप्रसङ्ग एव । यथा ममैव—

१. 'धाक्षी' क. पाठः. २. 'त्र तु वि' क. ख. ङ. पाठः. ३. 'न्दाद्वाच्यभा' क. ख. घ. पाठः. ४. 'त्र यः शै', ५., ६. 'क्ष्य' क. घ. ङ. पाठः. ७. 'नोपति' ङ. पाठः. ८. 'धा वा म' ग. पाठः.

शब्दश्लेष इति चोच्यते, अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः। किञ्च वैचित्र्यमलङ्कार इति य एव कविप्रातिभा-संरम्भगोचरस्तत्रैव विचित्रतेति सैवालङ्कारभूमिः। अर्थमुख-प्रेक्षित्वमेषां[1] शब्दानामिति चेद्, अनुप्रासादीनामपि तथैवेति

सम्प्रदायप्रकाशिनी

इत्थं नालङ्कारान्तरबाधकत्वं श्लेषस्य, प्रत्युत बाध्यत्वमेवेति समर्थ्य यदस्यार्थालङ्कारमध्ये गणनं तत् सुतरामसाम्प्रतमित्याह— शब्दश्लेष इत्यादि। चकारौ वचनलक्षणक्रिययोरेककर्तृकतामाहतुः। भवद्भिरेव शाब्दत्वमभ्युपगम्यापि यदर्थालङ्कारमध्ये लक्ष्यते अयं को नयः। व्याहतेरतिप्रकाशत्वान्न्यायशङ्कैव नास्तीत्यर्थः। स्थूलदृशापि तावत् पश्येत्याह— किञ्च वैचित्र्यमित्यादि। इतिर्हेतौ। यतो वैचित्र्यमलङ्कारः, अतो वैचित्र्यवदेव कवेः संरम्भगोचरः। इह तु शब्दान्वयव्यतिरेकानुविधानाच्छब्द एव वैचित्र्यवानिति शब्दसंघट्टन एव कविः संरभते। अतः श्लेषालङ्कारस्य शब्द एव भूमिर्नार्थः। चोदयति— अर्थमुखेति। वैचित्र्यशालिनामप्येषां शब्दानामर्थैक-पारतन्त्र्यात् प्रधानभूतार्थालङ्कारतया श्लेषः किं नेष्यत इत्याक्षेपनि-ष्कर्षः। परिहरति— अनुप्रासादीनामित्यादि। रसानुगतप्रकृष्ट-

साहित्यचूडामणिः

"कालोऽयं हीनपुन्नागः केसरी वर्तते वने।
प्रकाशन्ते नखा यस्य पलाशमुकुलच्छलात्॥"

इत्यत्रापह्नुतिरलङ्कारः। इत्याद्यूह्यम्।

अथ जितकाशितया प्रमेयं च (युग)लप्रयोगेण व्याघातपर्यवसायितयोपसंह-रति— शब्देति। अर्थालङ्कारः शब्दश्लेषश्चेति यत् प्रतीतिपारुष्यं तदन्याय्यमिति भावः। इतोऽपि सामान्यतो युक्तिं वक्तुमुपक्रमते— किञ्चेति। उक्तिगतं वैचित्र्यमलङ्कारः तस्य भङ्गिभणितिरूपत्वात्, यत् प्रतीतिपरमार्थतया समर्थ-नीयम्। सैवेति। अत्रच श्लेषवाच्यभागादपि शब्दांशः कवेः संरम्भविषयः। तत्र प्रमाणं पर्यायपरिवर्तनासहिष्णुत्वम् इति शब्द एवात्रालङ्कारस्थानम्। चो-दयति— अर्थेति। नहि कदाचिन्निरर्थकानां शब्दानां श्लेषौचित्यम्। परि-हरति— अनुप्रासादीनामिति। तथैवेति। अर्थमुखप्रेक्षणीयत्वस्वभावः। नहि

१. 'मेव तेषां' क. पाठः. २. 'भावयो', ३. 'शब्दालङ्कारत्व' ङ. पाठः.

तेऽप्यर्थालङ्काराः किं नोच्यन्ते। रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वे ह्यनुप्रासादीनामलङ्कारता। शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता। अर्थगुणदोषालङ्काराणां

सम्प्रदायप्रकाशिनी

न्यासरूपत्वादनुप्रासस्याप्यर्थमुखप्रेक्षित्वमित्येवमादिभिः किमपराद्धं, यतः श्लेषसाधर्म्ये सत्यप्यर्थालङ्कारा नोच्यन्त इत्युपालम्भः। नानुप्रासादीनां साक्षादर्थमुखप्रेक्षित्वमनुपश्याम इत्यत आह — रसादिव्यञ्जकेत्यादि। एते हि रसभावाद्यभिव्यञ्जनानुगुणमूर्ध्निवर्गान्त्यगेत्यादिनानुशिष्टचरं स्वरूपं यथा साक्षादपेक्षन्ते। तथा रसाद्यभिव्यञ्जकं धीरोदात्ताद्यर्थविशेषं नियमेनापेक्षन्ते। एवमर्थसव्यपेक्षत्वेऽप्यनुप्रासादीनामलङ्कारता शब्दालङ्कारत्वमेवेत्यर्थः। योऽयं शब्दार्थालङ्कारविषयत्वेनातिप्रसङ्गः, स दोषगुणयोरपि न्यायसाम्यात् प्रसजेदित्याह — शब्दगुणेत्यादि। अर्थापेक्षयैवेति। नह्यर्थापेक्षामन्तरेण गुणानां वा दोषत्वं दोषाणां वा गुणत्वम्। कथमितरथा क्वचिद् गुणा एव दोषतां दोषा एव गुणतामनुप्रपद्यन्ते। प्रतियोगितया सिद्धमप्य(मृतम? विस्म)रणाय पुनराह — अर्थगुणेत्यादि। किञ्चाभङ्ग-

साहित्यचूडामणिः

कदाचिन्निरर्थकानां शब्दानाम् अनुप्रासौचित्यमपि वक्तुं श(क्यत्वात्? क्यम्)। तस्मादतिप्रसङ्गो दोषः। ननु कथं सार्थकत्वनैयत्यमनुप्रासगोचराणां शब्दानामिति चेत् तत्राह — रसादीति। वाच्यविशेषेति।

"शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः।"

"दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्।"

इत्यादौ शृङ्गारादिरसप्रकटनप्रगल्भस्य विभावप्रभृतेरभिधेयविशिष्टस्याभिधायकभावेनाभिगुम्भितानां शब्दानामनुप्रासौचित्यं, नान्येषाम्। अलङ्कारतेति। शब्दस्वविशिष्टा। उक्तामुपपत्तिमलङ्कार इव गुणदोषयोरपि संचारयति — शब्दगुणेति। शब्दालङ्कारस्यैव पक्षीकृतत्वात्। अर्थगतयोस्तु गुणदोषयोरलङ्कारस्यापि।

१. 'दिव्यञ्जकधी', २. 'ब्दालङ्कारत्वे' क. घ. पाठः. ३. 'दि। किञ्चा' क. घ. ङ. पाठः. ४. 'गर्भस्य' ग. पाठः. ५. 'श्लेषस्य' घ. पाठः.

शब्दापेक्षयैव स्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम्। 'विधौ वक्रे मूर्ध्नी'त्यादौ च वर्णादिश्लेषे एकप्रयत्नोच्चार्यार्थत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसजतीत्येवमादि स्वयं विचार्यम् ॥ ७ ॥

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८ ॥**

---

सम्प्रदायप्रकाशिनी

पदत्वे सत्यभिन्नप्रयत्नोच्चार्यत्वादर्थश्लेषत्वं सभङ्गपदत्वे तु वैपरीत्यमिति यदेतद्विभागलक्षणं कृतं तदप्यनैकान्तिकमित्याह— **विधौ वक्र** इत्यादि । **वर्णादी**ति । 'भक्तिप्रह्वे'त्यादौ वचनादिश्लेषे च । तत्र हि शब्दो भिन्नः, उच्चारणप्रयत्नस्त्वेकरूप इति सोपहासं निगमयति— **एवमादि स्वय**मिति ।

"ये ह्यलङ्कारसर्वस्वे श्लेषालङ्कारपारगाः ।
पूर्वपक्षविदस्ते स्युरिह श्लेषे[1]ऽधिकारिणः ॥"

अत इह विशिष्य रन्तव्यं विवेचकैः[2] ॥ ७ ॥

अथ शब्दविच्छित्तिप्रस्तावाच्चित्रं— **तच्चित्रं यत्रे**ति ।

साहित्यचूडामणिः

अथैकप्रयत्नोच्चार्याणामर्थश्लेषविषयत्वं व्यभिचरतीत्याह— **विधौ वक्र** इति । **शब्द[3]भेदे**ऽपि विधिर्विधुरिति शब्दयोर्भेदे सत्यपि ॥ ७½ ॥

अथ चित्रालङ्कारं लक्षयति— **तच्चित्र**मिति । वर्णशब्देन तदनुस्मारिकाणां लिपीनामाक्षेपः ।

"लिपिरेखानुसन्धेया खड्गाद्याकृतिकल्पना ।
शब्दात्मकेषु वर्णेषु गौण्या वृत्त्या प्रवर्तते ॥"

---

१. 'षा' क. घ. पाठः. २. 'चनकैः' ङ. पाठः. ३. 'ब्दा' घ. पाठः.

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्मा-द्याकारमुल्लासयन्ति, तच्चित्रं काव्यम् । कष्टं* काव्यमेतादिति दिङ्मात्रं प्रदर्श्यते । उदाहरणं—

मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥
माता नतानां सङ्घट्टः† श्रियां बाधितसम्भ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा[1] ॥

खड्गबन्धः ।

सम्प्रदायप्रकाशिनी

ये हि श्रोत्राकाशसमवायिनस्ताल्वोष्ठपुटव्यापारेणाभिव्यज्यन्ते, न तेषां खड्गाद्याकृतिहेतुत्वमित्यत आह—सन्निवेशविशेषेणेति । रेखापरिकल्पिततत्तत्खड्गादिसंस्थानेनेत्यर्थः । विशेषविवेचनसङ्कोचे-हेतुमाह— कष्टं काव्यमित्यादि ।

मारारीति । मारारिः शिवः, शक्र इन्द्रः, रामो बलभद्रादिः, इभमुखो विनायकः, एभिः । आसाररंहसा सारारब्धस्तवा धारासंपात-वेगेनोत्कृष्टं प्रक्रान्तस्तुतिः । नित्यं तेषामार्तेर्हरणक्षमा । नतानां माता । श्रियां सङ्घट्टः सम्मिश्रीभावस्थानम् । बाधितसम्भ्रमा शमितव्यामोहा ।

साहित्यचूडामणिः

इत्युक्तत्वात् ।

सन्निवेशविशेषेण वर्णविशेषेण नियमवत्तया शब्दान्तरपरिवृत्त्यसहि-ष्णुना । खड्गमुरजेति ।

"यन्नाम नाम यत् स्यात् तदाकृतिर्लक्षणं तस्य ।"

इति रुद्रटोक्तयुक्त्या लोकप्रसिद्धं खड्गाद्याकारम् उल्लासयन्ति अनुस्मारयन्ति ।

मारारीति । मारारिरीश्वरः, रामो जामदग्न्यः, इभमुखो विनायकः, तैः आसारस्य वेगवतो वर्षस्य रंहसा वेगेन । सारमुत्कृष्टं कृत्वा आरब्धः स्तवो

१. 'द्रि' ख. पाठः. २. 'चनहे' क. ख. पाठः. ३. 'ह्वाटीभा' ख. ग., 'ह्वीभा' क. पाठः.

* 'ष्ट', इति, † 'ट्ट' इति च मूलकोशपाठः.

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरला बहुलामला ॥

मुरजबन्धः ।

सम्प्रदायप्रकाशिनी

मान्या माननीया । अथ सीमा रामाणां स्त्रीसृष्टेरवधिः । शं सुखं मे दिश्यात् । उमा गौरी । आदिजा विरिञ्चसृष्टेः प्राक् सिद्धा । खड्गबन्धोऽयम् । खड्गस्य हि फलकं मूलं, मुष्टिः ऊर्ध्वं, फलकसन्धानपालिका द्राढिका, मुष्टिकाण्डः खण्डिका, उपरिचक्रं गञ्जनकं, शङ्कुः शिरः । तत्र प्रस्तारः— द्राढिकामध्ये माकारः साधारणः । वर्णाश्चतुर्दश सव्यधारायामधोग्रः । कोणे साकारः साधारणः । धारान्तरे चतुर्दशकमूर्ध्वोर्ध्वम् । माकारः श्लोकसमाप्तिः । द्राढिकाया मध्याद् दक्षिणाग्रावधि सप्तकम् । सव्याग्रतो मध्यमावधि च सप्तकम् । तत् श्लोकार्धम् । खण्डिकायां त्रयम् । गञ्जनकमध्ये माकारः साधारणः । ततो दक्षिणाग्रावधि चतुष्कम् । सव्याग्रान्मध्यमावधि चतुष्कम् । शिरसि वर्णद्वयमिति युगलकसमाप्तिः ।

सरलेति । सरला अवक्रा । बहुलारम्भः प्रभूतोपक्रमः तरलानां चञ्चलानामलिबलानां भ्रमरसैन्यानामारवो यत्र सा । वारलाभिर्हंसीभिर्बहुला । अमन्दा उद्योगिनः करलाः करं लान्तीति

साहित्यचूडामणिः

यस्याः । नतानां जनानां माता । सङ्कटो लोकोपरोधः तेन श्रीः सम्पद् येषां तेषां महिषादीनाम् । बाधितसंभ्रमा शमितव्यामोहा । अथेति समुच्चये । सीमा रामाणामङ्गनानामवधिभूता । आदिजा पुरातनी । उमा गौरी मे शं सुखं दिश्यात् । अयं खड्गबन्धः ।

सरलेति । बहुलारम्भतरलानां प्रचुरसंरम्भचञ्चलानामलिकुलानां भृङ्गपरिकराणाम् आरवो झङ्कारो यस्याम् । वारला हंस्यः ताभिर्बहुला । करं बलिं

१. 'विश्वसृष्टेः प्रसि', २. 'ण्डा खण्ड', ३. 'बः' क. घ. पाठः. ४. 'तिम्रा' ख. ग. पाठः.

भासते प्रतिभासार! रसाभाता हताविभा।
भावितात्मा शुभा वादे देवाभा बत ते सभा॥

पद्मबन्धः।

---

सम्प्रदायप्रकाशिनी

दण्डग्राहिणो भूपा यस्यां सा। बहुलामला बहुलपक्षेऽपि निर्मला, मेघाभावात्। शरद्वर्णनमिदं मुरजबन्धः। यत्र पादैश्चतुर्भिः पङ्क्तिचतुष्कम्। पादसङ्घयोरक्षरचतुष्कयोः प्रथमपङ्क्तेरादितोऽन्ततश्च रेखाद्वयेनैका वध्रा। स प्रथमः पादः। द्वितीयपङ्क्त्यादि यावत् तृतीयपङ्क्त्यन्तमेकं मुखम्। यत्र प्रथमायाः पङ्क्तेर्द्वितीयतृतीययोः, द्वितीयायास्तृतीयायाश्चतुर्थ्याः, चतुर्थ्यास्तृतीयद्वितीययोश्च रेखा भवन्ति। स द्वितीयः पादः। द्वितीयपङ्क्त्यन्तादि यावत् तृतीयपङ्क्त्यन्तं द्वितीयं मुखम्। रेखा पूर्ववैलोम्येन। स तृतीयः पादः। चतुर्थपङ्क्तेरादितोऽन्ततश्च प्रथमवध्रावैलोम्येन वध्रान्तरम्। स चतुर्थः पादः।

भासत इति। हे प्रतिभासार! प्रज्ञयोपादेयभूत!। रसाभाता रसेन समन्तादुपशोभिता। हताविभा निराकृताज्ञाना। भावितात्मा सत्संस्कारोपरञ्जितहृदया। वादे शुभा विजिगीषायां तत्त्वमीमांसायां चाव्याकुला। अतएव देवाभा सुधर्मासदृशी। तव सभा भासते त्वदीया समज्या विभाति। बतेति कौतुके। अयं पद्मबन्धः। कर्णिकायामाद्यक्षरं दलेषु द्वे द्वे इति सप्तदशकम्। दिग्दलेषु यथायोगं निर्गमप्रवेशौ। विदिग्दलेषु क्रमप्राप्तः प्रवेशो निर्गमो वा।

साहित्यचूडामणिः

लान्ति आददत इति करला राजानः। असन्दाः सन्नाहवन्तः करला यस्याम्। अबहुलेन शुक्लेन पक्षेणामला विशदा शरद्। असौ मुरजबन्धः।

भासत इति। हे प्रतिभासार! प्रज्ञाविशेषानुप्राणनारसेन प्रीतिरूपेण आभाता परितःशोभिता। हताविभा तिरस्कृतनिस्तेजस्का। भावितात्मा संस्कृतान्तःकरणा। शुभा वादे वचने कल्याणी। देवाभा सुपर्वसदृशी। ते सभा भासते। बतेत्यद्भुते। एतदष्टदलं पद्मम्।

---

१. 'कवन्धाः स' क. घ., 'कावन्धा स' ख. पाठः. २. 'त्मा सं', ३. 'ता। शु' क. ख. पाठः. ४. '(न्दादो? न्नाहो)युक्ता भव', ५. 'णादर', ६. 'निराकृत' घ. पाठः.

रसा साररसासार! सायताक्ष! क्षतायसा।
सातावात! तवातासा रक्षतस्त्वस्त्वतक्षर! ॥

सर्वतोभद्रम्।

---

सम्प्रदायप्रकाशिनी

**रसासारेति। रसा भूः। सारस्योत्कृष्टस्य रसस्य आसार! धारासम्पातभूत!। सा तादृशी। आयताक्ष! दीर्घनयन!। क्षतायसा शमितक्लेशा। सात! सुखात्मक!।अवात! अचपल!। तव ते। अतासा 'तसु उपक्षये' अनुपक्षया। रक्षतस्तु अवतः पुनः। अस्तु भूयात्। 'तक्षू तनूकरणे', अतक्षं वृद्धिं रातीत्यतक्षर। हे साररसासार! आयताक्ष! सात! अवात! अतक्षर! रक्षतस्तव तु सा क्षतायसा रसा अतासास्तु। इदं सर्वतोभद्रम्। यत्र पादैश्चतुर्भिः पङ्क्तिचतुष्कम्। अनुलोमप्रतिलोमपाठाभ्यां सैव पादस्थितिः। चतुर्ष्वपि पादेषु प्रथमपादादारभ्य आद्यैरधोधश्चतुर्भिः अन्त्यपदादारभ्योत्तरोत्तरैरन्त्यैश्चतुर्भिः प्रथमः पादः। एवं द्वितीयैः सप्तमैश्च द्वितीयः। तृतीयैः षष्ठैश्च तृतीयः।चतुर्थैः पञ्चमैश्च चतुर्थः।क्रमव्युत्क्रमाभ्यां च श्लोकस्य द्विर्लेखे (?) प्रथमैरक्षरैः प्रथमः पादः।तथा द्वितीयतृतीयचतुर्थैर्द्वितीयतृतीयचतुर्थाः। तथाष्टमैराद्यः। सप्तमषष्ठपञ्चमैर्द्वितीयतृतीयचतुर्थाः इत्यादि वैचित्र्यं ज्ञेयम्।**

साहित्यचूडामणिः

हे साररसासार! उत्कृष्टशृङ्गारादिप्रसरणातिशय!। आयताक्ष! विशाललोचन!। सात!। सुखस्वभाव! अवात! अतरल!। अतक्षर!, तक्ष्णोतिस्तनूकरणार्थः, तक्षं राति ददातीति तक्षरः तद्व्यतिरिक्त!। क्षतः खण्डितः आयो वार्तायतिर्यैः तानरातीन् स्यति नाशयतीति (क्षतायसा)। अतासा अनुपक्षया। सा प्रक्रान्ता। रसा भूमिः। तव रक्षतस्त्रायमाणस्य। अस्तु यथोक्ता भवत्वित्याशीः। इदं सर्वतोभद्रम्।

---

१. 'या' ग. ङ. पाठः. २. 'ता' ङ. पाठः. ३. 'दा' ग. पाठः. ४. 'न्यै' क. घ. पाठः.

सम्भविनोऽप्यन्ये भेदाः शक्तिमात्रप्रकाशका नतु काव्यरूपतां दधतीति न प्रदर्श्यन्ते॥ ८ ॥

**पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।**

**एकार्थतेव**

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेनेव मुखेऽवभासनं पुनरुक्तवदाभासः। स च,

सम्प्रदायप्रकाशिनी

एवं चक्रादयो बन्धविशेषा बहवः सम्भवन्ति। तेषु शक्तिमत्त्वमात्रप्रदर्शनाय कविना दिङ्मात्रेण रन्तव्यं, नतु तत्र काव्यधीः कार्येत्याह— **सम्भविनोऽप्यन्य** इत्यादि ॥ ८ ॥

एवं शब्दालङ्कारान् लक्षयित्वा उभयालङ्कारं पुनरुक्तवदाभासं लक्षयति— **पुनरुक्तवदाभास** इत्यादि । **विभिन्नाकारेषु सार्थकेषु अनर्थकेषु** वा शब्देषु यदेतत् प्रमुखे पौनरुक्त्यावभासनं, स पुनरुक्तवदाभासः।

साहित्यचूडामणिः

अत्र चित्रबन्धे न निर्बन्धो न्याय्य इत्याह—**सम्भाविनोऽपीति** ॥ ८॥

**पुनरुक्तवदिति** । इवशब्देन लक्ष्यगतो वतिप्रत्ययो व्याख्यायते । यत् सूत्रं 'पुनरुक्तवदाभासमभिन्नवस्त्विवोद्भासी'ति ।

**सार्थकानर्थकेति** । नखलु

"तदाप्रभृति निस्सङ्गो नागकुञ्जरकृत्तिभृत् ।
शितिकण्ठः कालगलैस्सतीशोकानलव्यथः ॥"

इत्यत्र शितिकण्ठशब्दापेक्षया पौनरुक्त्यशालिनः कालगलेच्छब्दस्यार्थवत्ताशत्रन्ततया पदान्तरत्वात् । नन्वन्यपौनरुक्त्यप्रतिभासपरमार्थत्वे किमित्येतद् दोषकक्ष्यामतिक्रम्य भूषणमध्यम(ध्या)स्त इति चेन्न । तात्पर्यानुसरणे पौनरुक्त्यप्रतिभाया एव निवर्त्यमानत्वात् । एनं विभजते— **स चेति** ।

१. 'क्तिमत्त्वप्र' क. घ., 'क्तिमात्रप्र' ङ. पाठः. २. 'षु य', ३. 'लः स', ४. 'लश्चब्द' ग. पाठः.

शब्दस्य

सभङ्गाभङ्गरूपः केवलशब्दनिष्ठः । उदाहरणम् —

अरिवधदेहशरीरः सहसारथिसूततुरगपादातः ।

भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥

---

सम्प्रदायप्रकाशिनी

स च शब्दस्य शब्दमात्रस्य सम्भवति ।

सभङ्गश्लेषनिष्ठमुदाहरति—अरिवधदेहेत्यादि । अरिवधं ददा-तीति अरिवधदा ईहा इच्छा येषां तादृशान् शरिणो धानुष्कान् ईर-यति प्रेरयति सोऽयमरिवधदेहशरीरः । सहसा झटिति रथिभिः सूताः सुष्ठु प्रोतास्तुरगाः पादाताश्च येन सः । सदानत्या साधुभ्यः प्रणा-मेन । स्थिरतायामगः स्थैर्ये पर्वतः अवनितलतिलको भाति । अत्र देहशरीरसारथिसूतदानत्याग इत्येते एकार्थतयावभासन्ते । अत्र देह-शरीरशब्दौ सभङ्गौ सार्थौ । सारथिसूतशब्दौ अभङ्गौ सार्थौ । तथा दानत्यागशब्दौ अनर्थकौ सभङ्गौ ।

साहित्यचूडामणिः

शब्दस्येति । शब्दालङ्कारतयोद्दिष्टत्वात् ।

सभङ्गाभङ्गेति श्लेषच्छायया विभागः । उभयाश्रयतयापि वक्ष्यमाण-त्वात् ।

अरिवधेति । अरीणां शत्रूणां वधं ददती ईहा चेष्टा येषां तादृशा ये शरिणः शरवन्तः धानुष्काः तानीरयति प्रेरयतीति । सहसा सद्यः रथिभिः स्यन्दनारूढैः सूतं प्रेरितं तुरगपादातं यस्य । सदानत्या सतां महापुरुषाणां प्रणामेन । अगः स्थिरतायां स्थैर्ये पर्वतभूतः । अत्र देहशरीरयोः सारथिसूतयो-र्दानत्यागयोः सभङ्गयोर्निरर्थकयोरेव पौनरुक्त्यप्रतिभा ।

---

१. 'दति' क. घ. पाठः. २. तच्छरीरि' क. ग. घ. ङ. पाठः. ३. 'प्रेरिताः' क. ख. घ. पाठः. ४. 'तेत्यादावर्थानपेक्षसभङ्गनिबन्धनोऽभिन्नार्थतेवावभासः । च' क. ख., 'ते ...... भङ्गवन्निव ...... भासते । च' ग., 'ते ...... भङ्गपद ...... भासते । च' ङ. पाठः.

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः॥

**तथा शब्दार्थयोरयम् ॥ ९ ॥**

उदाहरणं —

तनुवपुरप्यन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः।
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः॥

---

सम्प्रदायप्रकाशिनी

**चकासतीति**। रामा मनोरमाः। सुमनसः साधुचित्तस्य। अत्राङ्गनारामाः सुमनसो विबुधा इत्यभङ्गपदनिबन्धनः।

शब्दार्थनिबन्धनमाह— **तथा शब्दार्थयोरिति**।

**तनुवपुरिति**। तनुवपुः कृशदेहः। करिकुञ्जराः करिश्रेष्ठाः। रुधिररक्ताः शोणितारुणाः। तेजोधाम तेजोनिकेतनञ्च। जिष्णुर्जयशीलः। अत्र तनुवपुःकरिकुञ्जररुधिररक्तेत्यादौ शब्दार्थयोर्भिन्नार्थतैवावभासः।

साहित्यचूडामणिः

**चकासतीति**। अङ्गनेषु अजिरेषु आरामाः आक्रीडाः। कौतुकमुत्सवविशेषः तद्रूपानन्ददायिनः। अत्राङ्गनारामयोः कौतुकानन्दयोश्च निरर्थकसार्थकयोरामुखे पौनरुक्त्यम्। सुमनसः साधुहृदयाः। विबुधा विद्वांसः। अनयोर्निरर्थकयोरेवाभङ्गयोः पौनरुक्त्यप्रतिभा।

उभयालङ्कारत्वमप्यस्याह— **तथेति**। यथा केवलस्य शब्दस्य तथा शब्दार्थयोरुभयोरप्ययमलङ्कारः।

**तनुवपुरिति**। अल्पशरीरः। करिकुञ्जरा गजश्रेष्ठाः। 'वृन्दारक—' (२-१-६२) इत्यादिना समासः[३]। रुधिरेण रक्ताः पाटलाः। तेजसो धाम स्थानभूतः। पृथुमनसां सत्त्वोद्रिक्तानामिन्द्रः श्रेष्ठः। हरिः सिंहः। जिष्णुर्जयशीलः। अत्र तनुवपुषोः करिकुञ्जरयोः तेजोधाममहसाम् इन्द्रहरिजिष्णूनां च पौनरुक्त्यस्फुरत्ता।

---

१. 'तै' ङ. पाठः. २. 'सज्ञात्।ञ' घ. पाठः. ३. 'सः। सः इ' ग. पाठः.

अत्रैकस्मिन् पदे परिवर्तिते नालङ्कार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्तितेऽपि स न हीयते इत्यर्थनिष्ठ इत्युभयालङ्कारोऽयम् ॥ ९ ॥

इति काव्यप्रकाशे शब्दालङ्कारो नाम

नवम उल्लासः ।

सम्प्रदायप्रकाशिनी

अस्योभयालङ्कारतां विविच्य दर्शयति — **अत्रैकस्मिन्नि**त्यादि । **एकस्मिन्** श्लिष्टे । अनेन शब्दान्वयव्यतिरेकानुविधायित्वं दर्शितम् । **अपरस्मिन्** अश्लिष्टे । **न स हीयत** इत्यनेन शब्दाश्रयत्वविरहः । अत उभयालङ्कारोऽयम् ॥ ९ ॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-
पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्य-
काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-
योगीश्वरश्रीमत्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-
श्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यां
काव्यप्रकाशबृहट्टीकायां

नवम उल्लासः ।

साहित्यचूडामणिः

**एकस्मिन् पद** इति । तनुकुञ्जरधामहर्यादौ । **अपरस्मिन्नि**ति । वपुःकरितेजःप्रभृतौ । अतश्चायमुभयालङ्कार इति सिद्धम् ॥ ९ ॥

इत्थं प्रणीतानि परीक्ष्य पूर्वैरुक्तानुसारीणि विभूषणानि ।
यदेवमन्यत् परिवृत्तिरेखापराङ्मुखं तत् स्वयमूहनीयम् ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां

नवम उल्लासः ।[1]

---

१. 'यां शब्दालङ्कारविवेचनो नाम न' ख. घ., 'यां शब्दालङ्कारविवेचनो नव' ग. ङ. पाठः.

# अथ दशम उल्लासः ।

अर्थालङ्कारानाह —

सम्प्रदायप्रकाशिनी

## अथ दशम उल्लासः ।

सङ्गतिमासूत्रयति — अर्थालङ्कारानिति[2] ।

साहित्यचूडामणिः

## अथ दशम उल्लासः ।

वन्दे वाणीं रसोत्कर्षमहोत्सवविहारिणीम् ।
सर्वाङ्गीणसमुन्मीलदमूल्यमणिभूषणाम् ॥
उपमानन्वयौ पूर्वमुपमेयोपमा ततः ।
अथोत्प्रेक्षा ससन्देहरूपकापह्नवा इति ॥
श्लेषः सह समासोक्त्या द्विविधा च निदर्शना ।
अप्रस्तुतस्तुतिः पञ्चभेदा सातिशयोक्तिका ॥
प्रतिवस्तूपमा पश्चादुभे दृष्टान्तदीपके ।
तुल्ययोगो व्यतिरेकः सहाक्षेपो विभावना ॥
विशेषोक्तिर्यथासङ्ख्यं न्यासश्चार्थान्तरस्य यः ।
विरोधोऽथ स्वभावोक्तिव्याजस्तुतिसहोक्तयः ॥
विनोक्तिपरिवृत्ती द्वे भविकं काव्यलिङ्गकम् ।
पर्यायोक्तमुदात्तं च द्विप्रकारः समुच्चयः ॥
पर्यायश्चानुमानं च पश्चात् परिकरश्च यः ।
व्याजोक्तिपरिसङ्ख्ये द्वे माला कारणपूर्विका ॥
अन्योन्यमुत्तरं सूक्ष्मसारासङ्गतयः पृथक् ।
समाधियुक्तं च समं विषमं च सहाधिकम् ॥
प्रत्यनीकं मीलितं च क्रमादेकावलीत्यपि ।
स्मरणभ्रान्तिमन्तौ च प्रतीपं च द्विधा ततः ॥
सामान्यं च विशेषश्च तद्गुणातद्गुणावपि ।
व्याघातश्चेत्यलङ्कारा येषां संसृष्टिसङ्करौ ॥

---

१. 'अथार्था' क. पाठः. २. 'ति । वै' ख. ग. ङ. पाठः. ३. 'ति' घ. पाठः. ४. 'पो' ग. पाठः.

**साधर्म्यमुपमा भेदे,**

उपमानोपमेययोरेव, न कार्यकारणादिकयोः, साधर्म्यं

संप्रदायप्रकाशिनी

प्रकारवैचित्र्येण बह्वलङ्कारबीजभूतामुपमां प्रथमतो लक्षयति—**साधर्म्यमुपमा भेद** इति। उपमानोपमेययोर्भेदप्रतीतौ यत् साधर्म्यं, स उपमालङ्कारः।

व्याचष्टे—**उपमानोपमेययोरित्यादि**। साधर्म्येणोपमानो-

साहित्यचूडामणिः

इति षष्टिश्चतस्रश्च भूषाः काव्यार्थसम्पदः।
वाचः सर्वापि वैचित्री यदन्तः पर्यवस्यति॥
न साधर्म्येण खचितो वर्गशः क्रियते क्रमः।
स्वातन्त्र्यादुद्धरीकर्तुमेकैकस्य चमत्क्रियाम्॥
आसां भेदे प्रभेदे च तदुन्नेये च विस्तरे।
न समस्ति यदन्तस्तद्बहिरप्यस्ति न क्वचित्॥

अथ शब्दालङ्कारानुक्त्वा क्रमादर्थान् वक्तुमुपक्रमते—अर्थेति। आदौ तावद्

"यतः सर्वेष्वलङ्कारेषूपमा जीवितायते।
रूपकादिरलङ्कारवर्गोऽयमतएव हि॥
तत्प्रपञ्चतयाख्यातः कैश्चित् तत्त्वार्थदर्शिभिः।"

इति व्यक्तिविवेकयुक्त्या सर्वालङ्कारजीवितभूतां भट्टवामनाद्युपलालितामुपमामाह—**साधर्म्यमिति**। यत् सूत्रम्—'उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्व उपमा' (राजानकसूत्रं ११) इति। यत्र किञ्चित् सादृश्यं कश्चिच्च विशेषः, स विषयः साधर्म्यस्य।

ननु किंसम्बन्धि किमेतत् साधर्म्यमित्यपेक्षायामाह—**उपमानेति**।

१. 'र्म्यं भ' ख. पाठः. २ 'जन्मभू' क. घ. पाठः. ३. 'द्ध' घ. पाठः. ४. 'दर्थालङ्कारं व' क. ख. ग. पाठः.

संभवतीति तयोरेव समानेन धर्मेण सम्बन्ध उपमा । भेद-ग्रहणमनन्वयव्यवच्छेदार्थं ।

**पूर्णा लुप्ता च,**

सम्प्रदायप्रकाशिनी

पमेययोराक्षेप इत्याह—**तयोरेवेति** । कार्यकारणयोर्नह्येकधर्मता । आदिशब्दाद् ज्ञाप्यज्ञापकयोर्विधर्मता । साधर्म्यपदं निर्वक्ति—**समानेन धर्मेणेति** । ननु साधर्म्यग्रहणादेव सम्भावनादिरूपोत्प्रेक्षादि-व्यवच्छेदः सिद्धः, भेदपदेन किं व्यावर्त्यत इत्यत आह—**भेदग्रहणमित्यादि** । अनन्वये हि साधर्म्यसम्भवेऽप्येकस्यैवोपमानोपमेयत्व-मिति नास्ति भेदः ।

द्वैरूप्यमस्या दर्शयति—**पूर्णा लुप्ता चेति** ।

साहित्यचूडामणिः

साधर्म्यस्वभावादेव तत्संबन्धिनोरुपमानोपमेययोः सिद्धिः । यतः साधर्म्यलक्षणः सम्बन्धः सम्बन्ध्यन्तरयोः कार्यकारणादिकयोर्न संघटते । तत्सूत्रे तु तथोपादान-मन्यतात्पर्येण व्याख्यातम् । ननु सादृश्यादयो भ्रान्तिगोचरा इति केषांचित् पक्षः । यथाहुः—

"संयुज्यन्ते न भिद्यन्ते स्वतोऽर्थाः पारमार्थिकाः ।
रूपमेकमनेकं तु तेषु बुद्धेरुपप्लवः ॥"

इति । तत् कथमुपमाद्यलङ्कारचिन्तेति चेत् । न । स्थैर्यस्यार्थक्रियायाश्च विद्य-मानत्वात् । यथाचाहुः—

"क्रियासम्बन्धसामान्यद्रव्यदिक्कालबुद्धयः ।
सतां स्थैर्योपयोगार्थमेकानेकाश्रया मताः ॥"

इति । किञ्च काव्यव्यवहारे सत्यासत्यत्वनिरूपणमनुपयोगमित्यास्माकीनः पन्थाः । भेदग्रहणमनन्वयं व्यवच्छेत्तुमित्याह—**अनन्वयेति** ।

विभागमाह—**पूर्णेति** । उपमानमुपमेयं साधारणो धर्मः उपमाप्रति-

१. 'र्थम् ।' क. पाठः. २. 'योर्ह्येक' ख. ग. घ. ङ. पाठः. ३. 'र्म्ये', ४. 'नाक' ग. पाठः. ५. 'र्न संघ' घ. पाठः. ६. 'ते । सूत्रे' ग. घ. पाठः. ७. 'र्म्या', ८. 'त्व व्यव' ग. पाठः.

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता।

**साग्रिमा ।**

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा॥ १॥**

अग्रिमा पूर्णा। यथेववाशब्दा यत्परास्तस्यैवोपमानता-

सम्प्रदायप्रकाशिनी

व्याचष्टे— उपमानोपमेयेत्यादि। उपमीयते सादृश्यं नीयते येन उत्कृष्टगुणेन तदुपमानम्। यत् पुनरुपमीयते सादृश्यं नीयते निकृष्टगुणं वस्तु, तदुपमेयम्। उभयत्र दत्तपदः साधारणो धर्मः। इवादय उपमाप्रतिपादकाः। एषां चतुर्णामपि शब्दसमर्पितत्वे पूर्णा। एष्वेकद्वित्र्यनुपादाने त्रिधा लुप्ता। एवं पूर्णैका लुप्तास्तिस्रः इति सामान्यतश्चतुर्धा।

पूर्णा षोढा दर्शयति—साग्रिमेत्यादि। वाक्ये समासे तद्धिते चेति त्रिषु विषयेषु श्रौती आर्थी चेति प्रतिस्वं द्विधा भिद्यमाना षोढोपजायत इत्यर्थः।

तत्रेवादिपदोपादाने श्रौतत्वमाक्षेपपुरस्कारेण प्रतिष्ठापयति — यथेवेत्यादि। यथेववादयो हि शब्दा यतः पराः श्रूयन्ते तस्यैव शब्द-

साहित्यचूडामणिः

पादका इवादयश्चेति चतुर्णां कण्ठोक्तौ पूर्णा। तेषामेकद्व्यादेः शास्त्रीये स्वारसिके वा लोपे लुप्ता।

अग्रिमा आद्या पूर्णा। यदुद्भटः—

"यथेवशब्दयोगेन सा श्रुत्यान्वयमर्हति।
सदृशादिपदाश्लेषादन्यथेत्युदिता द्विधा॥"

१. 'र्थि' क. घ. पाठः. २. 'द्धा इव जा' ङ. पाठः.

प्रतीतिरिति यद्यप्युपमानविशेषणा एते, तथापि शब्दशक्ति-महिम्ना श्रुत्यैव षष्ठीवत् सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। तथैव 'तत्र तस्येव' (५-१-११६) इत्यनेनेवार्थे विहितस्य वतेरुपादाने।

सम्प्रदायप्रकाशिनी

स्यार्थे उपमानतया नियमेन प्रतीयत इत्युपमानस्यैव भेदका एते, उपमेयाभिसम्बन्धस्त्वार्थ इति यद्यपि प्रतिभासस्तथापि साधर्म्यस्यैक-त्वात् शब्देनैव साधर्म्यं प्रतिपादयन्ति। शब्दशक्तेः खल्वयं महिमा— यन्नियमेनोपमानविशेषणाश्च भवन्तीवादयः द्विष्ठमपि सम्बन्धं श्रुत्यैव प्रतिपादयन्ति षष्ठीवत्। यथा षष्ठी नियमेनोपसर्जनविशेषणभूतापि राज्ञः पुरुष इत्यादौ द्विष्ठमपि सम्बन्धं श्रुत्यैवावगमयति। अत्र श्लोकः—

"भेदकत्वेऽपि नियते षष्ठीवदिववादयः।
द्विष्ठं श्रुत्यैव सम्बन्धं गमयन्ति स्वभावतः॥"

इत्थञ्च सति यथेवादिप्रयोगो यदा तदोपमा श्रौत्येवेति सिद्धम्। अथ यदा तद्धिते श्रौती, तदा साक्षादिवाद्यभावेऽपि तदर्थवत्युपादानाद् भवतीत्याह—तथैवेत्यादि। 'तत्र तस्येव' (५-१-११६) इतीवार्थे

साहित्यचूडामणिः

इति। वाक्यं विग्रहरूपम्। पदानां विशेषणविशेष्यभावपर्यवसायि सामर्थ्यं समासः। यथेववाशब्दानां सद्भावे श्रौती। (उपमानेति)। उपमानमुपमान-तया विशिंषन्ति व्यवच्छिन्दन्तीति कृत्वा। ननु कथमेकत्र शृङ्खलितानामिवा-दीनामौभयिकसंबन्धप्रत्यायनप्रागल्भ्यमिति चेदाह— षष्ठीवदिति। यथा राजपुरुष इति राजनिष्ठा षष्ठी पुरुषमप्याक्षिपति तदुभयनिष्ठं संबन्धं समर्प-यति एवमिवादयोऽपि। यथाहुः— 'शब्दशक्तेर्महिमा न पर्यनुयोगमर्हती'ति। एवमत्रापि। वाक्यवत् तद्धितेऽपि योजयति— तथैवेति। यद्वदिवप्रयोगे

१. 'णका ए' क. पाठः. २. 'द्वि' क. घ. पाठः. ३. 'सते तथा' ख. ग. पाठः ४. 'न्ति' क. घ. पाठः. ५. 'त्। ष' ङ. पाठः. ६. 'णनियमीभू' क. ख. ग. पाठः. ७. 'नीयन्ते ष' ख. पाठः. ८. 'तत्रैव तस्यैवेती' क. घ., 'तत्रैव तस्येवेती' ख. पाठः.

तेन तुल्यमित्यादावुपमेय एव, तत् तुल्यमस्येत्या-दावुपमान एव, इदं च तच्च तुल्यमित्युभयत्रापि तुल्यादि-शब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीति-रिति तत्र तत्र साधर्म्यस्यार्थत्वात् तुल्यादिपदोपादाने आर्थी। तद्वत् 'तेन तुल्यं —' (५-१-११५) इत्यादिना विहितस्य

सम्प्रदायप्रकाशिनी

योऽयं वतिर्विधीयते तस्येवादिसमानन्यायत्वात् तत्सद्भावेऽपि श्रौ-त्येव । इत्थं वाक्यसमासयोः साक्षादुपादानमिवादेः, तद्धिते तु तदर्थ-वतिसद्भाव इति सर्वत्र श्रौतत्वे प्रयोजकमिवाद्येवेति बोद्धव्यम् ।

अथ यथा श्रौतत्वमिवादिसद्भावैकनिबन्धनं तद्वदार्थत्वमपि तुल्या-दिपदसद्भावैकनिबन्धनमित्यारभते—तेन तुल्यमित्यादिना । तुल्य-सदृशादिकं पदं तेनेदं तुल्यमित्यादावुपमेयविशेषणत्वेनैव विश्राम्यति। तत् तुल्यमस्येत्यादावुपमानविशेषणत्वेनैव । इदं च तच्च तुल्यमित्यत्र तूभयत्र विश्राम्यति । अतो नियमेनैकतरविशेषणत्वाभावात् साम्यपर्या-लोचनमुखेनैव तुल्यप्रतीतिर्व्यवतिष्ठते । अतः साधर्म्यमर्थादायातमिति तुल्यादिपदोपादाने आर्थ्येव । अथ यथा तद्धितगतत्वेनार्थी तथा तुल्या-दिपदाभावेऽपि तदर्थवतिसद्भावाद् भवतीत्याह—तद्वत् तेन तुल्य-

साहित्यचूडामणिः

वाक्ये श्रौती एवमिवार्थे 'तत्र तस्ये'ति विहितस्य वतिप्रत्ययस्योपादाने अविशे-षात् ।

आर्थीमाह — तेनेति । इदं च तच्चेति चकारौ यौगपद्ये । साम्यम् औपम्यम् इवादिषु यच्छ्रौतं तस्य पर्यालोचनया । यथेवादीनामेकत उपादीय-मानानामपि प्रतियोगिसंबन्धाभिधानव्यतिरेकेण पर्यवसानाभावादन्यत्रापि वि-श्रान्तिः, तुल्यादीनां पुनरेकत्र युगपदुभयत्र वा तात्पर्यं नत्वन्यत्रापि, एवं तद्धितेऽपीत्याह — तद्वदिति । समासे श्रौतीमाह — इवेनेति । अत्रार्थी

१. 'त्र स' क. पाठः. २. 'त्संभवे' ग. पाठः. ३. 'हि' ङ. पाठः. ४. 'वति' ख. ग. ङ. पाठः. ५. 'र्थंस' क. घ. पाठः. ६. 'णाभा' ग. पाठः. ७. 'साधर्म्यप'

वतेः स्थितौ । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' (वा० २-१-४) इति नित्यसमासे इवशब्दप्रयोगे समासगा । क्रमेणोदाहरति —

स्वप्नेऽपि समरे[1]षु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥

सम्प्रदायप्रकाशिनी

मित्यादि । 'तेन तुल्यं क्रिया चेद्वतिः' (५-११-१५) इति तेन तुल्यमित्यर्थे योऽयं वतिर्विधीयते, तत्र सति ताद्धितगतत्वेन भवत्यार्थी । इत्थञ्च सति साक्षादिवादिप्रयोगे वाक्यगा समासगा च, इवार्थवतिस्थितौ तु ताद्धितगा[4] चेति इवादिनिबन्धना श्रौती त्रिधा । तथा साक्षात् तुल्यादिपदोपादाने वाक्यगा समासगा च, तदर्थवतिस्थितौ तद्धितगा चेत्यार्थ्यपि तुल्यादिपदनिबन्धना त्रिधा । इत्थं पूर्णा षोढा । नन्विवादिसद्भावे समासगा कथमित्यत आह — इवेन विभक्तीत्यादि । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' इत्यनेनेवशब्दयोगे यदा नित्यसमासस्तदा श्रौती समासगा ।

यथोद्देशमुदाहरणं — स्वप्नेऽपीति । अत्र वर्ण्यनायकस्योपमेयत्वम् । कान्तः कामुकः तस्योपमानत्वम् । प्रभावस्य सामदण्डादि-

साहित्यचूडामणिः

प्रसिद्धा ।

स्वप्नेऽपीति । प्रभावप्रभवत्वं समानो धर्मः ।

''स्वाधीनपतिका सा तु यस्याः पार्श्वं न मुञ्चति ।
पतिश्चित्ररतक्रीडारसास्वादनलोलुपः ॥''

अत्र यथापदप्रयोगाद् वाक्यं श्रौती पूर्णोपमा ।

---

१. 'रे त्वां वै वि' क. पाठः. २. 'स्वतिस्ताद्धि', ३. 'गतेति', ४. दिपदनि' ङ. पाठः. ५. 'ना त्रिधा श्रौती । त' क. घ. ङ., 'ना श्रौतीति त्रिधा । त' ग. पाठः. ६. 'गता चे' ग. ङ. पाठः. ७. 'र्णनना' ङ. पाठः.

चकितहरिणलोललोचनायाः
क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः
सममिति चेतसि सम्मदं विधत्ते ॥

अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैः[2] प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सहायो[3]
लक्ष्मीविलासभवनैर्भुवनं बभार ॥

---

सम्प्रदायप्रकाशिनी

परिज्ञानप्रकर्षस्य तथा लावण्यवैदग्ध्याद्यतिशयस्य च प्रभवभुत्पत्ति-क्षेत्रम् । अयं साधारणो धर्मः । यथेत्युपमामतिपादक इति वाक्यगेयं श्रौती पूर्णा ।

अथार्थी वाक्यगा — चकितहरिणेति । तारा उज्ज्वला । हारिणी हृदयङ्गमा । सम्मदो हर्षः । अत्र सरसिजमाननं च सममिति समपदस्योभयत्र विश्रान्तिरिति साम्यपर्यालोचनादार्थी वाक्यगा । पूर्णत्वं प्राग्वदुपमेयादिचतुष्टयसद्भावात् ।

अथ समासगा श्रौती — अत्यायतैरिति । अत्यायतत्वमुद्धत-नियमकारित्वं, प्रभास्तेजांसि ताभिर्दिव्यत्वम् , अपायरहितत्वं, चतुष्ट्वं लक्ष्मीविलासभवनत्वं च उपायभुजयोः, आयेनागमनेन सह वर्तत इति तथा सहायभूत इति च शब्दसाधर्म्यरूपं सहायत्वं भुवनभर्तृत्वं

साहित्यचूडामणिः

चकितेति । अत्र समशब्दप्रयोगाद् वाक्य एवार्थी ।

अत्यायतैरिति । भुजैरिवेति नित्यसमासः । अत्र श्रौत्युपमा । विभ-क्त्यलोप इत्यनेन विशेषणविशेष्यभावादिसंबन्धक्षमत्वं ज्ञाप्यते ।

---

१. 'त' क. पाठः. २. 'चिन्त्यैः प्रजाभि', ३. 'दा' क. ख. पा :. ४. 'भा' क. ख. ग. पाठः. ५. 'वत् । अ' ख., 'वं क्षे' ग. पाठः. ६. 'ति प', ७. 'साधर्म्यप' क. घ. पाठः. ८. 'दिसंभवा' ख. पाठः.

**अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।**
**सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर! न कस्य ॥**
**गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।**
**दुरालोकः स समरे निदाघाम्बररत्नवत् ॥**

सम्प्रदायप्रकाशिनी

च नायकसुरार्योः साधारणधर्माः । स्रुजैरिवेतीवशब्दो नित्यसमासगः । अत इयं समासगा पूर्णा श्रौती ।

**अवितथेति** । अत्र चिन्तितार्थसम्पादनेषु श्रियः[2] प्रगुणगरिमगीतत्वं[3] नायकसुरशाखिनोः साधर्म्यम् । सदृशपदं समासगमित्यार्थी समासगा ।

**गाम्भीर्यगरिमेति** । अम्बररत्नं सूर्यः । अत्र प्रथमार्धे वतिः 'तस्येव' (५-१-११६) इति विहितः । अतः[4] श्रौतीयं तद्धितगा । उत्तरार्धे अम्बररत्नेन तुल्यं दुरालोक इति[5] तु 'तेन तुल्यम्' (५-१-११५) इति । अत्र आर्थी । इत्थं पूर्णा षड्विधा । अत्र श्लोकाः —

इवादिना निपातेन साधर्म्यप्रतिपादने ।
श्रौती पूर्णोपमा ज्ञेया द्विधा वाक्यसमासयोः ॥
आर्थी नाम पदेनैषा साधर्म्यप्रतिपादने ।
तुल्यादिना तु विज्ञेया द्विधा वाक्यसमासयोः ॥
तथा वतेरिवार्थत्वे श्रौती तद्धितगा मता ।
तुल्यार्थत्वे वतेस्तु स्यादार्थीयं षड्विधा ततः ॥

साहित्यचूडामणिः

**सुरतरुसदृश** इति समास आर्थी ।

**गाम्भीर्येति** । गङ्गाभुजङ्गः समुद्रः । 'तस्येव' (५-१-११६) इति वतिरिति तद्धिते श्रौती[6] । एवं कुरु कर्पूरवत् कौव्यं सत्यं (?)

१. 'या' ङ. पाठः. २. 'णगीतगदितत्वं' ख., 'णगीतगरिमत्वं' ग. ङ. पाठः. ३. 'त्वान्नाय' क. घ. पाठः. ४. 'त्र' ख. ग. पाठः. ५. 'ति ते' क. घ. ङ. पाठः. ६. 'ती । कु' ग. पाठः. ७. 'सत्ये काव्ये काव्याल' घ. पाठः.

स्वाधीनभर्तृका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा जयश्रीस्तदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यं, वैचित्र्यं चालङ्कारः, तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः। नखलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः, अपितु वाच्यवैचित्र्यप्रतिभासादेव। रसादिरूपस्तु व्यङ्ग्योऽर्थोऽलङ्कारान्तरं च सर्वत्राव्यभिचारीति अगणयित्वैव

सम्प्रदायप्रकाशिनी

नन्वव्यङ्ग्यं शब्दार्थविच्छित्तिमयं चित्रमित्युक्तम्, इह तु चित्रोदाहरणेषु व्यङ्ग्यप्रतीतिः स्फुटमुपलभ्यते। अतः पूर्वापरविरुद्धाभिधानमित्यत आह— स्वाधीनभर्तृकेत्यादिना। अमोक्षौपम्यमात्रेण न लोकोत्तरश्चमत्कारः, किन्तु नित्यभजनरूपव्यङ्ग्यसहितेन। वैचित्र्यं ह्यलङ्कारः। अतो व्यङ्ग्यमिह गुणीभवति। अस्ति च रसभावादि ध्वन्यन्तरम्। अतो ध्वनेर्गुणीभूतव्यङ्ग्यस्य वोदाहरणत्वेनैतानि सङ्गच्छन्ते, नतु शुद्धचित्रस्येत्याक्षेपनिष्कर्षः। परिहरति— तथापिन ध्वनिगुणीभूतेत्यादि। सत्यमेतत्। किन्तु न प्रतीयमानार्थसंस्पर्शे चित्रत्वभङ्गः, अपितु शब्दार्थयोः प्रतीयमानार्थनैरपेक्ष्येण वैचित्र्याभावे। इह तु वैचित्र्यं प्रतीयमानार्थनिरपेक्षमेव, वाक्यकक्ष्यायामेवोपमानोपमेयविच्छित्तिप्रतिभासात्। ननु रसान्तरं 'प्रभावप्रभवे'त्यादौ अलङ्कारान्तरकृतं च चारुत्वमस्तीत्यत आह — रसादिरूपस्त्वित्यादि। अगणयित्वेति। अप्रस्तुतत्वादगणनम्। अलङ्कारा उदा-

साहित्यचूडामणिः

काव्ये व्यङ्ग्यालङ्कारान्तरयोः सर्वत्राव्यभिचारात् अलङ्कारा उदाहृता इति सामान्यादुल्लासार्थः सिद्धप्राय उद्भाव्यते। ननु निर्व्यङ्ग्या उदाह्रियन्तामलङ्काराः, येन विषयविवेक इत्यत्राह — तद्रहितत्वेनेति। यद्यपि तृतीयं काव्यमलङ्काराणां शुद्धमुदाहरणं यथा निरलङ्कारमुत्तमं काव्यं रसध्वनेः,

१. 'ननि' क. ख. पाठः. २. 'र्थनैरपेक्ष्यमे', ३. 'रवं' ङ. पाठः.

तदलङ्कारा उदाहृताः । तद्रहितत्वेन तूदाह्रियमाणा विरसता-मावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम् ॥ १ ॥

---

सम्प्रदायप्रकाशिनी

हृताः केवलमुपमाद्यलङ्कारविशेषा एव दर्शिता इत्यर्थः । ननु व्यङ्ग्य-संस्पर्शरहितशुद्धचित्रोदाहरणसम्भवेऽपि किं व्यङ्ग्यादिसहितोदाहरण-प्रदर्शनेनेत्यत आह— तद्रहितत्वेनेत्यादि । विरसतां सहृदयहृद-योद्वेजकतां, शास्त्रस्य कुर्वन्तीति शेषः । यत इत्थमतो न चोदनावकाशः कश्चित् ॥ १ ॥

साहित्यचूडामणिः

नखल्वालङ्कारिकाणां रसध्वनौ निर्बन्धः यथा तृतीयकाव्ये ध्वनिवादिनां, तथापि तद्विषयविभागलोभादुदाह्रियमाणा न चमत्काराय यथा गौरिव गवय इत्युपमा । खलेवालीयूप इति रूपकम् । स्थाणुः पुरुषो वेति सन्देहः । नेदं रजतमित्यपह्नुतिः । पीनो दिवा न भुङ्क्ते इति पर्यायोक्तम् । समुद्रः कुण्डिकेत्य-तिशयोक्तिः । अद्रिरग्निमानित्यनुमानम् । आद्यन्तौ टकिताविति यथासङ्ख्यम् । पुत्रेण सहागतः पितेति सहोक्तिः । श्वेतो धावतीति श्लेषः । एवमन्यदपीति । इत्थं गुणीभूतव्यङ्ग्यालङ्कारान्तरयोः सङ्करेऽप्यपोद्धारबुद्धैरलङ्कारा उन्नेतुं पार्यन्त इति तात्पर्यम् । यदाह —

"रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥"

"ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥"

---

१. 'लोपमालङ्कारविशेषा एव स्थिता' ङ. पाठः. २. 'वे किं' ख. ग. पाठः. ३. 'दयो' क. पाठः. ४. 'त्वं', ५. 'किञ्चित्' ङ. पाठः. ६. 'त्व', ७. 'ङ्काराणां' ग. पाठः. ८. 'णं' घ. पाठः. ९. 'वो' ङ. पाठः. १०. 'द्धे' घ. पाठः. ११. 'थाहि र' क., 'दाहि र' घ. पाठः.

**तद्वद् धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः ।**

---

सम्प्रदायप्रकाशिनी

अथ लुप्ताप्रपञ्चः । तत्र साधारणधर्मनिबन्धनाः पूर्णान्यायेन वाक्यादिषु दर्शयति — तद्वद्धर्मस्येत्यादि । तद्वदिति वाक्ये समासे तद्धिते च । तत्र वाक्यसमासयोः श्रौती चार्थी च । तद्धिते पुनर्न श्रौती, अपित्वार्थ्येव ।

साहित्यचूडामणिः

"वाच्यालङ्कारवर्गोऽयं व्यङ्गयांशानुगमे सति ।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥"

इति । इत्थं स्थिते यदेतदलङ्कार्यप्राधान्यावलम्बनेन प्रवृत्तस्य ग्रन्थकृत इदानीमलङ्कारप्राधान्यपरिग्रहौन्मुख्यं, न तदनवधानशङ्कामुल्लिङ्गयति । गुणीभूतव्यङ्गयध्वनौ तु राजानुगतविवाहप्रवृत्तभृत्यन्यायस्यानुस्मरतीति ॥ १ ॥

भूयो विभजते— तद्वदिति । यदुद्भटः —

"संक्षेपाभिहिताप्येषा साम्यवाचकविच्युतेः ।
साम्योपमेयतद्वाचिविरहाच्च निबध्यते ॥
उपमानोपमेयोक्तौ साम्यतद्वाचिविच्यवात्[2] ।
क्वचित् समासे तद्वाचिविरहेण क्वचिच्च सा ॥
तथोपमानादाचारे क्यच्प्रत्ययबलोक्तितः ।
क्वचित् सा कर्तुराचारे क्यङा सा च क्विपा क्वचित् ॥
उपमाने कर्मणि वा कर्तरि वा यो णमुल् कषादिगतः ।
तद्वाच्या सा वतिना न कर्मसामान्यवचनेन ॥
षष्ठीसप्तम्यन्ताच्च यो वतिर्नामतस्तदभिधेया ।
कल्पप्प्रभृतिभिरन्यैश्च तद्धितैः सा निबध्यते कविभिः ॥"

इति[3] । तद्वदिति पूर्णोपमातिदेशः । वैषम्यांशमाह— न श्रौतीति । साधारणधर्मलोपिनि कल्पबादिप्रयोगे यथेवाद्यनुविधाना[4]भावात् ।

---

१. 'नां' क. ख. ग. घ. पाठः. २. 'रिच्यवाक् ।' ग. पाठः. ३. 'योगिनि', ४. 'नात्' घ. पाठः.

धर्मः साधारणः । तद्धिते कल्पबादौ त्वार्थ्येव । तेन पञ्च । उदाहरणं —

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः! सत्यं तस्यामृतं यथा ॥
आकृष्टकरवालोऽसौ साम्पराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥
करवालइवाचारस्तस्य वागमृतोपमा ।
विषकल्पं मनो वेत्सि यदि जीवसि तत् सखे! ॥

सम्प्रदायप्रकाशिनी

व्याचष्टे — **धर्मः साधारण** इत्यादि । कल्पबादावित्यादिशब्दाद् देश्यदेशीयरो[1]ः परिग्रहः । अतो वाक्यसमासयोर्द्वौ द्वौ तद्धिते तु श्रौत्यभावादेक एव भेदः । तदेतदाह — **तेन पञ्चेति** ।

**धन्यस्येति** । चेत इति सम्बोधनम् । इयं धर्मलोपे श्रौती वाक्यगा । अत्र हि सर्वप्रकारपथ्यत्वादिर्वचोमृतयोः साधारणो धर्मः प्रतीयत एव ।

**आकृष्टकरवाल** इति । इयं सम इत्युक्तेरार्थी ।

**करवालइवेति** नित्यसमासगा श्रौती । अमृतोपमेत्यार्थी । विषकल्पमि[2]ति तु ताद्धितगा आर्थी । इत्थं धर्मलोपे पञ्च ।

साहित्यचूडामणिः

आदिपदेन देश्यदेशीयर्बहुचो गृह्यन्ते । तेनेति । पूर्णायां श्रौत्यार्थीभेदेन षड् भेदाः, इह त्वेकहान्या पञ्च ।

धन्यस्येति । वचनममृतं यथेत्यत्र मधुरिमादेर्न प्रयोगः । यथाश्रुत्या श्रौतत्वम् ।

आकृष्टेति । कृतान्तेन सम इत्यत्र क्रौर्यादि न प्रयुज्यते । करवालाकृष्टिर्न समानधर्मः, यमस्य दण्डायुधत्वात् ।

करवालइवाचार इत्यत्र इवशब्दयोगे नित्यसमासः । इवश्रुत्या श्रौतत्वम् । अमृतोपमेति समास आर्थी । विषकल्पमिवि तद्धित आर्थी ।

---

१. 'यो:' क. घ. पाठः. २. 'ति त' ङ. पाठः.

**उपमानानुपादाने वाक्यगाथ समासगा ॥ २ ॥**

उदाहरणं—

सअळकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स ।
दीसइ अहव णिसम्मइ सरिसं अंसंसमत्तेण ॥

कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र च णूण-
मिति पाठे एषैव समासगा ॥ २ ॥

---

सम्प्रदायप्रकाशिनी

अथोपमानलोपे द्विरूपेत्याह — **उपमानानुपादान इति ।**

**सअळकरणेति ।**

सकलकरणपर[1]विश्रामश्रीवितरणं न सरसकाव्यस्य ।
दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण ॥

सर्वेन्द्रियाणां परमनिर्वृतिप्रदं काव्यसदृशं न दृश्यते [2]न च श्रूयते । वाक्यगेयमार्थी लुप्तोपमाना, सदृशमित्युपमाप्रतिपादकमात्रग्रहणात् ।

अथेयमेव यथा समासगा स्यात् तथा पाठमन्यथाकृत्य दर्श-यति — **कव्वस्सेत्यत्रेति ।** इत्थमुपमानलोपे वाक्यसमासगतत्वेन द्विरूपाप्य[3]र्थ्येव ॥ २ ॥

साहित्यचूडामणिः

**उपमानेति ।** उपमितिकरणस्यानुपादाने वाक्यं समासं च गच्छति ।

**सअळेति ।**

सकलकरणप[4]रविश्रामश्रीवितरणं न सरसकाव्यस्य ।
दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण ॥

इति । अत्रोपमानस्य कस्यचिद् विशिष्टस्य नोपादानम् ।

एतदेव समासगोदाहरणतया प्रतिसंस्कार्यमित्याह — **कव्वस्सेति ।** काव्यसममिति पाठे सदृशमित्यस्य पौनरुक्त्यं स्यादित्यत्राह—**णूणमिति** ॥२॥

---

१. 'परिविश्रम' ख. ग. ङ. पाठः. २. 'नतुच' ख. ग. पाठः. ३. 'थ्या' ङ. पाठः. ४. 'रि', ५. 'सीदा' घ. पाठः.

**वादेर्लोपे समासे सा कर्माधारक्यचि[1] क्यङि ।**
**कर्मकर्त्रोर्णमुलि**

वाशब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट् । कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्तुः क्यङा च, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत् । उदाहरणं—

सम्प्रदायप्रकाशिनी

अथोपमाप्रतिपादकलोपे लुप्तां षोढा दर्शयति— **वादेर्लोप इत्यादि[2]** । समास इत्याद्या निमित्तसप्तम्यः । समासे, कर्मक्यचि[3], आधारक्यचि, क्यङि, कर्मोपपदे कर्त्रुपपदे च णमुलीति षोढा ।

तदेतद् व्याचष्टे—**वाशब्द उपमेत्यादिना** । षट्प्रकारेत्यर्थः । तत्र समासनिबन्धनायाः स्फुटत्वात् पञ्चविधां विविच्य दर्शयति—**कर्मणोऽधिकरणाच्चेति** ।

साहित्यचूडामणिः

वादेरिति । इवशब्द इव वाशब्दोऽप्युपमां द्योतयति । येन
"मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।"

इत्यत्र 'ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्य' इत्येतत् प्रत्याचिख्यासुस्तत्रभवान् पतञ्जलिरेतदूरीचक्रे । नचैतावता 'जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा' इत्यत्रान्यथाकरणं न्याय्यं, कालिदासोचितताया बन्धच्छायाया विघटनापत्तेः ।

परसप्तमीभ्रान्तिनिवृत्तये क्यचा क्यङेति तृतीयया व्याख्या । 'उपमानादाचारे'(३-१-१०) इति कर्मणः । 'अधिकरणाच्च' (वा० ३-१-१०) इत्यधिकरणात् । **कर्तुः क्यङेति** । 'कर्तुः क्यङ् सलोपश्च'(३-१-११) इत्युक्तत्वात् । **कर्मकर्त्रोरिति** । 'उपमाने कर्मणि च' (३-४-४५) इति णमुल् । चकारात् कर्तरि च ।

---

१. 'रे' ख. पाठः, २. 'दि नि' क. घ., 'दिना । स' ङ. पाठः, ३. 'चि कर्तृक्य' ङ. पाठः.

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥

तथा,

असितभुजगभीषणासिपत्रो
रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः
प्रतिभटविक्रमदर्शनेऽयमासीत् ॥

---

सम्प्रदायप्रकाशिनी

ततः कुमुदेति । अत्र कामिनीगण्ड इव पाण्डुरिति समासेने[1]-वादिर्लुप्यते ।

असितेति । रुहरुहिका[2] उत्कण्ठा । अत्राप्यसितभुजग इव भीषणमसिपत्रं यस्येति समासेनैवेवादिलोपः । उपमानोपमेययोरेक-पदगतत्वेनेदमुदाहरणम् । पूर्वं भिन्नपदगतत्वेन ।

साहित्यचूडामणिः

समास उदाहरति — तत इति । कामिनीगण्डपाण्डुनेति । अत्र द्योतकं पदं न दृश्यते ।

असितेति । रुहरुहिका उत्साहः[3], उत्कण्ठेति केचित् । कृष्णसर्पवद् भीषणमसिपत्रं खड्गधेनुर्यस्य । 'उपमानानि सामान्यवचनैः' (२-१-५५) इति भुजगस्योपमानत्वम्, असिपत्रस्योपमेयत्वं, भीषणत्वस्य समानधर्मत्वं च सिध्य-तीति द्योतकानपेक्षया तदनुपादानम् । अनयोश्च पूर्वत्रोपमानोपमेययोः पृथक्-पदत्वम्, अत्र त्वेकपदतेति विवेकः ।

---

१. 'न' ङ. पाठः. २. 'हु' ख. ग. पाठः. ३. 'हः । कृ' घ. पाठः.

पौरं सुतीयति जनं समरान्तरेऽसा-
वन्तःपुरीयति विचित्रचरित्रचर्चैः[1] ।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य लसितानि *सपत्नसेना ॥
मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः ॥

एतद्‌द्विलोपे क्विप्समासगा ॥ ३ ॥

---

सम्प्रदायप्रकाशिनी

**पौरं सुतीयतीति** । सुतीयति सुतमिवाचरति पौरं जनम्[2] । इयं कर्मक्यचा । अन्तःपुरीयति अन्तःपुर इवाचरति समरान्तरे । इयमधिकरणक्यचा । नारीयते नारीवाचरति इयं विलोक्य सपत्नसेना । इयं कर्तुः क्यङा ।

**मृधे निदाघेति** । घर्मांशुदर्शं घर्मांशुमिव पश्यन्ति[3] तम् । इयं कर्मोपपदेन णमुला । पार्थसञ्चारं पार्थोऽर्जुनः स इव सञ्चरति । इयं कर्त्रुपपदेन[4] ।

अथ द्विलोपे लुप्तधर्मोपमानप्रतिपादकमाह[5]— **एतद्‌द्विलोप इति** ।

साहित्यचूडामणिः

**पौरमिति** । सुतीयतीत्यत्र सुतमिवाचरतीति कर्मणि क्यच् । अन्तःपुरीयति आयोधनभूमावन्तःपुर इवाचरतीत्यधिकरणात् । नारीयते अङ्गनायत इति कर्तुः क्यङ् ।

**मृध इति** । निदाघघर्मांशुः ग्रीष्मसूर्यः तमिव पश्यन्तीति 'कषादिषु यथाविध्यनुप्रयोगः' (३-४-४६) । पूर्वस्मिन् पार्थसञ्चारं सञ्चरतीति कर्तरि णमुल् । पूर्ववच्चानुप्रयोगः ।

**एतद्‌द्विलोप इति** । एतयोर्धर्मद्योतकयोः लोपे ।

---

१. 'वर्चाः । ना', २. 'नम् । क' क. पाठः. ३. 'न्ति । इ' क. घ. पाठः. ४. 'न । द्वि' ख. पाठः. ५. 'मानप्र' ङ. पाठः.

---

* 'विपक्षसेना' इति मूलकोशपाठः.

एतयोर्धर्मवाद्योः[1] ।

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
साम्परायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ ३ ॥

धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।

उदाहरणं—

ढुड्ढुल्लन्तो[2] मरीहिसि कैण्टअ[3]कलिआइ केअ*इवणाइ ।
मालइकुसुमसरिच्छं भमर! भमन्तो ण पाविहिसि ॥

सम्प्रदायप्रकाशिनी

सवितेति । अत्र विधवति सवितरतीत्यादौ क्विपा उपमाप्रतिपादकलोपः साधारणधर्माप्रयोगश्चेति[4] द्विलोपः ।

परिपन्थीति । अत्र राजा कुञ्जर इवेति समासेनेवादिलोपः[5], सामान्याप्रयोगश्चेति द्विलोपः ॥ ३ ॥

अथ लुप्तधर्मोपमाना— धर्मोपमानयोरित्यादि ।

ढुड्ढुल्लन्तेति ।

साहित्यचूडामणिः

व्याचष्टे—धर्मवाद्योरिति ।

विधवति विधुरिवाचरतीत्यत्र 'सर्वप्रातिपदिकेभ्यः[6]—' इत्याचारे क्विप् । अत्र[7] शीतलत्वादिको न समानधर्मः, नच द्योतकशब्द इति द्विलोपः । एवमुत्तरत्र ।

परिपन्थीति । राजा कुञ्जर इवेति 'उपमितं व्याघ्रादिभिः —' (२. १. ५६) इति समासः महत्त्वादिसाधर्म्यात्[8] । मनोराज्यसम्बन्धिपरिपन्थिमत्त्वमुपमायाः साधकं येन कुञ्जरं तिरोधाय राजोन्मज्ज्यते ॥ ३ ॥

धर्मेति । वृत्तौ समासे ।

ढुड्ढुल्लन्तो[9] इति ।

१. 'र्मे' क. पाठः. २. 'न्तु' क. ख. पाठः. ३. 'कीटअ' ख. पाठः. ४. 'प्रतिपादकश्चे' ङ. पाठः. ५. 'से इवा' ख. पाठः. ६. 'भ्य इत्येक इ', ७. 'तः', ८. 'श्चो', ९. 'न्त' ग. पाठः.

कुसुमेणं समामिति पाठे वाक्यगा ।

**क्यचि वाद्युपमेयासे**

**आसे निरासे ।**

---

सम्प्रदायप्रकाशिनी

**परिभ्रमन् मरिष्यसि कण्टककलितानि केतकीवनानि ।**

**मालतीकुसुमसदृशं भ्रमर! भ्रमन् न प्राप्स्यसि ॥**

अत्र सदृशमिति सामान्यकथनादुपमानानुपादानं साधारणधर्माप्रयोग-श्चेति द्विलोपे समासगा ।

अथेयमेव यथा वाक्यगा स्यात् तथा पाठमन्यथयति—**कुसु-मेणं सममित्यादि** ।

अथ लुप्तोपमाप्रतिपादकोपमेया—**क्यचि वादीत्यादि** ।

साहित्यचूडामणिः

"ढुङ्ढुल्ळन्त मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृक्षं भ्रमर! भ्रमन् न प्राप्स्यसि ॥"

इति पुष्पापचाये व्यग्रं दृष्ट्वा परकलत्राभिलाषिणं कस्यचिदुक्तिः । यदाह मुनिः—

"यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं यदा नार्याः कामिनः सा परा रतिः ॥"

इति । ढुङ्ढुल्ळणं दुस्तरंतारल्यम् । अत्र मालतीत्यादिसमासे सौरभादिर्धर्मस्तदु-चितं चोपमानं न दृश्यते ।

समासोदाहरणस्य वाक्योदाहरणतयोन्नयनमदुष्करमित्याह— **कुसुमे-णेति** ।

(कथमि? क्यचा)ति । (पदोक्त? द्योतक)स्योपमेयस्य च लोपे ।

आसपदमनुपसर्गत्वादप्रसिद्धं विवृणुते— **निरास इति** ।

---

१. 'न' ग. पाठः. २. 'क', ३. 'क्षं क. घ. पाठः. ४. 'न' ख. ग. ङ. पाठः. ५. परिभ्रमन् म', ६. 'च', ७. 'तो', ८. 'ग', ९. 'रा' ग. पाठः.

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥

अत्रात्मा उपमेयः ।

**त्रिलोपे च समासगा ॥ ४ ॥**

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।
स्मरशरविशरारितान्तरा मृगनयना हरते मुनेर्मनः ॥

---

सम्प्रदायप्रकाशिनी

**अरातिविक्रमेति** । अत्र सहस्रायुधीयति आयुधसहस्रवानिवाचरतीति क्यचा इवादिलोपः उपमेयस्याप्रयोग इति द्विलोपः ।

अप्रयुक्तमुपमेयमुद्घाटयति — **अत्रात्मेति** । य इह कर्ता क्रियावाच्यः प्रतीयते स एवोपमेय इत्यर्थः ।

अथ त्रिलोपे समासगतत्वेनैकैव ।

**तरुणिमनीति** । अत्र मृगस्य नयने इव नयने यस्या इति समासेनोपमानस्योपमाप्रतिपादकस्य च लोपः धर्मस्याप्रयोगश्चेति त्रिलोपः ।

साहित्यचूडामणिः

**सहस्रायुधीयति** आत्मानं सहस्रायुधमिवाचरति खड्गाद्येकप्रहरणोऽपीति यावत् । आत्मपदाप्रयोगादुपमेयलोपः । द्योतकलोपः स्पष्टः । सहस्रायुध उपमानम् । आचरणं समानधर्मः ।

एतदासूत्रयति — **आत्मोपमेय** इति ।

**त्रिलोप इति** । एकपारिशेष्येण समासवर्तिनि ।

**तरुणिमनीति** । विलब्धो विभक्तः । मृगनयने इव नयने यस्या इत्यत्र धर्मद्योतकोपमानानां धर्मद्योतकोपमेयानां वा त्रयाणां लोपः । तस्मादुपमानस्योपमेयस्य वा नयनपदस्यात्र लोप इति विचक्षणैकपरीक्ष्योऽयमर्थः । सर्वथा त्रिलोपैषा ।

ननु चात्रावयवावयविनोरभेदविवक्षया यदा मृग एव नयनतयोपचर्यते तदा रूपकानुगुणं समासान्तरमनुगुणमिति कथमियं त्रिलोपेति चेद् आह —

---

१. 'गा । तदा—त' क. ग. पाठः, २. 'चि' क. घ. ङ. पाठः, ३. 'मेषा' घ. पाठः.

अत्र 'सप्तम्युपमान—' इत्यादिना यदा समासलोपौ। क्रूरस्याचारस्यायःशूलतयाध्यवसानात् अयःशूलेनान्विच्छति आयःशूलिक इत्यतिशयोक्तिः, नतु क्रूराचारोपमेयतैक्ष्ण्यधर्म-वादीनां लोपे त्रिलोपेयमुपमा । एवमेकोनविंशतिर्लुप्ताः । पूर्णाभिः सह पञ्चविंशतिः ॥

---

सम्प्रदायप्रकाशिनी

तदेतत् स्पष्टयति — सप्तम्युपमानेत्यादि । उपमानपूर्वपद-त्वाद् बहुव्रीहिरुपमानेवादिलोपश्च यदा विवक्ष्यते तदा त्रिलोप इ-त्यर्थः । नन्वेवम् 'आयःशूलिक' इत्यादावपि त्रिलोपः प्रसक्त इत्यत आह— क्रूरस्याचारस्येत्यादि । क्रूर एव ह्याचारः परोपद्रवाधायि-त्वेनायश्शूलतयाध्यवसीयते । तथाच सत्ययश्शूलेनान्विच्छति स्वार्थ-मिति 'आयःशूलिकः खल' इत्यतिशयोक्तिरेवैषा, न पुनः क्रूराचार-लक्षणस्य (उपमेयस्य तैक्ष्ण्यरूपसाधारण)धर्मस्य वादीनां च लोपे त्रिलोपा । उपमाभेदसङ्ख्यां निगमयति — एवमेकोनविंशतिरि-त्यादि । धर्मलोपे पञ्च, उपमानलोपे वाक्यसमासगतत्वेन द्वौ, वादिलोपे

साहित्यचूडामणिः

अत्रेति । सप्तम्यन्तोपमानवाचिनी पूर्वपदे यस्य तस्य बहुव्रीहिः । उत्तरपदस्य च लोप इति येषां पक्षः तदनुसरणादियं त्रिलोपा । मतान्तरे तु मा नाम भूत् । त्रिलोपामन्येषामतिशयोक्तितयोदाहर्तुमाह— क्रूरस्येति । आयःशूलिक इत्यत्रायःशूलेनान्विच्छति । 'अयःशूलदण्डाजिनाभ्यां ठक्ठञौ' (५-२-७६) इति ठगुत्पत्तिः । अतिशयोक्तिरिति । नोपमा, अर्थार्जनोपायरूपस्य क्रूराचार-स्योपमेयस्य अयःशूललक्षणेनोपमानेन निगीर्याध्यवसानात् । क्रूरेति । क्रूराचार-रूपस्योपमेयस्य तैक्ष्ण्यलक्षणस्य धर्मस्य वादेश्च लोप इति चिरन्तनानां विवक्षा । उक्तमुपमाप्रपञ्चं सङ्कलयति—एवमिति । पूर्णाभिः सह, षड्भिरिति शेषः ।

---

१. 'वाचा' क. घ. पाठः. २. 'प' घ. पाठः.

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ सा च विषादेन पद्मिनीव हिमाम्भसा ॥

इत्यभिन्ने साधारणे धर्मे,

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥

इति भिन्ने वा तस्मिन् एकस्यैव बहूपमानोपादाने मालोपमा, यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे *—

सम्प्रदायप्रकाशिनी

तु समासकर्मक्यजादिगतत्वेन षडित्येकलोपे[1] त्रयोदश[2]। धर्मोपमाप्रतिपादकलोपे क्विप्समासगतौ द्वौ, धर्मोपमानलोपे वृत्तिवाक्यगौ द्वौ, उपमाप्रतिपादकोपमेयलोपे क्यच्येकः, त्रिलोपे समासगतस्त्वेक[3] इति लुप्ता एकोनविंशतिः पूर्णाः षडिति सम्भूय पञ्चविंशतिः ।

अथ वैचित्र्यान्तरस्य परिगणितभेदेष्वन्तर्भाव इति सोदाहरणं दर्शयति— अनयेनेवेत्यादि । इयमुपमानवाक्यानां मालारूपेणावस्थानान्मालोपमा म्लानिरूपाभिन्नधर्मा ।

ज्योत्स्नेवेति । इयं नयनानन्दत्वमदकारणत्वादिभिन्नधर्मा ।

एवं रशनोपमामपि द्विधा दर्शयितुमाह—यथोत्तरमुपमेयस्येत्यादि । उपमेयस्योपमानभावापत्तौ शृङ्खलान्यायेन वर्तमाना रशनोपमा ।

साहित्यचूडामणिः

मालोपमामुपदर्शयति— अनयेनेति । अत्र म्लानिलक्षणो धर्मो न भिद्यते ।

ज्योत्स्नेति । अत्र नयनान्दत्व(मद)कारणत्वादिको धर्मः प्रत्येकं भिद्यत इति विशेषः ।

तस्मिन्निति । साधारणे धर्मे । मालोपमाया लक्षणमाह— एकस्येति । एकस्यैवोपमेयस्य बहूपमानोपादाने मालोपमा । रशनोपमाया लक्षणमाह—यथो-

१. 'द्विविधस्य' क. घ. ङ. पाठः. २. 'पात् त्र' ग. पाठः. ३. 'तत्वेनैकश्चेति' ख., 'तस्त्वेकश्चेति' ग. पाठः.

* 'त्वे उदा— अन' इति मूलकोशपाठः.

अनवरतकनकवितरणघृतजललवकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥

मतिरिव मधुरा मूर्त्तिर्मूर्त्तिरिव सभा प्रभाप्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥

इत्यादिका रशनोपमा च न लक्षिता, एवंविधवैचित्र्यसहस्र-
सम्भवादुक्तभेदानतिक्रमाच्च ॥ ४ ॥

सम्प्रदायप्रकाशिनी

अनवरतेति । अत्र मतिर्भणित्यपेक्षयोपमेया, चेष्टापेक्षया तूप-
मानम् । इयं वैमल्यरूपाभिन्नधर्मा ।

मतिरिव मधुरा मूर्त्तिरिति । इयं मधुरत्वप्रभावचितत्वादि-
भिन्नधर्मा ।

एतास्तु न लक्षिताः सूत्रकृता । कुत इत्याह — एवंविध-
वैचित्र्येत्यादि । वैचित्र्यबाहुल्याद् ग्रन्थगौरवमुक्तलक्षणानतिक्रमश्चो-
पेक्षणे हेतुः ॥ ४ ॥

साहित्यचूडामणिः

परमिति । पूर्वपूर्वस्योपमेयभूतस्य उत्तरोत्तरकक्ष्यायामुपमानतयोपादाने । पूर्व-
वत् मालावत् ।

उदाहरति — अनवरतेति । अत्र वैमल्यं सर्वत्र समानधर्मः ।
मतिरिवेति । अत्र प्रत्येकं माधुर्यादिको धर्मः भिद्यते ।

न लक्षितेति । कारिकायाम् । वृत्तौ तु लक्षितैव । कुतः कारिकायां न
लक्षितेत्यत्राह — एवंविधेति । दण्डिभोजादिप्रक्रियायामपरिमितवैचित्र्यस्य
प्रकाशयितुं[1] शक्यत्वात् । तर्हि कथं[2] न न्यूनत्वदोषशङ्केत्यत्राह — उक्तभेदेति ।
सामान्यलक्षणेन क्रोडीकाराद् इति ॥ ४ ॥

१. 'तुमश' ग. पाठः. २. 'थं न्यू' घ. पाठः.

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।**
**अनन्वयः,**

उपमानान्तरसम्बन्धाभावोऽनन्वयः ।

न केवलं भाति नितान्तकान्ति-[1]
नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधलासवासा-[2]
स्ते तद्विलासा इव तद्विलासाः ॥

**सम्प्रदायप्रकाशिनी**

अथोपमाविशेषत्वाद्[3]नन्वयः उपमेयोपमा च । उपमानोपमेयेत्यादि । एकस्यैवार्थस्यैकक्रियान्वयादेकवाक्यगे उपमानोपमेयभावे अनन्वयः ।

लक्ष्यपदं निर्वक्ति— उपमानान्तरेति । (उपमाने[4]?) ।

न केवलमिति । अत्र द्वितीयनितम्बिनीविलासशब्दौ सदृशान्तरव्यावृत्तिपरौ ।

**साहित्यचूडामणिः**

अनन्वयमाह— उपमानेति । एकस्यैवेति उक्ताया उपमाया व्यपोहः, एकवाक्यग इति वक्ष्यमाणाया उपमेयोपमायाः । यत् सूत्रम् 'एकस्यैवोपमानोपमेयत्वेऽनन्वयः' (सू०-१२) इति ।

निर्वक्ति — उपमानान्तरेति । यदाहुः —

"यत्र तेनैव तस्य स्यादुपमानोपमेयता ।
असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥"

इति ।

न केवलमिति । नितम्बिनी नितम्बिनीव, तद्विलासास्तद्विलासा इवेति एकस्यैव द्वितीयसब्रह्मचारिनिराकरणलक्षणं चमत्कारातिशयमवबोधयितुम् उभयथा विवक्षा, यतो न विरुद्धधर्मसंसर्गशङ्का । श्रौतश्चायमनन्वयः । एवं 'गगनं गगनाकारं सागरः सागरोपमः' इत्यार्थोऽप्यवगन्तव्यः ।

१. 'कीर्तिर्नि', २. 'त' क. पाठः. ३. 'षणत्वा' घ. पाठः. ४. 'नो' क. ख. ग. घ. पाठः.

**विपर्यास उपमेयोपमा तयोः ॥ ५ ॥**

तयोरुपमानोपमेययोः परिवृत्तिः, अर्थाद् वाक्यद्वये, इतरोपमानव्यवच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा।

उदाहरणं —

कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति तव यस्य ॥ ५ ॥

सम्प्रदायप्रकाशिनी

**विपर्यास** उपमेयेत्यादि ।

**परिवृत्ति**र्विपर्य(य ?)स्योपमानोपमेयभावकल्पनम् । **अर्था-दिति**। एकवाक्यत्वे विपर्यासानुपपत्तेः । लक्ष्यपदं[2] निर्वक्ति — **उप-मेयेने**त्यादि । एकत्र विरुद्धधर्मसमावेशप्रयोजनमाह — **इतरोपमा-नेति** ।

**कमलेवे**ति । अत्रोपमेयेनोपमा प्रतिवाक्यम् ॥ ५ ॥

साहित्यचूडामणिः

उपमेयोपमामाह— **विपर्यास** इति । यत् सूत्रं 'द्वयोः पर्यायेण तस्मि-न्नुपमेयोपमा' (अलङ्कारसू० १२) इति । पर्यायो यौगपद्याभावः । तस्मिन्निति तद्वृत्तेन प्रक्रान्तमुपमा[3]नोपमेयत्वं प्रत्यवमृश्यते ।

**अर्थादि**ति । अन्यथा अनन्वयत्वप्रसङ्गात् । महत्याः संज्ञायाः फल-माह — **इतरे**ति । यथाहुः —

"अन्योन्यमेव यत्र स्यादुपमानोपमेयता ।
उपमेयोपमामाहुस्तां पक्षान्तरहा[4]निगाम् ॥"

इति । अत्रोपमानोपमेययोः अनन्वयवैलक्षण्यात् परिवृत्तिः साधर्म्यस्य । यत्र धर्मस्य साधारण्यं तत्र वस्तुप्रतिवस्तुनिर्देशेन दृश्यते । यथा —

"सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः ।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥"

इति ॥ ५ ॥

१. 'मा । क' ग. पाठः. २. 'क्षणप' ख. ग. ङ. पाठः. ३. 'मेयोपमानत्वं' घ. पाठः. ४. 'गामिनीम्' ग. पाठः.

**सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।**

समेन उपमानेन । उदाहरणम्—

उन्मेषं यो मम न सहते जातिवैरी निशाया-

मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।

सम्प्रदायप्रकाशिनी

**सम्भावनमथेत्यादि** । अथशब्दः सम्भावनाप्रकरणस्य साधर्म्यप्रकरणानन्तर्यमाह । उपमानत्वेनोपमेयस्य सम्भावनमुत्प्रेक्षा ।

**उन्मेषमिति** । मम विकासं यो न सहते, तस्येन्दोः सौन्दर्यदर्पोऽनया शान्तिं नीत इति हर्षात् तव पादयोः पद्मलक्ष्मीः(?)मा । अत्र

साहित्यचूडामणिः

उत्प्रेक्षामाह—**सम्भावनमिति** । सम्भावनमध्यवसायोऽभिमानस्तर्क ऊह उत्प्रेक्षेति नार्थान्तरम् । प्रकृतस्योपमेयस्य । यत् सूत्रम् 'अप्रकृतगुणक्रियाभिसम्बन्धाद् अप्रकृतत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा ।' (अलङ्कारसूत्रं ५१, पृष्ठे) इति । यच्चोक्तं—

"साम्यरूपाविवक्षायां वाच्येवाद्यात्मभिः पदैः ।

अतद्गुणक्रियारो(प ? पाद्) उत्प्रेक्षातिशयान्विता ॥"

इति । अतद् अप्रकृतं[1], तस्य ये गुणक्रिये तयोरारोपादध्यवसायादित्यर्थः । सम्भावनमित्यनेनास्या अध्यवसायाकारव्यापारप्राधान्यं ध्वन्यते । विषयकबळनादभेदप्रतिपत्तिर्हि[2] विषयिणोऽध्यवसायः[3] । तस्य च यत् साध्यत्वं तदेव व्यापारप्राधान्यम् । तस्मिन्नसत्यतया[4] विषयिणः प्रतीतिरुत्प्रेक्षासमुत्थापयति[5] । यत्र तु विषयिणो वास्तवादसत्यस्यापि सत्यतया प्रतीतिः, तस्मिन्नध्यवसितप्राधान्येऽतिशयोक्तिः[6] । सा स्वालङ्कार आसूत्रयिष्यते । तस्मादसत्यत्वं विषयनिष्ठस्य धर्मस्य गुणक्रियालक्षणस्य विषयिणि तत्र सम्भवः विषये त्वसंभवः इति द्वैविध्यमनुविधत्त इत्यलमतिमथनेन । इयं च जातिक्रियागुणद्रव्याणामप्रकृतानामध्यवसायाच्चतुर्धा । प्रकृतेऽप्येतदौचित्ये वैचित्र्यान्तराभावादननुवर्णनम्[7] । प्रत्येकं च-

१. 'तं यत् त' ग. पाठः. २. 'दि', ३. 'त्विविष', ४. 'त्र' घ. पाठः. ५. 'त्र वि' ग. पाठः. ६. 'न्यमति' घ. पाठः. ७. 'क्तिः स्वल' ग. पाठः.

नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-

ल्लग्ना मन्ये ललिततनु! ते पादयोः पद्मलक्ष्मीः ॥

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।

इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम्।

सम्प्रदायप्रकाशिनी

वास्तवं यदेतत् पादयोः पद्मलक्ष्मीलगनं, तस्येन्दुसौन्दर्य[1]शमनरूपवैरनिर्यातनप्रभवो हर्षो हेतुत्वेनोत्प्रेक्ष्यते। तथोत्प्रेक्षणे लगनमेव निमित्तम्।

लिम्पतीव तमोऽङ्गानीत्यत्र लेपनकर्तृ[2]त्वेनोत्प्रेक्षायां व्यापनादि निमित्तं गम्यमानम्। व्यापनादौ तु विषये निमित्तमन्यदन्वेष्यम्। न[3]च विषयस्य गम्यमानत्वं युक्तम्, उत्प्रेक्षाधारत्वेन प्रकृ[4]तस्याभिधातुमुचितत्वादिति रुय्यकः। तत्प्रातिपक्ष्येणाह — लिम्पतीवेत्यादि। व्यापनादि लेपनादिरूपतया सम्भावितमिति व्यापनादे-

साहित्यचूडामणिः

"लोकातिक्रान्तविषयभावाभावाभिमानतः।

संभावन(मु? मथो)त्प्रेक्षा वाच्येवादिभिरुच्यते॥"

इत्यभावभावाभिमानादष्टधा। पुनः प्रत्येकं निमित्तस्य गुणक्रियारूपत्वे षोडशधा। तस्योपादानानुपादानाभ्यां द्वात्रिंशद्धा। हेतुस्वरूपफलोत्प्रेक्षणेन षण्णवतिधा। एतच्च वाच्यत्वे प्रतीयमानत्वेऽप्युत्प्रेक्षावैचित्र्यम्। श्लेषापह्नवाद्यलङ्कारान्तरवैचित्रीचर्चायामानन्त्यमिति संक्षिप्तेन पथा प्रतिष्ठमानो ग्रन्थकारो दिङ्मात्रमुदाहरति।

उन्मेषमिति। अत्र पादशोभाया उपमेयभूताया उपमानभूतपद्मसौन्दर्यात्मना संभावनम्। सौन्दर्यं च गुणः। तत्र हर्षादित्युक्तो गुण एव निमित्तम्।

क्रियायामुदाहरति — लिम्पतीति।

अत्र तमोविषयतया लेपनं नभोविषयत्वेन वर्षणं चोत्प्रेक्ष्यत इत्याह— व्यापनादीति। आद्यस्य श्लक्ष्णता, द्वितीयस्य नीलिमाधिक्यं च गुणो

१. 'र्योपश' ख. ग. ङ. पाठः. २. 'त्वोत्प्रे' ग. ङ. पाठः ३. 'नु' क. घ. पाठः. ४. 'स्तु' ख. ग. ङ. पाठः ५. 'त्वेन प्र' घ. पाठः.

**स सन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ६ ॥**

सम्प्रदायप्रकाशिनी

विषयत्वमुक्तम् । नच व्यापनादि गम्यमानं[1], तद्योगिनस्तमसः प्रकृतत्वात् । निमित्तं तु निबिडत्वादि प्रतीयते । आदिशब्दादधःप्रसरणस्य च वर्षणत्वोत्प्रेक्षायामासाररूपत्वं[2] निमित्तं प्रतीयत इति ग्रन्थकाराशयः ।

स सन्देहस्त्विति । भेदो[3] निश्चयः । भेदोक्त्यनुक्तिभ्यां द्विरूपो यः संशयः स सन्देहोऽलङ्कारः ।

साहित्यचूडामणिः

निमित्तम् । जात्युत्प्रेक्षा यथा—'स वः पायादिन्दुरि'त्यादि । अत्राङ्कुरो जातिः । द्रव्योत्प्रेक्षा यथा —

"पातालमेतन्नयनोत्सवेन विलोक्य शून्यं शशलाञ्छनेन ।
इहाङ्गनाभिः स्वमुखच्छलेन कृताम्बरे चन्द्रमयीव सृष्टिः[4] ॥"

इति । अत्र चन्द्रस्यैकत्वाद् द्रव्यत्वम् । अभावाभिमाने यथा —

"कपोलफलकावेतौ कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥"

इति । प्रतीयमानोत्प्रेक्षा यथा —

"निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किन्नु वान्तश्चन्द्रो मयेत्यार्ततरं ररास ॥"

इति । यथावा 'महिळासहस्सभरिए' इत्यादि । इवादिरत्र तु न श्रूयते । एवमन्यदुन्नेयमिति ।

स सन्देह[6] इति । सन्देहवत्त्वादयमलङ्कारः सन्देहः । यत् सूत्रं 'विषयस्य सन्दिह्यमानत्वं सन्देहः' (अलङ्कारसू० १७) इति । केचित् संशय इत्येवाहुः । यथाचोक्तं —

"श्रुतेः सामान्यधर्माणां विशेषस्यानुदाहृतेः ।
अप्रतिष्ठं यदेकत्र ज्ञानं तं संशयं विदुः ॥"

इति । एकत्राप्यप्रतिष्ठं न पुनरुभयावलम्बनं तत्त्वे स्थाणुश्च पुरुषश्चेति समुच्चयेऽनिश्चयतापत्तेः । वर्णनीयोत्कर्षानुवर्णनमस्य प्रयोजनम् । यथोक्तम् —

---

१. 'नत्वं त' ङ. पाठः. २. 'स्यो' ख. ग. पाठः. ३. 'दोक्त्य' क. घ. पाठः.
[illegible]

भेदोक्तौ यथा —

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति तिरः*
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥

भेदोक्तावित्यनेन[1] न[2] केवलमयं निश्चयगर्भः, यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः[3] । यथा —

सम्प्रदायप्रकाशिनी

अयं मार्तण्ड इति । सर्वा दिशो[4] न प्रसरति, ऊर्ध्वज्वलनस्वभावत्वात् । तिरस्तिर्यक् । अत्र स खलु तुरगैरित्यादिभिः भेदोक्तिः ।

प्रकारान्तरं दर्शयितुमाह — भेदोक्तावित्यनेनेत्यादि । अतो निश्चयगर्भो निश्चयान्तश्चेति द्विरूपोऽयम् ।

साहित्यचूडामणिः

"उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्बुधाः ॥"

इति ।

अस्य द्वैविध्यमाह — भेदेति ।

अयमिति । अत्र वर्णनीयस्य मार्तण्डादीनां च संशये सप्तिसप्तकसम्पन्नत्वादिभेद उत्कृष्यते ।

न केवलमिति । आद्यन्तयोः संशयस्फुरणं मध्ये निश्चय इत्येका कोटिः । आदिमध्ययोः संशयस्फुरत्ता अन्ते च निश्चय इत्यन्या । तदुभयमविवक्षितमिति यावत् ।

१. 'टाः ॥ इन्दुः' ग. पाठः. २. 'न के', ३. 'त्तः' क. पाठः. ४. 'शः प्र' क. ख. ग. पाठः. ५. 'प्तसप्तिक' घ. पाठः.

* 'पुरः' इति मूलकोशपाठः.

इन्दुः किं क्व कलङ्कः सरसिजमेतत् किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि! निश्चितं परतः ॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टोद्भटेन । तदनुक्तौ यथा —

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तप्रभः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथंनु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ६ ॥

सम्प्रदायप्रकाशिनी

निश्चयान्तमुदाहरति — इन्दुः किमित्यादि ।

इहारुचिं दर्शयति — किन्तु निश्चयेत्यादिना ।

अस्याः सर्गेति । पुराणो मुनिर्नीरसखः । अत्र सन्दिह्यमानेषु भेदानुक्तिः ॥ ६ ॥

साहित्यचूडामणिः

इन्दुरिति । कलङ्कादिकोऽनेको[१] धर्मः । पर्यन्ते मुखमिति निश्चितमित्युक्तत्वाद् निश्चयान्तत्वं च ।

ननु रुद्रटेनोक्तोऽयं विभागः कस्मादुद्भटेनोपेक्षित इत्यत्राह — किन्त्वति । व्यज्यमानाद् व्यतिरेकादुच्यमाने निश्चये कश्चमत्कारातिशय इत्युद्भटाभिप्राय इति यावत् । तदनुक्तौ भेदानुक्तौ ।

अस्या इति । अत्र नायिकारूपसृष्टौ ब्रह्मत्वं चन्द्रमसो मन्मथस्य मधुमासस्य वेति सन्देहे भेदो न कश्चिदुच्यते । वेदाभ्यासजाड्यादिकं तु चन्द्रमदनमधुमासेभ्यः प्रसिद्धब्रह्मणो वैलक्षण्यं न पुनरेतेषामन्योन्यमिति भ्रमितव्यम् । अतश्च संशयावस्थैवात्र चारुतामुत्थापयति । इतरथा नायिकारूपवर्णने कान्तप्रभत्वादेरपि पर्युदासापत्तेः ॥ ६ ॥

१. 'नै' घ. पाठः.

**तद् रूपकमभेदो य उपमानोपमेययोः।**

**अतिसाम्यादनपह्नुतभेदयोरभेदः।**

**समस्तवस्तुविषयं श्रौता आरोपिता यदा॥७॥**

सम्प्रदायप्रकाशिनी

तद् रूपकमिति। उपमानोपमेययोरिति भेदानपह्नवद्योतनाय। प्रकृतं रूपवत् करोतीति रूपकम्।

तदिदं[1] व्याचष्टे[2] — अतिसाम्यादित्यादि।

भेदायाह — समस्तवस्त्विति। आरोप्यमाणा[3] अर्था यदा शब्देनोपादीयन्ते तदा रूपकं समस्तवस्तुविषयम्।

साहित्यचूडामणिः

रूपकमाह — तदिति। यत् सूत्रम् 'अभेदप्राधान्य आरोप आरोपविषयानपह्नवे रूपकम्'(अलङ्कारसू० १५) इति। अन्यत्रान्यावाप आरोपः।

साम्योत्कर्षादभेदः साम्यकक्ष्यानतिक्रान्तेः [4]अपह्नुतभेदत्वमित्याह — अतिसाम्यादिति। मुखं चन्द्र इति सहप्रयुज्यमानयोः साम्योत्कर्षादभेदो रूपकमिति यावत्। आरोप्यमाणेन चन्द्रादिना मुखादेरारोपविषयस्य[5] रूपवतः क्रियमाणत्वात्। उक्तं हि —

"श्रुत्या सम्बन्धविरहे यत् पदेन पदान्तरम्।
गुणवृत्तिप्रधानेन युज्यते रूपकं तु तत्॥"

इति।

आदावेतन्निरवयवं सावयवं परम्परितं चेति त्रिधा। आद्यं केवलं मालाकारं चेति द्विधा। द्वितीयं च समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विधैव। तृतीयं च श्लिष्टाश्लिष्टभिन्नशब्दनिबन्धनत्वेन द्विविधं सत् प्रत्येकं केवलमालाकारत्वात् चतुर्विधम्। तदेवमष्टावेतद्भेदा इत्याह — समस्तेति।

---

१. 'ह्येतद् व्या', २. 'ष्टे आरोपविषया इवेत्यादि। आरोपिता इति भूतार्थतायामविवक्षा। आरोपविषय अतिसाम्यादिभे' ख. ग. पाठः. ३. 'णा य' ङ. पाठः. ४. 'अनप', ५. 'स्या' ख. पाठः.

आरोपविषया इव आरोप्यमाणा यदा शब्दोपात्ता-स्तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम् । आरोपिता इति बहुवचनमविवक्षितम् । यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्यच्छलेन ॥

---

सम्प्रदायप्रकाशिनी

व्याचष्टे[1]—आरोपविषया इवेत्यादि । आरोपिता इति भूता-र्थतायामविवक्षा । आरोपविषयवदारोप्यमाणानां साकल्यतः शब्देनो-पादाने समस्तपदार्थविपर्यत्वात्[2] समस्तवस्तुविषयम् । ननु यदानेको धर्मो धर्मिणा सार्कमारोप्यते, तदा[3] तावतैव समस्तवस्तुविषयत्वसि-द्धिरिति बहुवचनस्य कथमर्थवत्तेत्यत आह— आरोपिता इती-त्यादि ।

ज्योत्स्नेति । छुरणमुद्धूलनम् । अन्तर्धानमदृश्यत्वसिद्धिरव-सानं च । मुद्राकपालं मुद्रेव हस्तग्राह्यमित्यर्थः । परिमलः परिमर्दः चिह्नमित्यर्थः । अत्र कापालिकीति धर्मिणो[9] भस्मेत्यादिधर्माणां च शब्देनोपादानात् समस्तवस्तुविषयम् ।

साहित्यचूडामणिः

शब्दोपात्ताः साक्षादुच्चारिताः । निर्वक्ति — समस्तानीति । एतद्विप-र्यासादेकदेशविवर्तिनो वक्ष्यमाणत्वात् । बहुवचनमविवक्षितमिति । द्विवचन-स्याप्यङ्गीकार्यत्वात् ।

---

१. 'ननु यदा' ग. पाठः. २. 'ष्टे यदा आरोप्यमाणानां', ३. 'नं तदा स', ४. 'यि' ख. पाठः. ५. 'विकारात् स' क. घ. ङ. पाठः. ६. 'क्षादारो' क. घ. पाठः. ७. 'दा बहुत्वादारोप्यमाणानामारोपिता इति बहुवचनमर्थवत् । यदा त्वेक एव धर्मो धर्मिणा साकमारोप्यते तदा ता' ग. ङ. पाठः. ८. 'लनं परिमर्दश्चि', ९. 'णो धर्मै म' ग. पाठः.

अत्र पादत्रयम्[1] । अन्तर्धानरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्ति । तत् सङ्करशङ्का न कार्या ॥ ७ ॥

**श्रौता आर्थाश्च ते[2] यस्मिन्नेकदेशविवर्ति तत् ।**

---

सम्प्रदायप्रकाशिनी

ननु चतुर्थपादो[3]ऽपह्नव एवेति कथं रूपकं[4]मित्यत आह—अत्र पादत्रयमिति । ननु रात्रिः कापालिकीवेत्युपमापीत्यत आह—अन्तर्धानरसिकत्वमित्यादि । अन्तर्धानरसिकत्वं कापालिक्यामनुपचरितं, रात्रावारोप्यत इति रूपकपरिग्रहसाधकम् । अतो न सङ्करशङ्का कार्या ।

भवेत् प्रकृतधर्माणा[5]मारोपो[6]ऽप्रकृते यदि[7] ।
उपमा रूपकं त्वन्यत् साधारण्ये तु सङ्करः ॥ ७ ॥

श्रौता आर्थाश्चेत्यादि । ते आरोप्यमाणा अर्थाः । केचिच्छब्देनोपादीयन्ते केचित् पुनरर्थसामर्थ्यादाक्षिप्यन्ते[8] यत्र तदेकदेशे विशेषेण वर्तनादेकदेशविवर्ति ।

साहित्यचूडामणिः

अत्र पादत्रयमिति । उपर्यपह्नवाक्रान्तत्वात् । ननु किं ज्योत्स्ना भस्मेवेत्युपमीयते उत ज्योत्स्नैव भस्मेति रूप्यते । व्याघ्रादित्वेन मयूरव्यंसकादित्वेन वा समासः, उभयोरप्याकृतिगणत्वादिति सन्देहादिस्वीकारे न्यायदोषस्वभावानुकूलप्रतिकूलतालक्षणसाधकबाधकप्रमाणानुदयाच्चायमनिश्चयलक्षणो वक्ष्यमाणः सङ्करः ननु शुद्धं रूपकमिति चेद्, आह—अन्तर्धानेति । अन्तर्धानव्यसनरसिकत्वं[9] चेतनधर्मत्वात् कापालिक्यामेव मुख्यं, न रात्रौ । तत्र रूपकस्य पादप्रसारिकया सर्वत्र प्रसर्पणम् उपमासन्देहविच्छेदश्चेत्याशयः । निगमयति—तदिति ॥ ७ ॥

एकदेशविवर्तिरूपकमाह—श्रौता इति । तं[10] इति । आरोप्यमाणाः ।

---

१. 'यमूलम् । अ' ख. ग. पाठः. २. 'ये तस्मिन्', ३. 'दो' क. पाठः. ४. 'कत्वमि', ५. 'मेत्य', ६. 'पाः' ग. ङ. पाठः. ७. 'सति । उ' क. घ. पाठः. ८. 'न्ते त' ङ. पाठः. ९. 'रितक' ङ. पाठः. १० 'क' ग. पाठः.

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादव-
सेया इत्येकदेशे विशेषेण वर्तनात् एकदेशविवर्ति ।

यथा —

जस्स रणन्तेउरए करे कुणन्तस्स मण्डळग्गळअं ।
रससम्मुही वि सहसा परम्मुही होइ रिउसेणा ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तं, मण्डला-
ग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसाम-
र्थ्यादवसीयत इत्येकदेशे विशेषेण वर्तनाद् एकदेशविवर्ति ।

---

सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे — केचिदारोप्यमाणा इत्यादि ।

जस्स रणन्ते इति ।

"यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥"

करेकरणं पाणिग्रहः । अत्र रणस्यान्तःपुरत्वं श्रौतम् । मण्डलाग्रलताया नायिकात्वं, रिपुसेनायाश्च प्रतिनायिकात्वमार्थमित्येकदेशविवर्ति ।

तदेतदाह — अत्र रणस्येत्यादि ।

साहित्यचूडामणिः

एकदे(श ? शे) विवर्तनाच्चलनादिति पूर्वं निरुक्तिः ।

जस्सेति ।

"यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥"

इति ।

अत्र शाब्दत्वेन रूपणप्रवृत्तौ अर्थसामर्थ्यलभ्यत्वमैकदेशिकं चलनमि-
त्याह — रणस्येति ।

---

१. 'हसुंमु' क. ख. पाठः. २. 'वैक्ति । ज', ३. 'कृतवतो' ग. पाठः.

**साङ्गमेतद्**

**उक्तं द्विभेदं सावयवम् ।**

**निरङ्गं तु शुद्धं**

**यथा —**

**कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्**
**सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।**
**अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां**
**प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥**

**माला तु पूर्ववत् ॥ ८॥**

सम्प्रदायप्रकाशिनी

तदिदं द्वयं सावयवमित्याह — साङ्गमेतदिति ।

अथ निरवयवं — निरङ्गं त्विति । शुद्धं, केवलधर्मारोपणात्[3] ।

कुरङ्गीवेति । अत्र प्रेमलतिकामिति केवलधर्मसमारोपात् निरवयवत्वम् ।

माला त्विति ।

साहित्यचूडामणिः

इतोऽपि विभागं वक्तुकाम उक्तमेकत्र सङ्कलयति — साङ्गमेतदिति ।

द्विभेदं समस्तवस्तुविषयैकदेशविवर्तिरूपम् । अङ्गमवयवः । एवं हि तद् व्याचष्टे — सावयवमिति ।

निरवयवमाह — निरङ्गमिति । शुद्धमिति । अङ्गविकल्पाभावात् ।

कुरङ्गीति । अत्र प्रेम्ण एकस्य लतात्वमात्रं रूप्यते नान्यस्य किञ्चित् । सेकौचित्यं रूपकपरिग्रहे साधकम् ।

माला तु पूर्ववदिति । कारिकावृत्त्योरेककर्तृकत्वादभेदविवक्षयोक्तिः । नखलु मालोपमा कारिकायामलक्षि ।

---

१. 'इत्थं के' घ. पाठः. २. 'धर्मरूपाणाम् । कु' क. ग. घ. पाठः. ३. 'मयमेवै(त)ब्याच' घ. पाठः.

**मालोपमायामिवैकस्मिन् बहव आरोपिताः । यथा —**

**सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः**
**कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।**
**विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया**
**प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ८ ॥**

**नियतारोपणोपायः स्यादारोपः परस्य यः ।**
**तत् परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९ ॥**

---

सम्प्रदायप्रकाशिनी

**पूर्ववदित्येतदनुस्मारयति — मालोपमायामिवेत्यादि ।** एकस्मिन्, आरोपविषय इति शेषः ।

**सौन्दर्यस्येति ।** कार्मणं वशीकरणम् । नर्मरहसां नर्मरहस्यानाम् । अत्रैकस्यामेव प्रियायां तरङ्गिण्यादिरूप[2]णान्मालात्वम् ॥ ८ ॥

**नियतारोपणेति ।** परस्यारोप्यमाणान्तरस्यारोपो यद्यारोपणरूपनियतोपायस्तदा परम्परितम्, एकस्यारोप[3]स्य नियमेनारोपा-

साहित्यचूडामणिः

**सौन्दर्यस्येति ।** कार्मणकर्म वशीकरणकर्म[4] । अत्रैकस्यां प्रियायां सौन्दर्यतरङ्गिणीत्वादयो बहव आरोप्यन्ते । लिङ्गवचनवैचित्र्यं च मालावैचित्र्यमुद्रेचयितुम् ॥ ८ ॥

परम्परितमाह—**नियतेति ।** नियतं व्यवस्थितम् आरोपणो[5](न्मु ? मु)पायो यस्य सं[6] च परस्योत्तरस्यारोपः । अन्यस्येत्यन्ये[7] । एषामधोमुखं पारम्पर्यम् । अन्योन्यालङ्कारसङ्करादुपमासन्देहविच्छेदो नियतत्वम् । यस्य श्लेषं[8] प्रत्यनौल्बण्येऽपि

---

१. 'णः' क. पाठः. २. 'पाणां माला' ग. घ. पाठः. ३. 'पान्तरस्य' क. ग. पाठः. ४. 'साधनम् । अ', ५. 'णोपा' ग. पाठः. ६. 'स प', ७. 'न्येषा' घ. पाठः. ८. 'षो' ग. पाठः.

यथा—

विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते!
दुर्गामार्गणनीललोहित! समित्स्वीकारवैश्वानर! ।
सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो!
साम्राज्यं वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥

सम्प्रदायप्रकाशिनी

न्तरहेतुकत्वे सति परम्परायातत्वात्। तच्च श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विरूपम्।

**विद्वन्मानसहंसेति।** अत्र हि विदुषां मानसे त्वं हंस इत्यारोपणं मानसमेव मानसमिति नियतारोपणहेतुकतया परम्परायातमिति श्लिष्टशब्दपरम्परितम्।

साहित्यचूडामणिः

भेदं प्रत्यौल्बण्यं, तत्र व्यस्तपदारोपः समस्तपदारोपस्य निबन्धनमित्यङ्गीकारे परम्परितसंज्ञोल्लङ्घनप्रसङ्गः। आरोपान्तरसापेक्ष आरोपः परम्परितमिति तात्पर्यम्। तस्य च द्वैविध्यमस्ति वाचकस्य श्लेषेण इतरथास्थितिश्चेत्याह— **श्लिष्ट इति।**

**विद्वदिति।** अत्र मानसमेव मानसं चित्तमेव सरोविशेष इत्यारोपो हंसारोपे निमित्तम्। एवमुत्तरत्र लक्ष्म्याः सङ्कोच एव पद्मानामसङ्कोचः। दुर्गाणां नगरविशेषाणाममार्गणं सिद्धत्वमेव दुर्गाया देव्या अन्वेषणम्। समितां युद्धानां स्वीकार एव समिधामिन्धनानां स्वीकारः। सत्ये ऋते प्रीतिरेव सत्यां गौर्यामप्रीतिः। विजयस्य साम्मुख्योत्कृष्टस्य प्राथमिकत्वमेवार्जुनात् पूर्वजत्वम्।

१. 'णोपायत' ख. पाठः. २. 'ब्दस्य प' क. घ., 'ब्दं' ग. ङ. पाठः. ३. 'षेणामा' घ. पाठः.

अत्र मानसमेव मानसं, कमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणाममार्गणमेव दुर्गाया मार्गणं, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः एवमारोपणनिमित्तो हंसादेरारोपः। यद्यपि शब्दार्थालङ्कारोऽयमित्युक्तं वक्ष्यते च, तथापि प्रसिद्ध्यनुरोधादत्रोक्तः। एकदेशविवर्ति हीदमन्यैरभिधीयते। भेदभाजि यथा—

सम्प्रदायप्रकाशिनी

तदिदं विशदीकरोति— अत्र मानसमेवेत्यादिना। ननु शाब्दः श्लेषलक्षणः आर्थश्चारोपरूपो विच्छित्तिविशेषः सम्भूयेह शोभां जनयतीत्युभयालङ्कारोऽयमुक्तो वक्ष्यते च सङ्करप्रस्तावे। कथमर्थालङ्कारतया कथ्यत इत्यत आह— यद्यपि शब्दार्थेत्यादि। प्रसिद्धीति। अर्थालङ्कारतया[1] येयं प्रसिद्धिः[2] प्राचां, तदनुरोधायं[3] केवलमर्थालङ्कारमध्ये[4][5] कथनम्। वस्तुतस्तूभयालङ्कार एवेति भावः। उभयालङ्कारलिङ्गत्वेनाचार्यान्तराभ्युपगमं[7] दर्शयति— एकदेशविवर्तीत्यादि। एकदेशेत्यनेन श्लिष्टांशे रूपकत्वाभावस्तेषां मत इत्युद्घाटितम्।

साहित्यचूडामणिः

यद्यपीति। मानसादिशब्दपरिवृत्तावर्थालङ्कारत्वभङ्गादयमुभयालङ्कारो भवितुमर्हतीत्युक्तम्। वक्ष्यते, उल्लासपर्यन्ते। तथापि चिरन्तनालङ्कारिकमर्यादयार्थालङ्कारेषु गण्यत इति। अथ न केनचिदेतत् परम्परितसंज्ञयोक्तमित्यत्राह— एकदेशविवर्तीति। अन्यैरुद्भटादिभिः एकदेशविवर्ति ह्येतदभिधीयते, यद्वा 'एकदेशविवर्ति स्यात् पररूपेण रूपणाद्' इत्युक्तत्वात्। अस्माभिस्तु परम्परितमित्युच्यते। द्वितीयं प्रकारमाह— भेदभाजीति।

१. 'यो' ख. ग. पाठः. २. 'द्धः' ख. पाठः. ३. 'येव के' ख. ग. पाठः. ४. 'त्रा' ग. ङ. पाठः. ५. 'ध्ये त्वङ्ग प्रस्तु' क. घ. पाठः. ६. 'रासिद्ध ए' ङ. पाठः. ७. 'मान्तरं द' क. पाठः. ८. 'वल', ९. 'अ', १०. 'शव', ११. 'स्तु नप' घ. पाठः.

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुज-स्यालानत्वाद्यारोपो युज्यते।

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव! सद्वंशमुक्तारत्नं न कैर्भवान् ॥

इति,

---

सम्प्रदायप्रकाशिनी

आलानमिति । दृषदां सेतुः शिलासङ्क्रमः । सङ्ग्राम एवामृत-सागरः ।

अश्लिष्टशब्दतां दर्शयति — अत्र जयादेरित्यादि । कुञ्जरत्वा-द्यारोप इति निमित्तसप्तमी । युज्यत इति नियततदारोपणोपायत्वमा-लानत्वाद्यारोपस्य दर्शितम् । तदेतदुभयं मालात्मकम् ।

अथान्यथा दर्शयति — अलौकिकेत्यादि । अलौकिकः प्र-काशः प्रकृते राजन्युपचर्यमाणो रूपकसाधकः । वंश एव वंश इति श्लिष्टशब्दनिबन्धनत्वम् ।

साहित्यचूडामणिः

आलानमिति । अत्र जयादेः कुञ्जरत्वाद्यारोपो भुजस्यालानत्वरूपणे निमित्तम् ।

अन्येषामन्यथा श्लिष्टाद् भेदमाह — भिन्नशब्देति ।

नन्वेतदुदाहरणद्वयं मालावैचित्र्योत्तरमदायि, तत् किं मालात्वं चमत्कार-कारीति शङ्कां भङ्क्तुमुदाहरणपुरस्सरमाह — अलौकिकेति । सद्वंशोऽन्वय एव वेणुः तस्य मुक्तारत्नमिति श्लेषः । कुलस्य वेणुत्वारोपो वर्णनीयस्य मुक्ता-मणित्वारोपे निमित्तम् ।

निरवधि च निराश्रयं च यस्य
स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्त्ति-
र्जयति चतुर्दशलोकवल्लिकन्दः ॥

इति चामालारूपमपि परम्परितं द्रष्टव्यम् ।

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥

इत्यादिरशनारूपकं न वैचित्र्यवदिति न लक्षितम् ॥ ९ ॥

---

सम्प्रदायप्रकाशिनी

**निरवधीति** । स्थितं स्थानम् । एतदश्लिष्टशब्दम् । उभयम-प्येतदमालारूपम् ।

**परम्परितं द्रष्टव्यमिति** । न्यायसिद्धत्वात् सूत्रेणानिरूपणेऽपि स्वयमुन्नेयमित्यर्थः ।

**किसलयेति** ।

अत्र किसलयादयो भिन्नसम्बन्धिनः करत्वादिरूपणेन स्थगित-प्रतीतयश्चेति रशनात्वेनोपनिबद्धा अपि न वैचित्र्याय कल्पन्ते । अतो रशनारूपकं न लक्षितमित्याह — इत्यादीत्यादि । इत्थमष्टधा रूप-कालङ्कार इह दर्शितो बोद्धव्यः । तथाहि — सावयवं समस्तवस्तुवि-षयमेकदेशविवर्ति च, निरवयवं केवलं मालारूपं च । परम्परितं तु श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विशाखं तत् केवलं मालारूपं चेति ॥ ९ ॥

साहित्यचूडामणिः

**निरवधीति** । चतुर्दश लोका एव वल्ल्यो लताः तेषां कन्दः इति वाचकस्य भेदः । आदिकूर्मस्य कन्दत्वे लोकानां वल्लित्वं हेतुः ।

**अमालारूपम्** अमालाकारम् ।

**न लक्षितं** सूत्र इति शेषः ॥ ९ ॥

---

1. 'न्धना अ' ङ. पाठः.

**प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः ।**

**उपमेयमसत्यं कृत्वोपमानं सत्यतया यत् स्थाप्यते सा अपह्नुतिः । उदाहरणम् —**

सम्प्रदायप्रकाशिनी

**प्रकृतं यदित्यादि** । प्रकृतनिषेधपुरस्कारेणाप्रकृतसाधनमपह्नुतिः ।

**व्याचष्टे—उपमेयमसत्यमित्यादि**[1] । अतः प्रकृतनिह्नवाप्रकृतप्रतीतिमात्रं नापह्नुतिः । मुखं न भवति नूनं चन्द्र इत्यादावपि प्रस(क्त?)क्तेः । नायं विशेषः सान्धिविग्रहिकेण चेतितः । एवमादिष्वलङ्कारेषु विशेषतः सामान्यतस्त्वापरिसमाप्तेर्दशमोल्लासे[2] स न प्रमाणम् । किं बहुना

"सन्त्येव तत्रतत्र स्खलितानि बहूनि सान्धिविग्रहिके ।
तदपि न दृष्टोऽस्माभिः स इवाद्यतनेषु[3] काव्यमीमांसुः[4] ॥"

सेयमलङ्कारमीमांसासूक्ष्मेक्षिका तेषामेव गोचरः, यैरेवालङ्कारसर्वस्वं सुपरिशील्य विशेषाय काव्यप्रकाशहृदयं निज्ञातम्[5] । अतः सर्वस्वसञ्जीविन्यामभिरतैः सम्प्रदायप्रकाशिन्यां भूयो भूयोऽभिरन्तव्यं सच्चेतोभिः ।

साहित्यचूडामणिः

(एँवंविधेति ?) ॥ ९ ॥

अपह्नुतिमाह—**प्रकृतमिति** । प्रकृतस्योपमेयता ।

निषेधशब्दार्थमाह—**उपमेयमसत्यं कृत्वेति** । अर्थादुपमानं सत्यं क्रियत इतीयं भूतार्थापह्नुतिरित्याख्यायते । यत्सूत्रं 'विषयापह्नवेऽपह्नुतिः' (अलङ्कारसू० २०) इति । 'वस्त्वन्तरप्रतीतिरित्येव' औपम्यं पुनरीषदनुस्यूतमनुभूयते । उक्तं हि —

"अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा ।
भूतार्थापह्नवेनास्या निबन्धः क्रियते बुधैः ॥"

इति । उपमानगुणाधिक्यादुपमानत्वमेवं निबन्धनमिति मनाग् गर्भीकृतौपम्या अपह्नुतिरिति यावत् । द्विधा चास्या बन्धच्छाया मुख्येन निषेधेन छलादिशब्दप्रयोगेण च । पूर्वत्र वाक्यभेदः, उत्तरत्रैकवाक्यता । अपह्नवपूर्वकत्वमारोपस्य आरोपपूर्वकत्वं चापह्नवस्येति द्वैविध्यं चमत्कारविशेषासिद्धेरवधीरितं ग्रन्थकारेण ।

१. 'दित्या' क. ग. घ. ङ. पाठः. २. 'से न' ख. ग. ङ. पाठः. ३. 'द्य' क. घ. पाठः. ४. 'मांसासु' ख. ग. पाठः. ५. 'स सरसे' क. घ. पाठः. ६. 'पि' ख. पाठः. ७. 'विधस्येति' ८. 'ग' घ. पाठः. ९. 'नमेवेति नि' ग. पाठः. १०. 'वेन्ध', ११. 'गन्तर्हितौप' घ. पाठः.

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये!
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥

इत्थं वा—

सम्प्रदायप्रकाशिनी

अवाप्तः प्रागल्भ्यमिति । इयं शरन्निशासु शैलदुहितरं प्रति विस्रम्भरसिकस्य[1] शिवस्योक्तिः । परिणतरुचः प्रौढप्रभस्य शशाङ्कस्य वपुषि प्रागल्भ्यमवाप्तः परिणतरुक्त्वेन परिपूर्णमण्डले स्फुटोपलक्ष्यतामवाप्तः कलङ्कोऽयं विलसतीति यत् प्रतिपद्यसे, नैतद् इत्थम् । कथं तर्हि, अमुष्य विगलदमृतस्यन्दाशिशिरे उरसि[2] रतिश्रान्तेयं रजनिरमणी गाढं शेते इति मन्ये । इयं वाच्या ।

अन्यथापि[3] दर्शयितुमाह— इत्थं वेत्यादिना ।

साहित्यचूडामणिः

अवाप्त इति । अत्र वाक्यद्वयेन चान्द्रमसं कलङ्कमनया निषेधवृत्त्या मिथ्यात्वेनावस्थाप्य तत्प्रतिवस्तुभूता हृदयाधिशयिनी निशीथिनीनितम्बिनी सत्यतया स्थाप्यते । अयं चापह्नवपूर्व आरोपः । आरोपपूर्वोऽपह्नवो यथोदाह्रियते कैश्चिद्

"विकसदमरनारीनेत्रनीलाब्जषण्डा-
न्यधिवसति सदा यः संयमाधःकृतानि ।
नर्तुं रुचिरकलापे[4] वर्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥"

इति । अत्र स्कन्देनाधःक्रियमाणानि नाकनितम्बिनीनेत्रनीलोत्पलानि न पुनरौपवाह्यबर्हिबर्हाणीत्यारोपोत्तरकालोऽपह्नवः । नकारश्रवणान्निषेधस्य मुख्यत्वं च ।

१. 'म्भ' ङ. पाठः. २. 'सि विश्रा' क. घ. पाठः. ३. 'था द' ङ. पाठः. ४. 'तु ललितक' घ. पाठः.

बत सखि! कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥

अत्र हि न सभृङ्गाणि सहकाराणि अपि तु सकाल-कूटाः शरा इति प्रतीतिः । एवं वा—

अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥

---

सम्प्रदायप्रकाशिनी

बत सखीति । रागिलोके कियन्निरवधीत्यर्थः । तथाहीति विशेषोपन्यासाय । उट्टङ्कितं विनिहितम् ।

प्रतीयमानतां दर्शयति—अत्र हि न सभृङ्गाणीत्यादि ।

अमुष्मिन्निति । लावण्यामृतसरसि जघनभागे इति रूपणम् । रोमावलिवपुः परिणमति रोमावलीरूपतामापद्यत इत्यर्थः । अत्रापि

साहित्यचूडामणिः

छलादिप्रयोग उदाहरति—बतेति ।

अत्र छलप्रयोगस्य निषेधपर्यवसायितामाह—न सभृङ्गाणीति । एक-वाक्यत्वं च स्पष्टम् । प्रतीतिरिति । नाभिधेति यावत् ।

वैचित्र्यान्तरप्रदर्शनाय पुनरुदाहरति—अमुष्मिन्निति । अत्र प्रकृत-वस्त्वन्तररूपताभिधायिशब्दनिबन्धनोऽयमेव इति विशेषः ।

---

१. 'कामिलो' ख. ग. पाठः. २. 'के स' ख. ग. ङ. पाठः. ३. 'हि स' ख. ग. पाठः.
४. 'र' क. ग. घ. पाठः. ५. 'गतमिति' ख. पाठः.

अत्र न रोमावलिः अपितु धूमशिखेयमिति प्रतीतिः[1]। एव-
मियं भङ्ग्यन्तरैरप्यूह्या ।

**श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत् ॥१०॥**

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स
श्लेषः । उदाहरणम् —

---

सम्प्रदायप्रकाशिनी

व्यङ्ग्यं[2] दर्शयति — **अत्र न रोमावलिरित्यादि** । इत्थं कृतवादि-
शब्देनापि व्यङ्ग्यत्वं द्रष्टव्यमित्याह — **एवमियमित्यादि** । भङ्गिः
रीतिः ।

**श्लेषः स इत्यादि** । एकस्मिन् वाक्ये क्रियाकारकसङ्घाते ।

व्याचष्टे — **एकार्थेति** । एकार्थप्रतिपादकानामिति शब्दाना-
मश्लिष्टतोक्ता ।

साहित्यचूडामणिः

श्लेष इति ।

एकस्यार्थस्योक्तौ सामान्यसिद्धायां संयोगादिव्यवस्थापकाभावादुक्तेरनि-
यन्त्रणादनेकार्थस्याभिधानसामर्थ्यम् आर्थोऽयं श्लेष इत्याह— **एकार्थेति** । नैवं
शाब्दः स हि प्रत्यर्थं शब्दनिवेश इति दर्शने इत्यभाणि । अयं तु शब्दस्यै-
कस्य बह्वर्थत्वमस्तीति मते । ततश्च जतुकाष्ठन्यायेन शब्दयोः श्लेषः शाब्दः ।
एकवृन्तव्यवस्थितफलद्वयन्यायादर्थद्वयस्य शब्दे[3] श्लेष आर्थः । शब्दपरिवृत्त्यस-
हिष्णुतायां शाब्दः अन्यथा त्वार्थ इति घण्टापथः । तत्रोदात्तादिविरिब्धभे-
दात् प्रयत्नविशेषाच्च । शब्दाऽन्यथाभावे शाब्दः, यत्र प्रायेण पदभङ्गः । विरि-
ब्धैक्ये प्रयत्नाभेदे चार्थः यत्र न पदभङ्गः इत्यौद्भटी मर्यादा प्रागेव प्रत्या-
ख्याता ।

---

१. 'प्रतिपत्तिः । ए' ख. पाठः. २. 'ङ्ग्यतां द' ख. ग. ङ. पाठः. ३. 'ब्दस्यान्य' घ. पाठः.

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति[1] क्रियाः ।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥

**अत्राभिधाया अनियन्त्रणाद् द्वावप्यर्कभूपौ वाच्यौ ॥१०॥**

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः**

प्रकृतार्थप्रतिपादकवाक्येन[2], श्लिष्टविशेषणमाहात्म्यात्, नतु विशेष्यसामर्थ्यादपि, यदप्रकृतस्यार्थस्याभिधानं सा समा-

---

सम्प्रदायप्रकाशिनी

**उदयमिति** । अयते गच्छति । विभाकर इति राजा रविश्च । अत्रोदयादीनामर्थानां पर्यायपरिवर्तनेऽपि नार्थश्लेषहानिः । नन्वर्कस्य व्यङ्गताप्रतीतेः कथं श्लेष इत्यत आह — **अत्राभिधाया इत्यादि** । उदयवर्णनस्यापि प्राकरणिकत्वविवक्षणादनियन्त्रणमभिधायाः ॥१०॥

**परोक्तिरित्यादि** । परोक्तिरप्राकरणिकप्रतिपादनम् । भेदकै-र्विशेषणैः ।

व्याचष्टे — **प्रकृतार्थेत्यादि** । प्रकृतार्थप्रतिपादनपरे वाक्ये

साहित्यचूडामणिः

**उदयमिति** । अत्रोदयादीनां पदानां परिवृत्तिसहिष्णुत्वं स्पष्टम् ।

नन्वत्रैकोऽर्थो वाच्यः अन्यो व्यङ्ग्योऽस्त्विति चेदाह — **अभि-धाया इति** । **अर्कभूपाविति** । न खलु भूपस्य वाच्यत्वमर्कस्य व्यङ्ग्यत्वमिति वैषम्यम् अर्थद्वयस्यान्वितत्वेन वक्तव्यत्वात् ॥ १० ॥

समासोक्तिमाह— **परोक्तिरिति** । परमित्यप्रकृतं तस्योक्तिः । विशेषणैः श्लेषशालिभिः । तानि हि निसर्गात् प्रकृतस्यार्थस्याभिधाने प्रगल्भानि ।

---

१. 'ते' ग. पाठः. २. 'केन वा' ख. ग. पाठः. ३. 'तीयते तथा श्ले' क. घ. ङ. प ठः. ४. क्तुमिति स' घ. पाठः.

सेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः । उदाहरणं —

ळहिऊण तुज्झ बाहुप्फंसं[1] जीए[2] स को वि उळ्ळासो ।
जअळच्छी तुह विरहेण होज्ज मा दुब्बळा णं सा ॥

सम्प्रदायप्रकाशिनी

विशेष्यांशनैरपेक्ष्येण श्लिष्टविशेषणमाहात्म्याद् यदर्थान्तरप्रतिपादनं सा संक्षेपेणोक्तेः समासोक्तिः ।

ळहिऊणेति ।

"लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।
जयलक्ष्मीस्तव विरहेण भवतु मा दुर्बला ननु सा ॥"

बाहुस्पर्शो दोस्सन्निधिः पाणिपीडनं च । उल्लासोऽभिवृद्धिर्हर्षश्च[3] । दुर्बला निस्थैर्या कृशा च ।

साहित्यचूडामणिः

न्वित्यनेन श्लेषाद् व्यवच्छेदः । निर्वक्ति — समासेनेति । तथोक्तं —

"यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणैः ।
सा समासोक्तिरुदिता संक्षिप्तार्थतया यथा ॥"

इति । विशेषणसाधारण्यवशेन हि प्रतिष्ठमानमप्रकृतं प्रस्तुतावच्छेदकत्वेन प्रवर्तते । यथाचोक्तं —

"प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः ।
अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥"

इति । यच्च सूत्रं 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरि'(अलङ्कारसू० ३१)ति । विशेष्यस्यापि साम्ये श्लेषत्वप्राप्तेः । यच्च वामनः— 'अनुक्तौ समासोक्तिरि'(४. ३. ३)ति । अनुक्तिरुपमेयस्य । अस्यां च व्यवहारसमारोपः प्रायेण । न रूपसमारोपः । यतो न रूपकत्वप्रसङ्गः ।

ळहिऊणेति ।

"लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा"

१. 'प्फ', २. 'जी'. ग. पाठः. ३. 'सो वृ' ख. ग. पाठः. ४. 'दं', ५. 'लुभवेद् दु' ग. पाठः.

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्तीति ।

निदर्शना ।

**अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ॥ ११ ॥**

निदर्शनं दृष्टान्तीकरणम् । उदाहरणं—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

सम्प्रदायप्रकाशिनी

अत्र विशेषणेषु तु श्लिष्टतेत्याह—**अत्र जयलक्ष्मीत्यादि** ।

**निदर्शनेत्यादि** । अघटमानो वाक्यार्थसम्बन्धो यदुपमां परिकल्पयति सा निदर्शना ।

लक्ष्यपदं निर्वक्ति—**निदर्शनं दृष्टान्तकरणमिति** ।

**क्व सूर्येति** । प्रभव उत्पत्तिस्थानम् । उडुपं काष्ठादिप्लवः । अत्र पूर्वोत्तरवाक्यार्थयोरघटमानः सम्बन्ध उपमां परिकल्पयति ।

साहित्यचूडामणिः

इति । अत्र बाहुस्पर्शलाभादीनां विशेषणानां नायिकावस्थाविशेषद्योतकत्वादलङ्कारोत्थानमित्याह — **जयलक्ष्मीशब्दस्येति** । अन्येषां प्रकृतार्थस्येतरस्य च साधारणत्वात् । इयं च लौकिके लौकिकस्य शास्त्रीये शास्त्रीयस्य लौकिके शास्त्रीयस्य शास्त्रीये च लौकिकस्य व्यवहारः समारोप्यते इति चातुर्विध्यमुखादानन्त्यमध्यास्ते । तत्राद्यामत्रोदाहरतोऽन्या बहिरूहनीया इति संक्षेपविवक्षा ग्रन्थकारस्य ।

**निदर्शनेति** । अभवन्नविद्यमानो वस्तुनोः संबन्धः तात्पर्यचिन्तायामुपमायाः परिकल्पकः ।

**दृष्टान्तीकरणम्** उक्तार्थसमर्थनप्रकारः, नतु शुद्धो दृष्टान्तः उपमावयवसर्वस्वप्रतिबिम्बनाभावात् ।

**क्व सूर्येति** ।

१. 'वद्वस्तु', २. 'न्ती' ग. पाठः. ३. 'षु श्लि' ङ. पाठः. ४ 'ष्टापरिक्ल' ग. पाठः. ५. 'पदस्ये' घ. पाठः. ६. 'अ' ग. पाठः.

अत्रोडुपेन सागरतरणमिव सन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति । यथावा —

उदयति विततोर्ध्वरश्मिरज्जा-
वहिमकरे हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम् ।

---

सम्प्रदायप्रकाशिनी

तदेतदाह — अत्रोडुपेनेत्यादि ।

पदार्थनिष्ठतयाप्युदाहरति — उदयतीति ।

निदर्शनात्वं दर्शयति — अत्र कथमन्यस्येत्यादि[1,2] ।

साहित्यचूडामणिः

अत्र सूर्यवंशमत्योर्विषयविषयिभावानौचित्यलक्षणे वाक्यार्थे सागरस्योडुपेन तरणलक्षणं वाक्यार्थान्तरमारोप्यत इति मत्वा सूर्यवंशवर्णनमुडुपेन सागरतरणमिवेत्युपमायां विश्राम्यतीत्याह—उडुपेनेति । यत्र निरपेक्षयोर्वाक्यार्थयोः बिम्बप्रतिबिम्बभावः तत्र दृष्टान्तो वक्ष्यते, यत्र तु प्रकृते वाक्यार्थे वाक्यार्थान्तरमारोप्यते सामानाधिकरण्येन सेयं संबन्धानुपपत्तिनिबन्धना निदर्शना ।

एवं वाक्यार्थवृत्तिमुदाहृत्य पदार्थवृत्तिमुदाहरति — उदयतीति । अत्र कथमन्यस्य वारणेन्द्रस्य लीलामन्यो रैवतको वहति अन्यसंबन्धिनो भावस्य वस्त्वन्तरेण वोढुमशक्यत्वात् । तेन च लीलासदृशीं लीलामसौ वहतीत्यदूरविप्रकर्षात् प्रतिबिम्बेनोक्तिरुपमापर्यवसायिनी ।

तदेतदाह — कथमिति ।

---

१. 'न्योन्यस्ये' ग. पाठः. २ 'स्येति । दो' क. घ. पाठः ।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्ग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव !
यस्ते गुणान् गदितुमुद्यममादधाति ॥

इत्यादौ मालारूपाप्येषा द्रष्टव्या ॥ ११ ॥

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च सापरा ।**

क्रिययैव स्वरूपस्वकारणयोः सम्बन्धो यदवगम्यते सा अपरा निदर्शना । यथा —

---

सम्प्रदायप्रकाशिनी

**दोर्भ्यामिति** । तव गुणेषु गदितुमुद्यमो दोर्भ्यामब्धितितीर्षासम इत्यर्थः । अत्राप्राकरणिकैः प्रत्येकं प्राकरणिकाभिसम्बन्धे मालारूपता ॥ ११ ॥

निदर्शनान्तरमाह — **स्वस्वहेत्वित्यादि** । क्रिययैव स्वरूपं स्वकारणसम्बन्धश्चावबोध्यते चेत् सापरा सम्भवद्वस्तुसम्बन्धा निदर्शना।

व्याचष्टे — **क्रिययैव स्वरूपेत्यादि** ।

साहित्यचूडामणिः

**दोर्भ्यामिति** । त्वद्गुणान् वक्तुमुद्युङ्क्त इति वाक्यार्थे दोर्भ्यां समुद्रं तितीर्षतीत्यादिवाक्यार्थान्तरं सामानाधिकरण्येनाध्यारोप्यत इत्युपमावश्यम्भावः। मालावैचित्र्यं च सर्वालङ्कारसाधारणम् ॥ ११ ॥

अथ सम्भवद्वस्तुसम्बन्धां दर्शनान्तरेण निदर्शनामाह — **स्वस्वेति** । क्रियातद्धेतोः संबन्धप्रतीतावपि यत्र सहकारिनैरपेक्ष्यं तत्र चमत्कारातिशय इत्याह—**क्रिययैवेति** । यद्वामनः — 'क्रिययैव स्वतदर्थान्वयख्यापनं निदर्शनमि'(४-३-२०)ति । संलुलितहेतुदृष्टान्तविभागः प्रयोग इति यावत् ।

---

१. 'यदा योऽव' क. ग, 'योऽत्र' ख. पाठः. २. 'कैः सम्बन्धैः प्र' ङ. पाठः.

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन्[1] ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥

अत्र पातक्रियया पतनस्य लाघवे सत्युन्नतपदप्राप्ति[2]-रूपस्य कारणस्य च सम्बन्धः ख्याप्यते ।

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ १२ ॥**

---

सम्प्रदायप्रकाशिनी

**उन्नतमिति** । यो लघुः सन् उन्नतं पदमाप्नोति, स हेलया अप्रयत्नेन पतेदित्यमुमर्थमवबोधयन् शैलशेखरगतो दृषत्कणः शर्करा-खण्डः चारुणा ललितेन मरुता हतमात्र एवाधः पतति ।

योजयति — **अत्र पातक्रियये**त्यादि । पातक्रियया अधः पत-तीति वाक्यार्थीभूतया । पतनस्य पतेदित्युद्दिष्टस्य । लाघवे सतीति कारणस्वरूपकथनम् । सम्बन्धः ख्याप्यत इति सम्भवद्वस्तुसम्बन्धता ख्यापिता ।

साहित्यचूडामणिः

**उन्नतामिति** ।

अत्र तदीया[3] पतनक्रिया साध्यं, तस्या हेतुर्लाघवे सत्युन्नतपदप्राप्तिः । तयोरन्वय उन्नतं पदमवाप्य यो लघुः स पतेदिति । स[4] क्रिययैव शुद्धया ख्याप्यत इत्याह — **पातक्रियये**ति । (ध्रु?ब्रु)वन्निति तत्ख्यापनप्रयोगा-दस्ति वस्तुसम्बन्धः । दृषत्कणसमासारः सर्वो[5] लघुरित्युपमाविश्रान्तिश्च ।

"अभवन् वस्तुसम्बन्धो भवन् वा यत्र कल्पयेत् ।
उपमानोपमेयत्वं कथ्यते सा निदर्शना ॥"

इति ।

---

१. 'ति ध्रुवम् ।' ग. पाठः. २. 'तिप्रा' क., 'तप्रा' ख. पाठः. ३. 'लाघवीया' ख. पाठः. ४. 'सं', ५. 'र्वो लोक इत्यु' घ. पाठः.

अप्राकरणिकस्यार्थस्याभिधानेन प्राकरणिकस्यार्थस्याक्षेपोऽप्रस्तुतप्रशंसा॥ १२ ॥

सा च,

**कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा॥ १३॥**

---

सम्प्रदायप्रकाशिनी

**अप्रस्तुतेति**। अप्रस्तुतस्याप्राकरणिकस्य प्रशंसा या सा सैव अप्रस्तुतप्रशंसैव। ननु अप्रस्तुतप्रशंसा न युज्यते अप्रस्तुतत्वादेवेत्यत आह — **प्रस्तुताश्रयेति**। प्रस्तुतावच्छेदिका।

**व्याचष्टे — अप्राकारणिकस्येत्यादि**॥ १२॥

**विशेषानाह — सा च कार्य इत्यादिना**। कार्ये प्रस्तुते सति तत्प्रत्यायकत्वेनाप्रस्तुतस्य कारणस्योक्तिरेका। निमित्ते नैमित्तिकस्य द्वितीया। सामान्ये विशेषस्य तृतीया। विशेषे सामान्यस्य चतुर्थी। तुल्ये तुल्यान्तरस्य पञ्चमी।

साहित्यचूडामणिः

**अप्रस्तुतप्रशंसेति**। प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिरुक्ता। विपर्ययादप्रस्तुतप्रशंसा। अप्रस्तुतस्य या प्रशंसा सा सैवेति निगदव्याख्यातम्। लक्षणमिति यावत्।

अस्याः प्रथमं पञ्चधा विभाग इत्याह — **कार्य इति**। तदन्यस्य तेभ्यः कार्यादिभ्यो व्यतिरक्तिस्य कारणादेः। प्रशंसेति वर्णनोपलक्षणं निन्दाया अपि वर्ण्यमानत्वात्। यत्सूत्रम् 'अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च[1] प्रस्तुतप्रतीतावप्रस्तुतप्रशंसे'(अलङ्कारसू० ३४)ति। अयुक्तं खल्वप्रस्तुतस्य वर्णनम् अप्रस्तुतत्वादेव। तत् प्रस्तुततात्पर्ये कदाचिद् युक्तं स्यात्। नाप्यप्रस्तुतादसंबन्धे प्रस्तुतप्रतीतिः अतिप्रसङ्गात्। सम्बन्धश्च भवंस्त्रैविध्यं[2]

---

१. 'न्येन वि' क. ग. घ. ङ. पाठः. २. 'च संबन्धे प्र' ग. पाठः.

तदन्यस्य कारणादेः । क्रमेणोदाहरणं —

याताः किं न मिलन्ति सुन्दरि! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥

अत्र प्रस्थानात् किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम् ।

---

सम्प्रदायप्रकाशिनी

व्याचष्टे — तदन्यस्येति ।

याता इति । मिलन्ति संयुज्यन्ते । लज्जामन्थरत्वे साक्षाद् दयितेन प्रयाणप्रस्तुतिर्हेतुः । निपतत्पीताश्रुणा निपतदेव निह्नुतमश्रु येनेत्यर्थः । विरहदुःखपरिहारहेतुत्वान्मरणस्योत्साहत्वं तया सूचित इत्युत्तरेण सूचितम् ।

प्रश्नमुद्घाटयन् योजयति — अत्र प्रस्थानादित्यादि । मरण-सूचनं कारणम् ।

साहित्यचूडामणिः

नातिक्रामति । सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्येति । एवं कार्यकारण-भावेऽपि । सारूप्ये पुनरेको भेद इत्यसौ पञ्चभे(दा ? दः) । ऐकरूप्यहेतुकश्च भेदः श्लेषाद्यलङ्कारवैचित्र्यात् त्रिधा । पुनश्च वाच्यस्य संभवासंभवोभयरूपतया त्रिधेति षोढा ।

याता इति । हसितेनान्तःसाहसद्योतकेन कार्ये पृष्टे प्रश्नद्वारा कार्यस्य प्रस्तावे प्रस्थानस्य निर्णीतत्वात् कारणं मरणोपक्रमसूचनरूपम् ।

---

१. 'नौ' ग. पाठः. २. 'द्वाराश्रु' ख. ग. पाठः. ३. 'त्स' ख. पाठः. ४. 'चितं का' ङ. पाठः. ५. 'न्यं विशे', ६. 'षो वा सा' घ. पाठः.

राजन्! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्य[1]मुक्तम् ।

सम्प्रदायप्रकाशिनी

राजन्निति । राजसुतादयः पाठनाद्यधिकृताः ।

योजयति[2]— अत्र प्रस्थानेति । सहसैवेति शुकस्य शून्यत्वापरिज्ञानं सूचितम् ।

साहित्यचूडामणिः

राजन्निति । कार्यं पञ्जरशुकवृत्तान्तस्वभावम् । ननु

"येन लम्बालकः सा[3]स्रः कराघातारुणस्तनः ।
अकारि भग्नवलयो गजासुरवधूजनः ॥"

इत्यत्र गजासुरवधूविषयेण लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवधः प्रतीयते । तस्मादप्रस्तुतप्रशंसाक्रान्तत्वात् पर्यायोक्तस्य वक्ष्यमाणलक्षणस्य निर्विषयत्वापात इति चेत् । न । यत्र कार्यात् कारणं प्रतीयते तत्र कार्यं प्रस्तुतमप्रस्तुतं चेति द्वयी गतिः । यत्र प्रस्तुतत्वं कार्यस्य कारणवत् तस्यापि वर्णनीयत्वात् तत्र कार्यमुखेन कारणमुच्यत इति पर्यायोक्तं कारणापेक्षया कार्यस्यातिशयेन वर्णनार्हत्वात् । यत्र पुनः कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुतं वर्ण्यते तत्राप्रस्तुतप्रशंसा । किञ्च । यत्र वाच्योऽर्थोऽर्थान्तरं तादृशमेव स्वोपस्कारकत्वेनागूरयति तत्र पर्यायोक्तम् । यत्र त्वसौ स्वात्मानमेवाप्रस्तुतत्वात् प्रस्तुतमर्थान्तरं प्रति समर्पयति तत्राप्रस्तुतप्रशंसा । यथात्र दण्डयात्रोद्यतं त्वां दृष्ट्वा त्वदरयः पलाय्य गता इति कारणरूपस्यार्थस्य प्रस्तुतत्वात् कार्यरूपोऽर्थोऽप्रस्तु[4]तराजशुकवृत्तान्तस्व[5]भावः प्रस्तुतार्थमात्मानं समर्पयतीति ।

---

१. 'र्यमभिहितम् ।' ख. पाठः. २. 'ति त्वत्प्रस्था' ख. ग. पाठः. ३. 'स्त्रा' ग. पाठः. ४. 'त वए रा', ५. 'स्याप्रस्तुतत्वात्प्र' घ. पाठः.

एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-
स्तत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा ॥

अत्रास्थाने जडानां ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान् स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥

सम्प्रदायप्रकाशिनी

एतत् तस्येति । पाथःकणं मुक्तामणिरित्यमंस्तेति यत् एतत् तस्य मुखात् कियद् वक्ष्यमाणजडापेक्षया जाड्यमेतदल्पकमित्यर्थः । अस्माच्छृण्वन्नपि मुक्तामणित्वेन मन्तुः सकाशाद्विमर्शनसमनन्तरं मिथ्येति शृण्वन्नपि मम मुक्तामणिरुड्डीय गत इति यः शुचा न निद्राति स सुतरां जड इत्यर्थः ।

योजयति — अत्रास्थान इति ।

सुहृद्वध्विति । वैरप्रतियातनेन वैरप्रतीकारेण न पुनराश्वासनमात्रेण । अत्र प्रबन्धान्तःश्लोके विशेषस्य प्रस्तुतत्वमुद्घाटयन्

साहित्यचूडामणिः

एतदिति । मुखेन वाङ्मात्रं लक्ष्यते । कियद् जाड्यमिति । अङ्गुल्यग्रेत्यादिना तस्य विदग्धम्मन्यता समुन्मील्यते ।

विशेष इति । मुक्ताफलभ्रान्तिलक्षणः ।

सुहृदिति । वैरस्य शात्रवस्य प्रतियातनं शोधनम् ।

---

१. 'ह' इति मूलकोशपाठः. २. 'पयःक' ख. ङ. पाठः. ३. 'जरडा' ग. पाठः ४. 'र्शस' ङ. पाठः. ५. 'न्तरश्लो' ख. ङ. पाठः. ६. 'न्तिमत्त्वल' ग. पाठः.

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं शमयिष्यसि तत् त्वमेव श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुदितम्। तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः। श्लेषच्छाया समासोक्तिः सादृश्यमात्रं वा तुल्यान्तरस्याक्षेपहेतुः। क्रमेणोदाहरणं —

पुंस्त्वादपि प्रविचलेद् यदि यद्यधोऽपि
यायाद् यदि प्रणयनेन महानपि स्यात्।
अभ्युद्धरेत् तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन॥

सम्प्रदायप्रकाशिनी

योजयति—अत्र कृष्णमित्यादि। तुल्यत्वनिबन्धना त्रिधेत्याह[1]—तुल्ये प्रस्तुत इत्यादि। समासोक्तिर्विशेष्यस्य[2] साम्यं विना संक्षिप्योक्तिमात्रमित्यर्थः। हिर्हेतौ। श्लेषादित्रयस्य तुल्यान्तराक्षेपहेतुत्वादित्यर्थः।

पुंस्त्वादपीति। पुंस्त्वात् प्रविचलनमेकदा स्त्रीत्वापत्तिः अन्यदा साहसादुपरमः। अधोयानं पातालावतरणं न्यग्भावश्च। प्रणयनेन महत्त्वं याचनेन वृद्धिः। विश्वोद्धरणं[5] भूमेरुद्धनं जगदवनं च। दिक् महासत्त्वतापकार[6] इत्यर्थः। पुरुषोत्तमो विष्णुर्महापुरुषश्च। अत्र विशेषणविशेष्योभयांशे शब्दसाम्याच्छ्लेषेण[7] तुल्यान्तराक्षेपः।

साहित्यचूडामणिः

सामान्यं यथोक्तरूपम्। अथ पञ्चमं भेदं भिनत्ति — तुल्य इति। श्लेषसमासोक्त्याद्यलङ्कारान्तरं वैचित्र्यमित्याकूतम्। सादृश्यमात्रम् उपमा।

यद्यपीति विप्रकृष्टयोः सर्वत्रान्वयः। पौरुषात् प्रविचलनमसुरैरमृतापहारे स्त्रैणावलम्बनात्। अधोयानमादिकमठाद्याकारेण। प्रणयनेन महत्त्वं

१. 'स त्व' इति मूलकोशपाठः. २. 'स्य व्यक्षे' क. पाठः. ३. 'त्रिविधे' ख. ग. ङ. पाठः. ४. 'ष' ख, 'षसा' ङ. पाठः. ५. 'वृद्धिश्चोद्ध' क. ख. पाठः. ६. 'त्वप्र' ग. पाठः. ७. 'स्यात् शब्दश्ले' ङ. पाठः.

येनास्यभ्युदितेन चन्द्र! गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विष्फूर्जसे[1] ॥

आदाय वारि परितः सरितां मुखेभ्यः
किं नाम साधितमनेन दुरर्णवेन ।
क्षारीकृतं च बडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥

---

सम्प्रदायप्रकाशिनी

येनासीति । प्रतिकर्तुमेव युज्येत[2] प्रतीकार एव युक्त इत्यर्थः । एतदनुष्ठितं पादग्रहणं कृतमित्यर्थः । अत्राभ्युदय आविर्भावः सम्पत्तिश्च । पादग्रहः किरणसंस्पर्शः[3] चरणोपसंग्रहश्च । जडधामता शीतरुचित्वं[4] मान्द्यास्पदत्वं च । अत्र विशेष्यांशे श्लेषाभावात् समासोक्त्या ।

आदायेति । अत्र सरितां मुखाद् वार्यादानादेः प्रजाभ्यो वित्ताहरणादिना सह सादृश्यमात्रेण ।

साहित्यचूडामणिः

बलिबन्धोपक्रमे त्रिविक्रमौन्नत्यात् । विश्वाभ्युद्धरणं वराहादिना पृथिव्यादिप्रत्युज्जीवनम् । अत्र कुत्रचित् सत्पुरुषे प्रस्तुते तत्तुल्यस्वभावस्य भगवतः परमपुरुषस्य प्रशंसा श्लेषसंश्लेषेणानुगृह्यते । विशेष्ये पुरुषोत्तमपदेऽपि श्लेषेण[6] श्लेषः ।

येनेति । पादग्रहश्चरणोपसङ्ग्रहः किरणग्रहणं च । ततः किं लज्जसे अनुष्ठितानुतापे[5] नैष्फल्यात् । जडधामता शिशिरकिरणता मन्दतेजस्त्वं च । अत्र पादग्रहादाविव चन्द्रसूर्ययोर्विशेष्यभूतयोरपि श्लेषाभावात् समासोक्तिः ।

सादृश्यमात्ररूपायामुपमायामाह — आदायेति । अपव्ययकारिणि पुरुषे प्रस्तुते तत्सदृशः समुद्रो वर्ण्यते ।

---

१. 'ते' इति मूलकोशपाठः. २. 'ज्यते प्र' क. घ. पाठः. ३. 'संपर्कः च' क. पाठः. ४. 'रुक्त्वं मा', ५. 'त्तापह' ङ. पाठः. ६. 'षणं श्ले' घ. पाठः.

इयं च काचिद् वा[1] प्रतीयमानार्थानध्यारोपेणैव । यथा —

अब्धेरर्णःस्थगितभुवनाभोगपातालकुक्षेः
पोतोपायादिह हि बहवो लङ्घनेऽपि क्रमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात् तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्यः ॥

काचित्त्वध्यारोपेणैव । यथा —

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाकोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं[2] श्रूयताम्
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न छायापि परोपकारकरिणी मार्गस्थितस्यापि मे ॥

सम्प्रदायप्रकाशिनी

वैचित्र्यान्तरायाह[3] — इयं चेत्यादि ।

अब्धेरिति । पोतो वहित्रं तद्रूपादुपायादित्यर्थः । क्रमन्ते निर्व्याघातं प्रभवन्ति । आहो यदि । कल्यः दक्षः । महाप्रभुः पूर्णः[4] स्वाक्रमः रिक्तो दुराक्रम इत्यर्थः । अत्राब्धौ प्रभुवृत्तान्ताध्यारोपः ॥

कस्त्वं भो इति । शाकोटकः शाकोटः । तस्यैवं प्रश्नोत्तरिका नोपपद्यत इति प्रतीयमानाध्यारोप एव ।

साहित्यचूडामणिः

अथ वाच्यस्य सम्भवासम्भवावुदाहरिष्यन् सम्भवं तावदाह — इयं चेति । वाच्ये सम्भवति प्रतीयमानस्यार्थस्यानध्यारोपेण । अध्यारोपानपेक्षया ।

अब्धेरिति । अत्र वाच्ये समुद्रे सर्वाप्युक्तरूपा प्रक्रिया सङ्गच्छते ।

वाच्यस्यासम्भवस्थानमाह — काचिदिति । अध्यारोपेणैवासम्भवत्तया वाच्यस्य प्रतीयमानार्थसापेक्षत्वात् ।

कस्त्वामिति । अत्राचेतनेन सह प्रश्नोत्तरिकाया अनुपपत्तेः ।

१. 'च्येन प्र' इति मूलकोशपाठः. २. 'धतः श्रू', पाठः. ३. 'रित्यादि । पो' ख. पाठः. ४. 'र्णस्याक्र' क. घ. पाठः. ५. 'त्तान्तस्यारो' ङ. पाठः. ६ 'स्य' ग. पाठः. ७. 'क' घ. पाठः.

क्वचित्त्वंशे त्वध्यारोपेणैव । यथा —

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सम्यङ् निश्चितवानसि भ्रमर! हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः! क एष ग्रहः ॥

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः । कर्णचापलं तु हेतुः । मदः प्रत्युत सेवननिमित्तम् ॥ १३ ॥

सम्प्रदायप्रकाशिनी

**सोऽपूर्व** इति । रसनाविपर्ययः जिह्वापरिवृत्तिः वाक्पारुष्यं च । कर्णयोश्चापलं लोलता कर्णेजपसहिष्णुत्वं च । अन्तःशून्यकरत्वं सरन्ध्रशुण्डत्वं रिक्तहस्तता च । ग्रह आग्रहः ।

अंशेऽध्यारोपं दर्शयति — **अत्र रसनाविपर्यास** इत्यादि ॥ १३ ॥

साहित्यचूडामणिः

अथोभयरूपतामाह — **क्वचिदि**[२]ति । रसनाया विपर्ययः सन्निवेशविपर्यासः अनृतवादित्वं च । कर्णयोश्चापलं कर्णतालयोस्तारल्यं श्रोत्रयोः कर्णेजपोपजापशुश्रूषा च । मदो दानं दर्पश्च । वारणो गजः, वारयतीति निषेधकश्च । **शून्यकरः** सुषिरं[३]करः (कं? करः) शु(ण्डः? ण्डा) अनुदारश्च ।

**न हेतुरि**ति । रसनाविपर्यासादेरध्यारोप एव शरणं, यत्र वाच्यं न सम्भवति । सम्भवन्तमंशमाह—**कर्णचापलं त्वि**ति । कर्णतालरूपो हेतुरनध्यारोपितः, यत्र वाच्यं सम्भवतीति यावत् । प्रसङ्गात् सम्भवत्यंशेऽनौचित्यमुल्लिङ्गयति — **मद** इति । मदविस्मृतेत्यादि विरुद्धमित्याकूतम् । उक्तवैपरीत्येन भ्रमरसेवने[५] तस्य निमि[६]त्तत्वात् ।

१. 'ध्व' ग. पाठः. २. 'त्वि', ३. 'रशुण्डः अ', ४. 'वादित्यं', ५. 'नेन त', ६. 'त्तभूतत्वा' घ. पाठः

**निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।**
**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥१४॥**
**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।**
**विज्ञेयातिशयोक्तिः सा**

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका।

**यथा —**

---

सम्प्रदायप्रकाशिनी

**निगीर्याध्यवसानमिति** । उपमानेन निगीर्णस्योपमेयस्याभेदाध्यवसानमेकातिशयोक्तिः । अन्यत्वेनाध्यवसानमन्या । यद्यर्थस्य यदिच्छलादिशब्दस्योक्तौ वस्तुनोऽसम्भवतः कल्पनं तृतीया । कार्यकारणयोः पौर्वापर्यविपर्ययः कार्यस्य प्राग्भावाच्चतुर्थी ।

परिपाट्या विवृण्वन्नुदाहरति — **उपमानेनान्तरित्यादिना** ।

साहित्यचूडामणिः

अतिशयोक्तिमाह — **निगीर्येति** । अध्यवसायस्य साध्यतायामुत्प्रेक्षा समलक्षि, यत्र स्वरूपप्राधान्यम् । सिद्धत्वे तु तस्याध्यवसितप्राधान्यादतिशयोक्तिः । यत्सूत्रम् — 'अध्यवसितप्राधान्ये त्वतिशयोक्तिरि'ति । अस्याश्च पञ्चधा बन्धच्छाया अभेदो भेदे तद्विपर्ययः असम्बन्धः सम्बन्धे तद्विपर्ययः कार्यकारणयोः पौर्वापर्यविपर्ययश्च । तत्र निगीर्येत्यादिना प्रथमो लक्ष्यते । प्रस्तुतस्येत्यादिना द्वितीयः । असम्बन्धः सम्बन्धे बहिरूहनीयः । यद्यर्थोक्तावित्यनेनासम्बन्धे सम्बन्धरूपस्तुरीयः । पञ्चमस्तु कण्ठोक्तः । परेणाप्रकृतेनोपमानेन । यद्यर्थेत्यर्थग्रहणं चेच्छब्दोपसङ्ग्रहाय ।

**उपमानेनेति** । प्रकृतस्य तदन्येनोपमानेन विषयिणा कवलितस्य विषयरूपतयाध्यवसानमेकातिशयोक्तिः ।

---

१. 'र्थः' इति मूलकोशपाठः ।

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

अत्र मुखादि कमलादिरूपतयाध्यवसितम् । यच्च तदेवान्यत्वेनाध्यवसीयते सा अपरा । यथा —

अण्णं ळडहत्तणअं अण्णच्चिअ कावि वत्तणच्छाआ ।
सामा सामण्णपआवइणो रेह च्चिअ णहोइ ॥

यद्यर्थस्य यदिशब्देन चेच्छब्देन वोक्तौ यत् कल्पनम् अर्थादसम्भविनोऽर्थस्य सा तृतीया । यथा —

---

सम्प्रदायप्रकाशिनी

कमलमिति । कमलकुवलयादिनोपमानेन निगीर्णस्य मुखनयनादेस्तदभेदोऽध्यवसीयते ।

तदेतदाह — अत्र मुखादीति । यच्चेति । तदेवोपमेयमेव ।

अण्णमिति ।

"अन्यल्लटहत्वमन्यैव कापि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते[1] रेखैव न भवति ॥"

लटहत्वं प्रौढिः । वर्तनं शीलम् । अत्र लटहत्वादेरन्यता । यद्यर्थस्येति । कल्पनयैव कल्प्याक्षेपादर्थादित्युक्तम् । कल्प्यं च यद्यर्थोक्तेर[2]सम्भवि ।

साहित्यचूडामणिः

कमलमिति । अत्र मुखादीनां कमलादिभिर्भेदो[3]ऽप्यभेदोऽध्यवसित इत्याह — मुखादीति । अभेदे भेदरूपामाह — यच्चेति । साऽतिशयोक्तिः ।

अण्णमिति ।

"अन्यल्लडहत्वम् अन्यैव काचिद्वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥"

---

१. 'रचितैव' ङ. पाठः. २. 'क्तेऽस' ख. पाठः. ३. 'दव्यवस्थेत्या' घ. पाठः.

राकायामकलङ्कं चेदमृतांशोर्भवेद् वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा —

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ! लोचनविषयं त्वया भजता ॥

सम्प्रदायप्रकाशिनी

**राकायामिति** । पूर्णिमायामकलङ्कस्याभावान्निस्साम्यत्वमतिशयः । कारणस्य शीघ्रकारितां वक्तुमिति विपर्ययप्रयोजनम् ॥ १४ ॥

**हृदयमिति** । लोचनविषयभाजा हृदयाधिष्ठानं बाणाधिष्ठानकारणं पश्चाद्भावि । समकालत्वमपि पौर्वापर्यविपर्ययः । तत्रोदाहरणं स्फुटमिति न[3] प्रदर्शितम् ।

साहित्यचूडामणिः

इति । श्यामा योषित् । रेखा मर्यादा । अत्र लडहत्वादीनामभेदेऽप्यन्यत्वेनाध्यवसानाद् भेदः । असम्बन्धः सम्बन्धे बहिरूहनीयो यथा — 'अस्याः सर्गविधावि'त्यादि । अत्र पुराणब्रह्मनिर्माणे[4] सम्बन्धेऽप्यसम्बन्ध उक्त इति चिरन्तनाः । ग्रन्थकारस्य तदप्यभेदे भेद एवेत्याशयः ।

असम्बन्धे सम्बन्धमाह — **राकायामिति** । अत्र वास्तवेऽप्यसम्बन्धे सम्भावनया सम्बन्धः । इयमेव प्राचीनानामालङ्कारिकाणामतिशयोक्तिः । यदाहुः — 'सम्भाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिरि'ति । तत्र सम्भाव्यधर्मकल्पनेयम् ।

अन्तिमं भेदमाह — **कारणस्येति** । शीघ्रतरतां[1] वक्तुमिति प्रयोजनोपन्यासः । एवं कमलमनम्भसीत्येवमादावपि वदनादीनां वास्तवस्य सौन्दर्यस्य कविसमर्पितेन सौन्दर्येणाभेदाध्यवसानं भेदेऽप्यभेदवचनस्य प्रयोजनमुन्नेयम् ।

**हृदयमिति** । अत्र कारणस्य पूर्वभाविता पश्चाद्भाविता च कार्यस्य-

१. 'तरतां' ख., 'तरका' ग. पाठः. २. 'भाविता' क. ग. घ. ङ. पाठः. ३. 'न द' ख. ग. पाठः. ४. 'ण' ष. पाठः. ५. 'कार्यतां', ६. 'मियमिति' ग. पाठः.

**प्रतिवस्तूपमा तु सा ॥ १५ ॥**

**सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।**

साधारणो धर्म उपमेयवाक्ये[1] उपमानवाक्ये च कथितपदस्य दुष्टतयाभिहितत्वाच्छब्दभेदेन यदुपादीयते[2] सा वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा । यथा —

सम्प्रदायप्रकाशिनी

**प्रतिवस्तूपमा** त्विति । एकस्य साधारणधर्मस्य वाक्यद्वये द्विरवस्थानं[3] प्रतिवस्तुनः प्रतिवाक्यस्योपमेति प्रसिवस्तूपमा ।

व्याचष्टे—साधारण इत्यादि । नन्वेकस्य द्विःस्थितौ पौनरुक्त्यमित्यत आह — **कथितपदस्येति** ।

साहित्यचूडामणिः

त्वसमकालो विपर्ययः । समकालोऽपि समस्ति । यथा — 'अविरळविलोले'-त्यादि ।

**प्रतिवस्तूपमेति** । तुशब्देन दृष्टान्तादेरस्यां वैलक्षण्यमवश्यापेक्षणीयमित्युपक्षिप्यते । द्विः द्विवारम् असकृत् । स्थितिर्वृत्तिः निर्देश इत्यर्थः । सामान्यधर्मस्येवाद्युपादाने सकृन्निर्देशे उपमा—वस्तुप्रतिवस्तुभावादसकृन्निर्देशेऽप्युपमैव, इवाद्यनुपादाने सकृन्निर्देशे दीपकतुल्ययोगिते, असकृन्निर्देशे तु शुद्धसामान्यरूपत्वं बिम्बप्रतिबिम्बभावो वेति द्वयी प्रक्रिया । तत्राद्या प्रतिवस्तूपमा द्वितीया दृष्टान्तत्वेन दर्शयिष्यते ।

**कथितपदस्येति** । नैकं पदं द्विः प्रयोज्यमिति काव्यसमयमूलस्य दोषस्य हेयत्वात् । **वस्तुन** इति । वस्तुशब्दस्य वाक्यार्थवाचित्वात्[4] प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थाश्रयणात्[5] । यत्सूत्रं — 'वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ् निर्देशे प्रतिवस्तूपमे'ति ।

१. 'क्ये चोप' २. 'तें तेन व' ग. पाठः. ३. 'स्थापनं' ङ. पाठः. ४. 'त्स्य', ५. 'त्यर्थां' ग. पाठः.

देवीभावं गमिता परिवारपदं कथं भजत्येषा।
नखलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥
यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता॥
इत्यादिमालाप्रतिवस्तूपमा द्रष्टव्या। एवमन्यत्राप्यनुसर्तव्यम्।

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १६ ॥**

सम्प्रदायप्रकाशिनी

**देवीभावमिति।** देवीभावः पट्टमहिषीभावः तं गमिता परिवारपदं कथं भजति। नहि दैवताकारचिह्नितं रत्नं भूषणतया परिभोगमर्हति। अत्र माहात्म्यं साधारणो धर्मः देवीभावमिति दैवतरूपाङ्कितमिति च शब्दभेदेन स्थितः।

मालात्वेनाप्युदाहरति—**यदि दहतीति।** अत्र स्वाभाव्यं साधारणो धर्मः उपमानवाक्येषु किमद्भुतं किं ततः सदैवेति, उपमेयवाक्ये तु प्रकृतिरेवेत्युक्तः। एवं शृङ्खलापीत्याह — **एवमन्यत्रापीति** ॥ १५½ ॥

**दृष्टान्त इति।** एतेषां साधारणधर्मोपमेयोपमानानां परस्परस्य प्रतिबिम्बितत्वेन प्रतीतिः।

साहित्यचूडामणिः

(देवीति)। अत्र परिजनशब्दधारणानौचित्यं परिभोगयोग्य³ताभावश्चेत्येकमेव सामान्यं वाक्यद्वये पृथङ् निर्दिश्यते।

मालालक्षणमस्याः शिल्पं दर्शयति—**यदीति।** *नवीकारावसरे विवेचितचरमेतत्।

**एवमिति।** अन्यत्रापि मालावैचित्र्यमुन्नेयम्।

**दृष्टान्त इति।** सर्वेषामिति उपमानोपमेययोरिव सामान्यस्यापि प्रतिबिम्बनम्। यत्सूत्रं—'तस्यापि बिम्बप्रतिबिम्बतया निर्देशे दृष्टान्त'(अलङ्कारसू० २६)इति। तच्छब्देन साधर्म्यपरामर्शः।

१. 'वहत्ये' ग. पाठः. २. 'च्च' ङ. पाठः. ३. 'ग्यश्चेत्ये' घ. पाठः.

* सप्तमोल्लासे दोषप्रकरणे।

एतेषां साधारणधर्मादीनाम् । दृष्टोऽन्तः निश्चयो यत्रेति दृ-
ष्टान्तः । यथा —

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥

एष साधर्म्येण । वैधर्म्येण तु —

तवाहवे साहसकर्मवर्मणः[1]
करं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगु-
र्दधत्यवाते स्थिरतां हि पांसवः ॥ १६ ॥

---

सम्प्रदायप्रकाशिनी

लक्ष्यपदं निर्वक्ति —दृष्टोऽन्त इत्यादि ।

**त्वयि दृष्ट एवेति।** अत्र नायकयोर्हिमांशुकुमुद्वत्योश्च, मनसः कुमुदस्य च, निर्वाणस्य विकासस्य च मिथः प्रतिबिम्बनम् ॥ १६ ॥

साहित्यचूडामणिः

आदिग्रहणादुपमानोपमेययोः । **दृष्ट इत्यादिना** निरुक्तिः । निश्चय-दर्शनं प्रतिबिम्बयुक्त्या । यथाहुः —

"इष्टस्यार्थस्य विस्पष्टप्रतिबिम्बनिदर्शनम् ।
यथेवादिपदैः शून्यं बुधैर्दृष्टान्त उच्यते ॥"

इति । विस्पष्टपदादप्रस्तुतप्रशंसायाः प्रतिक्षेपः । यथेवादीत्यादिना प्रतिवस्तूप-मायाश्च । अत्र नायिकानायकयोः(रिव ?) हिमांशुकुमुद्वत्यो(रिव ?)[2]: मनःकुमुद-यो(रिव ?): निर्वाणस्यापि विकासात्मना प्रतिबिम्बनम् ।

न केवलमयमुदाहृतरूपेण साधर्म्येण यावद् वैधर्म्येणापीत्याह — **एष इति** ।

**तवेति** । 'मरुद्विलासे[3] (स ? त)रळा हि रेणवः' इति साधर्म्यम् । तद्वैलक्षण्याद्वैधर्म्योदाहरणमेतत् । एतच्च वैधर्म्यकृतं वैचित्र्यमलङ्कारान्तरेष्व-

---

१. 'घ' ख. पाठः, २. 'यो कुमुदयोरिव नि', ३. 'सेन स' घ. पाठः.

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥ १७ ॥**

प्राकरणिकाप्राकरणिकानाम् अर्थादुपमानोपमेयानां धर्मः क्रियादिरेकवारमेव यदुपादीयते तदेकस्थस्यैव समस्तवाक्यदीपनाद् दीपकम् । यथा —

सम्प्रदायप्रकाशिनी

**सकृद्वृत्तिस्त्विति** । उपमानोपमेयानां साधारणधर्मस्य क्रियालक्षणस्य सकृद्वृत्तिः क्रियादीपकं, दीपवदेकस्य नानार्थदीपनात् । क्रियासु च बह्वीषु कारकस्यैकस्य कारकदीपकम् ।

उभयं व्याख्यायोदाहरति— **प्राकरणिकाप्राकरणिकानामिति** ।

साहित्यचूडामणिः

प्यस्ति । केवलं ग्रन्थार्थगौरवभयाद् ग्रन्थकारेणोपेक्ष्यते । तत्र प्रतिवस्तूपमायां यथा —

"चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि ।
विनावन्तीर्न निपुणाः सुदृशो रतकर्मणि ॥"

इति । अप्रस्तुतप्रशंसायां यथा —

"धन्याः खलु वने वाताः कल्हारस्पर्शशीतलाः ।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥"

इति ॥ १६ ॥

दीपकमाह—**सकृद्वृत्तिरिति** । प्रकृताप्रकृतात्मनामुपमेयोपमानलक्षणानां समस्तवृत्तीनां सकृद्वृत्तिर्दीपकं, व्यस्तवृत्तित्वे तुल्ययोगिता लक्षयिष्यते ।

**क्रियादिरिति** गुणस्वीकाराय । एकवारमिति प्रतिवस्तूपमाव्यवच्छेदाय । निर्वक्ति—**एकस्थस्यैवेति** । यत् सूत्रं 'प्रस्तुतानामप्रस्तुतानां च दीपकम्' (अलङ्कारसू० २४) इति । औपम्यस्य गम्यत्व इत्यनुवर्तते ।

१. 'सु ब' ङ. पाठः. २. 'ताप्र', ३. 'तु' घ. पाठः.

किवणाण धणं णा[1]आण फणमणी केसराइ सीहाणम् ।
कुळवालिआण अ थणा के[2]त्तो घेप्पन्ति अमुआणम् ॥

कारकस्य च बह्वी[3]षु क्रियासु सकृद्वृत्तिर्दीपकम् ।

यथा—

सम्प्रदायप्रकाशिनी

**किवणाणेति ।**

**कृपणानां धनं ना[4]गानां फण[5]मणिः केसराणि सिंहानाम् ।**
**कुलपालिकानां च स्तनौ कुतः स्पृश्यन्तेऽमृतानाम् ॥**

**एतत् क्रियादीपकम् ।**

साहित्यचूडामणिः

तत्रैकक्रियामुदाहरति — **किवणेति** ।

"कृपणानां धनं नागानां फणमणिः केसराणि सिंहानाम् ।
कुलपालिकानां च स्तनौ कुतो गृह्यन्तेऽमृतानाम् ॥"

इति । अत्र कृपणधनादिषु सर्वत्र ग्रहणक्रिया दीप्यते । एतच्चादिमध्यान्त[6]क्रिया-भेदात् त्रिधेत्यालङ्कारिकाः । यदाहुः —

"आदिमध्यान्तविषयाः प्रधानेतरगामिनः ।
अन्तर्गतोपमाधर्मा यत्र तद् दीपकं विदुः ॥"

इति । तत्रान्तविषयमुदाहारि । आदिमध्यविषये बहिरूहनीये । यथा 'चरन्ति चतुरम्भोधिवेलोद्यानेष्वि'त्यादि । मध्यविषयं यथा — 'सञ्चारपूतानी'त्या[7]दि । एवमनेकेषु कारकेष्वेका क्रियोक्ता ।

अथानेकासु क्रियास्वेकं कारकं दीप्यत इति वक्तुं 'सैव क्रियास्वि'-त्यादिकारिकार्धं व्याचष्टे — **कारकस्येति** ।

१. 'भुअआ', २. 'क', ३. 'हु' क. ख. पाठः. ४. 'भुजगा' क. ग. पाठः. ५. 'णा' क. पाठः. ६. 'न्तभे' घ. पाठः. ७. 'ति ।' ग. पाठः.

स्विद्यति कूणति[1] वेल्लति
चलति निमीलति[2] विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितु-
मिच्छति नवपरिणया[3] वधूः शयने ॥ १७ ॥

**मालादीपकमाद्यं चेद्र यथोत्तरगुणावहम् ।**

पूर्वेण पूर्वेण वस्तुना उत्तरोत्तरं चेदुपक्रियते तन्माला-दीपकम् । यथा —

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
सम्प्राप्ते परिपन्थियोधनिवहे साम्मुख्यमासादितम्[4] ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं नृपते! त्वया सितयशस्तेनापि लोकत्रयम् ॥

सम्प्रदायप्रकाशिनी

**कूणतीति** । कूणनं नेत्रयोर्भागत्रयसङ्कोचः । नवपरिणीता[5] अभिनवप्रौढिः ॥ १७ ॥

**मालादीपकमिति** । यथोत्तरमित्युक्तेराद्यमाद्यमिति[6] गम्यते । व्याचष्टे — **पूर्वेण पूर्वेणेत्यादि** । एकावल्यामुत्तरोत्तरेण पूर्व-पूर्वोपकार इति विशेषः ।

**सङ्ग्राम इति** । अत्र कोदण्डादिना पूर्वपूर्वेण शरादेरुत्तरोत्तर-स्यासादेनोपकारः ।

साहित्यचूडामणिः

**स्विद्यतीति** । अत्र स्वेदाद्यनेकक्रियाकर्तृत्वेन नवोढा कानिचिन्निर्दिश्यते ॥

**मालादीपकमिति** । पूर्वपूर्वस्योत्तरोत्तरं प्रति उत्कर्षनिबन्धनत्वे माला-

१. 'ति विच', २. 'मिषति', ३. 'णीता व' ग. पाठः. ४. 'पा' ख. पाठः. ५. 'ण' ख. ग. घ. ङ. पाठः. ६. 'थेत्यु' ख. ग. पाठः. ७. 'रेत्युक्तेराद्यमि' ङ. पाठः. ८. 'क' ख. पाठः.

**नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १८ ॥**

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा ।

क्रमेणोदाहरणं —

पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः ॥

---

सम्प्रदायप्रकाशिनी

**नियतानामिति** । नियतिरेकजातीयता ।

व्याचष्टे — **नियतानां प्राकरणिकानामेवेत्यादि** ।

**पाण्डुक्षाममिति** । परक्षेत्रे चिकित्स्यः क्षेत्रियो[1] रोगः । अत्र पाण्डुत्वादिविशिष्टानां वक्त्रादीनां प्राकरणिकानामावेदनं सकृत् ।

साहित्यचूडामणिः

दीपकम् । मालात्वेन चारुत्वविशेषोन्मेषा[2]च्चिरन्तनानुसरणाच्च पृथगमुष्य लक्षणम् । गुणा[3]वहत्वमुत्कर्षहेतुः ।

**सङ्ग्रामेति** । अत्र कोदण्डादिक्रमेण शरादीनामुत्कर्षो विहितः । साम्मुख्यासा[4]दनक्रियानिबन्धनं च दीपकम् । द्वितीयपादस्य प्राक्प्रक्रियायामनौचित्यादन्यथाकारः ।

तुल्ययोगितामाह — **नियतानामिति** ।

प्रस्तुताप्रस्तुतानां समासे दीपकं व्यासे तुल्ययोगितेत्याह — **प्राकरणिकानामेवेति** । अत्र शुद्धप्राकरणिकत्वे शुद्धाप्राकरणिकत्वे वा गम्यमानमौपम्यं वैवक्षिकं न वास्तवं, तस्यैककोटिप्रभावितत्वात् । दीपके तु तद् वास्तवम्, उभयकोटिनिर्व्यूढत्वात् । सकृदिति दीपकवदेकत्र निविष्टस्यान्यत्राप्यनुषङ्गाद् उपकारकत्वात् । यत् सूत्रम् 'औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिता' (अलङ्कारसू० २३) इति ।

**पाण्ड्वति** । अत्र वदनहृदयवपूंषि प्राकरणिकानि, नायिकावयवभूतत्वात् । तेषां रोगावेदनरूपो धर्मः सकृदुपादीयते ।

---

१. 'य' क. ख. घ. ङ. पाठः. २. 'निमेषा', ३. 'णनिबन्धनमु', ४. 'पा' घ. पाठः.

कुमुदकमलनीलनीरजाली ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तदाननस्य ॥ १८ ॥

**उपमानाद् यदन्यस्य व्यतिरेकः स एव सः ।**

अन्यस्योपमेयस्य । व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी भूयो भूयोऽपि[1] वर्धते सत्यम् ।
विरम प्रसीद सुन्दरि! यौवनमनिवर्ति यातं तु ॥

सम्प्रदायप्रकाशिनी

**कुमुदेति** । अत्र कुमुदादीनामप्राकरणिकानां दृश्ये पदे प्रतिहतिः धर्मः सकृत्, तथामृतादीनामाननस्य पदे ॥ १८ ॥

**उपमानादिति** । उपमानादुपमेयस्य व्यतिरेक आधिक्यं व्यतिरेकालङ्कारः । एवकारोऽन्वर्थतामाह ।

**क्षीणः क्षीण इति** । मुहुः क्षेण्येऽपि भूयो भूयोऽपि[2] वर्धितं[3] शश्यपेक्षया यातस्य यौवनस्यानिवर्तित्वमाधिक्यम्[4] ।

अलङ्कारसर्वस्वकृता तु 'उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः'(सू० २८) इति सूत्रयतोपमेयस्य न्यूनगुणत्वं[5] इदमुदाहृतम् ।

साहित्यचूडामणिः

**कुमुदेति** । अत्र कुमुदादीनामप्राकरणिकत्वं, नायिकालोचनोपमानभूतत्वात् सर्वेषाम् । तेषां च किंवृत्तेन क्षिप्यमाणत्वं सकृदुपादीयते । कुमुदस्य लोचनोपमानत्वम् अन्यैर्दूषितमपि प्रसिद्ध्यनुरोधादुच्यते । एवममृतादीनां तन्मुखोपमानभूतानां प्रतिहतेः सकृन्निर्देशः ॥ १८ ॥

व्यतिरेकमाह — **उपमानादिति** । **स एव स** इति । व्यतिरेक इत्येव व्यवह्रियते ।

न्यूनताया अपि व्यतिरेकत्वात् तद्व्यावर्त्यमाह — **आधिक्यमिति** ।

१. 'वि' क. पाठः. २. 'भि' ख. ङ. पाठः. ३. 'तस्य श' ग. पाठः. ४. 'ति' क. पाठः. ५. 'त्वमु' क., 'त्वमिदमु' ख. ग. पाठः.

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत् केनचिदुक्तं, तदयुक्तम् । अत्र यौवनगतास्थैर्यस्याधिक्यं हि विवक्षितम् ।

**हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १९ ॥**
**शब्दार्थाभ्यामथाक्षिप्ते श्लेषे तद्वत् त्रिरष्ट तत् ।**

---

सम्प्रदायप्रकाशिनी

तदसमञ्जसमित्यभिप्रायेणाह — **इत्यादावुपमानस्येत्यादिना** । उपमानस्याधिक्यमिति रुचकेनोक्तमयुक्तं, यौवनगतस्यास्थैर्यस्याधिक्यमिति विवक्षणात् ।

एवमुपमानाधिक्ये व्यतिरेकं निराकृत्य भेदान् सङ्ख्ष्टे — **हेत्वोरुक्तावित्यादि** । उपमेयस्थमुत्कर्षस्य उपमानस्थं च निकर्षस्य कारणं व्यतिरेकस्य हेतुः । तयोरुक्तावेकः । एकतरस्य चोभयस्येत्यनुक्तीनां त्रये त्रयम् । चत्वारोऽपि साधर्म्ये शाब्दे आर्थे अर्था-

साहित्यचूडामणिः

चिरन्तनाः खलु 'भेदप्राधान्य उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' (अलङ्कारसू० २८) इति सूत्रयन्ते । आधिक्यमधिगुणत्वं यथायोगमुदाहृत्य न्यूनगुणत्वरूपं विपर्ययं 'क्षीणःक्षीण' इत्यादावुदाहर्(रं ? रन्तो) व्याचचक्षिरे — 'चन्द्रापेक्षया यौवनस्य क्षीणगुणत्वं शशिवैलक्षण्येन गतस्यापुनरागमनादि'ति । तत्र विप्रतिपद्यमान आह — **क्षीणः क्षीण** इति ।

**केनचिदिति** । गजनिमीलिकाशालिना । **तदयुक्तमिति** । वाक्यार्थस्य तावत्तात्पर्यापर्यालोचितत्वादिति भावः । अत्राप्युपमानादुपमेयस्याधिक्यं न विपर्यय इत्याह — **यौवनेति** । चन्द्रापेक्षया तारुण्यस्य गुणो यदस्थैर्यं तस्याधिक्यम्, अन्यथा वाक्यार्थशक्तिव्याक्षेपप्रसङ्गात् ।

इत्थं विप्रतिपत्तिं प्रतिक्षिप्य विभागमाह — **हेत्वोरिति** । **त्रिरष्टेति** । **चतुर्विंशतिः** ।

---

१. 'हार्षुः । व्या' ग. पाठः.

व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तम्, उपमानगतं निकर्षकारणं च । तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् । एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते । अर्थेन[1] क्रमेणोक्तौ चत्वार एव भेदाः । आक्षिप्ते चौपम्ये तावन्त एव । एवं द्वादश । एते च श्लेषेऽपि भवन्तीति चतुर्विंशतिभेदाः । क्रमेणोदाहरणम् —

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वा-

सम्प्रदायप्रकाशिनी

क्षिप्ते द्वादश । ते च श्लेषाश्लेषनिबन्धनत्वे त्रिरष्ट चतुर्विंशतिभेदाः ।

व्याचष्टे — व्यतिरेकस्य हेतुरित्यादिना ।

**असिमात्रेति** । अत्र तुच्छत्वमुपमाननिकर्षस्य कारणं महाधृतित्वमुपमेयोत्कर्षस्य[2] ।

एतदेव लाघवार्थमनुक्तित्रयेऽप्युदाहरणं[3] चिकीर्षुराह— **अत्रैव तुच्छेत्यादि** । 'अभूदन्यजनस्येवे'[4]ति निकर्षस्य, 'न[5] स्मयोऽस्य महीपतेरि'ति प्रकर्षस्य च पर्यायेणानुक्तौ[6] द्वौ । युगपदनुक्तौ त्रयः । एतदनु-

साहित्यचूडामणिः

उपमेयविषयम् उत्कर्षनिमित्तं न विपर्ययः । उपमानविषयं च निकर्षकारणं न विपर्ययः । **एकतरस्येति** । एकैकस्य हेतोरनुक्ती द्वे, हेतुद्वयस्यानुक्तिरेकेत्यनुक्तित्रयम् । साम्यप्रतीतिस्त्रिधा शब्देनार्थेनाक्षेपेण चेति ।

**असिमात्रेति** । अत्रोपमाने तुच्छत्वमपकर्षनिमित्तम्, उपमेये महाधृतित्वमुत्कर्षहेतुः, अतो हेत्वोरुक्तिः ।

अन्यत्रोन्नेतुं शक्यमित्याह — **अत्रैवेति** । **पर्यायेणेति** ।

---

१. 'आ' ख. पाठः. २. 'स्य त' क. घ. पाठः. ३. 'णं' ग. पाठः. ४. 'स्येति', ५. 'वि' ङ. पाठः. ६. 'क्तौ यु' क. पाठः.

नुपादाने अन्यद् भेदत्रयम् । एवमन्येष्वपि द्रष्टव्यम् । अत्रेवशब्द[1]स्य सद्भावाच्छाब्दमौपम्यम् ।

असिमात्रसहायोऽयं प्रभूतारिपराभवे[2] ।
नैवान्यतुच्छजनवत् सगर्वोऽयं धृतेर्निधिः[3] ॥
तुल्यार्थेऽत्र वतिरित्यार्थमौपम्यम् ।
इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्कितम् ॥

---

सम्प्रदायप्रकाशिनी

क्तित्रयमौपम्यस्यार्थत्वे अर्थादाक्षेपे (च) विज्ञेयमित्याह — **एवमन्येष्वपीति**। उक्तचतुष्के औपम्यं शाब्दमित्याह— **अत्रेवशब्दस्येति**।

आर्थत्वे उदाहरति—**असिमात्रेति**। प्रथमान्तत्वात् पुनर्लेखः।

आर्थत्वं दर्शयति— **तुल्यार्थ इति** । 'तेन तुल्यं —' (५-१-११५) इति वतावौपम्यमार्थमिति उपमालङ्कारे निरूपितं यतः । एवमनुक्तित्रयेण सह तेऽपि चत्वारः ।

अर्थादाक्षेप उदाहरति — **इयं सुनयनेति** ।

साहित्यचूडामणिः

"नूनमन्यजनस्येव न स्मयोऽस्य महाधृतेः[4] ।"
"अन्यतुच्छजनस्येव न स्मयोऽस्य महीपतेः ।"
"नूनमन्यजनस्येव न स्मयोऽस्य महीपतेः ।"

इति पाठे । औपम्यमाह — **इवशब्दस्येति** । उपमावदिति भावः ।

एतदार्थत्वौचित्यापेक्षयान्यथा पठति — **असिमात्रेति** ।

साम्यस्याक्षेप उदाहरति — **इयमिति** ।

"आननेन मनोज्ञेन जयतीन्दुं कलङ्कितम् ।"
"आननेनाकलङ्केन जयत्यमृतदीधितिम् ।"

---

१. 'ब्दस', २. 'वः' ग. पाठः. ३. 'धिः ॥ अत्र तुल्यार्थे व' क. ख. पाठः. ४. 'तेः । इति' घ. पाठः.

अत्रेवादितुल्यादिपदविरहे आक्षिप्तैवोपमा ।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद् भङ्गुरा गुणाः ॥

अत्रेवार्थे वतिः । गुणशब्दः श्लिष्टः ।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥

---

सम्प्रदायप्रकाशिनी

दासीकारेणौपम्यमाक्षिप्यत इत्याह—**अत्रेवादीत्यादि** । अकलङ्ककलङ्केति प्रकर्षनिकर्षोक्तिः । एतेऽप्यनुक्तित्रयेण सह चत्वारः ।

श्लेषहेतुतयोदाहरति—**जितेन्द्रियेति**[3] ।

औपम्यस्य शाब्दतां दर्शयति—**अत्रेवार्थ इति** । श्लेषहेतुतामाह—**गुणशब्द इति** । अतिगाढेति भङ्गुरेति च प्रकर्षनिकर्षोक्तिः । एतेऽपि पूर्ववच्चत्वारः ।

**अखण्डेति** । मण्डलं कटकं बिम्बं च । कलाः शकलानि शिल्पानि च ।

साहित्यचूडामणिः

"आननेन मनोज्ञेन जयत्यमृतदीधितिम् ।"

इत्युन्नयनप्रकाराः ।

श्लेष उदाहरति—**जितेति** ।

**इवार्थे वतिः गुणशब्दः श्लिष्ट इति** । गुणा हि सौजन्यादयो मृणालसूत्राणि च ।

---

१. 'ष्टः ।

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र तृष्णां जहार मधु नाननमङ्गनानाम् ॥

अत्रेवादेस्तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते । नित्यो' ग. पाठः. २. 'करणेनौप' ख. पाठः. ३. 'न्द्रियतये' ङ. पाठः.

अत्र तुल्यार्थे वतिः । कलाशब्दः श्लिष्टः* ।

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वतानेन भूपेन भास्वानेष विनिर्जितः ॥

अत्राक्षिप्यैवो†पमा । भास्वतेति श्लिष्टः । [1]एवञ्जातीयकाः श्लिष्टोक्तियोग्य[2]स्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः सम्भवन्ति । ते अनयैव दिशा द्रष्टव्याः ॥ १९½ ॥

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥ २० ॥**
**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।**

सम्प्रदायप्रकाशिनी

आर्थतां श्लेषहेतुतां चाह— **अत्र तुल्यार्थ** इत्यादि । एतेऽपि चत्वारः ।

**नित्योदितेति** । निर्जयेनौपम्याक्षेप इत्याह— **अत्राक्षिप्यैवेति** । नित्योदितेन त्रियामामीलनेन च प्रकर्षनिकर्षोक्तिः । एतेऽपि चत्वार इति चतुर्विंशतिः ॥ १९½ ॥

**निषेधो वक्तु**[3]**मिति** । वक्तुमिष्टस्य प्रकृतत्वात् साक्षान्निषेधेना-

साहित्यचूडामणिः

**कलाशब्दः श्लिष्ट** इति । कला विद्या भागश्चेति श्लेषः । तुल्यार्थे वतिः, 'तेन तुल्यं—' (५-१-११५) इत्यादिना ।

**भास्वतेति** । वर्णनीये भास्वत्त्वं पर(म्प ? प)रीभावासहत्वम् । अन्यत्र सूर्यत्वम् ॥ १९½ ॥

आक्षेपमाह— **निषेध** इति । निषेधाभासः यथा व्याख्यास्यते ।

अनुपसर्जनीकार्यस्य प्राकरणिकतया विधानार्हस्य । अशक्यवक्तव्यत्वं

१. 'इत्येव' ग. पाठः. २. 'ग्यप', ३. 'मित्यादि । व' ख. पाठः.

* ३२१. पृष्ठे 'ष्टः । स्वच्छात्मे'त्यारभ्य 'नित्यो' इत्यन्तो यो' ग. पाठः प्रदर्शितः, स इह क. ख. पाठयोर्दृश्यते । † 'प्तै' इति मूलकोशपाठः.

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य अश-क्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो[1] निषेध इव यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विविध आ-क्षेपः[2] । क्रमेणोदादाहरणम् —

ए[3] एहि किं वि कीअ वि कएण णिक्किव[4]! भणामि अळमहवा।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥

सम्प्रदायप्रकाशिनी

नुपसर्जनीकार्यस्याशक्यवचनतां सुप्रसिद्धतां वा विशेषमभिव्यङ्क्तुं निषेध इव यः स उक्तवक्ष्यमाणविषयतया द्विधाक्षेपः ।

(ए) एहीति ।

अयि एहि किमपि कस्या अपि कृतेन निष्कृप! भणाम्यलमथवा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥

अत्र वक्ष्यमाणस्य मुमूर्षोपगमस्याशक्यवचनतां व्यङ्क्तुं किमपि कस्या अपीति ताटस्थ्येनाह्रित्रिताया भणितेर्निषेधः । अतो निष्कृपेत्याम-न्त्रणम् ।

साहित्यचूडामणिः

वक्ष्यमाणे विषये । अतिप्रसिद्धत्वमुक्ते । निषेध इवेति । प्राकरणिकस्य विधा-नार्हतया निषेधः कर्तुं न युज्यते । स क्रियमाणो बाधितस्वरूपत्वान्निषेधायत इति निषेधाभा(वः? सः) संपद्यते । स च प्राकरणिके विशेषप्र(त्य? ति)पत्त्यर्थः, अन्यथा गजस्नानतुल्यत्वात् तस्येत्याह — विशेषाभिधित्सयेति । यत् सूत्रम् 'उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः' (अलङ्कारसू० ३८) इति ।

एसेति ।

एषा खलु किमपि कस्या अपि कृतेन निष्कृप! भणाम्यलमथवा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥

इति । अत्र भणामीति प्रतिज्ञातस्य न भणिष्यामीति निषेधाद् वक्ष्यमाणवि-षयोऽयमाक्षेपः ।

---

१. 'ध इव निषेधो यः' ग. पाठः. २. 'पः । उदा' क. ख. पाठः. ३. 'ए' ख. ग. पाठः. ४. 'क्खि' क. ग. पाठः. ५. 'यत्वाद् द्वि' ख. पाठः.

**ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः**
**कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।**
**अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-**
**व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥**

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥ २१ ॥**

**हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना ।**

सम्प्रदायप्रकाशिनी

**ज्योत्स्नेति ।** अन्तर्मानसं प्रभवता त्वया हेतुना दाहाय भवन्ति । सुविदितत्वात् किमनेनोक्तेनेति उक्तविषयः ॥ २०½ ॥

**क्रियाया इति ।** क्रियैव फलहेतुरिति वैयाकरणदृशोक्तिरियम् । 'अनासवाख्यं करणं मदस्य' इत्यादावपि पानादिद्वारेणैवासवादेर्मद-हेतुत्वमिति क्रियाप्रतिषेधेऽपि फलप्रकाशनं विभावना । कार्यकारण-विच्छित्तिविशेषान्न विरोधमात्रम् ।

साहित्यचूडामणिः

ज्योत्स्नेति । अत्र ज्योत्स्नादीनि तस्यास्तापाय भवन्तीति सामान्येनोक्तस्य क्वचिदंशे निषेध इत्युक्तविषयोऽयम् । नहि प्राकरणिकबललब्धस्थेमानमर्थ-मंशव्यतिरेकेण निषेधो व्याकुलयितुमर्हति । उक्तं च —

"प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
आक्षेप इति तं सन्तः शंसन्ति कवयः सदा ॥"

इति । अथ 'किमनेनोक्तेन न ब्रूमह' इति वाक्यद्वये पौनरुक्त्यमपरिहार्यम्, एकत एवाक्षेपसिद्धेः । एवं पूर्वत्रापि अलमथवा न भणिष्यामीत्यत्रानुसन्धेयम् ॥

विभावनामाह — क्रियाया इति ।

क्रियाग्रहणेऽपि हेतुपदेन व्याख्यौचित्यमित्याह — हेतुरूपेति । नहि सर्वैः क्रियाफलमेव कार्यमभ्युपगम्यते, वैयाकरणानामेव तथाङ्गीकारात् । यत् सूत्रं 'कारणाभावे कार्योपपत्तिर्विभावना' (अलङ्कारसू० ४१) इति । निर्वक्ति — तत्फ(लं वे[1] ले)ति । फलं विशेषेण भावयतीति कृत्वा । कारणान्तरं यत्र

1. 'तात्पर्यहे' ख. ग. पाठः.

यथा—

कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि ।
परिवर्तते स्म नलिनीलहरीभिरलोलिताप्यघूर्णत सा ॥

सम्प्रदायप्रकाशिनी

कुसुमितेति । लताहतिं विनापि रुजमधत्त । अलिभिरदष्टापि परिवर्तते स्म । दीर्घिकालहरीभिरलोलितापि अघूर्णत । विरहलक्षणस्तु सूक्ष्मो हेतुरस्तीति न तत्त्वतो विरोधः ॥ २१ ॥

साहित्यचूडामणिः

स्वाभाविक(त्वाद्वा ? त्वं वा) विभाव्यं सा विभावनेति । कारणान्वयव्यतिरेकानुविधानात् कार्यस्य कारणमन्तरेण न संभवः स्यात् । यदि कदाचित् कयाचिद्वा युक्त्या तत्संभव उपनिबध्यते, तदा विभावनावैशिष्ट्येन कार्यस्यो(त्था)नाद् अप्रसिद्धं कारणं वस्तुतोऽस्तीति कारणाभावे कार्योत्पत्तिरूपविरोधपरिहारः । यथोक्तं—

"क्रियायाः प्रतिषेधे या तत्फलस्य विभावना ।
ज्ञेया विभावनैवासौ समाधौ सुलभे सति ॥"

इति । समाधिर्विरोधस्य परिहारः । कारणाभावेन बलवता कार्यमेव बाध्यते, नतु तेन कार(णं ? ण)भावोऽपीति मिथो बाध्यबाधकभावानुप्राणिताद् विरोधाद् विशेषः । एवं विशेषोक्तावप्यूह्यम् ।

कुसुमितेति । अत्राहतापीति लताघातादिरूपायाः क्रियायाः प्रतिषेधेऽपि रुग्धारणादिलक्षणं फलं प्रकाश्यते । अरतिरूपस्य कारणस्य सद्भावात् परिहारः । इयं च वक्ष्यमाणविशेषोक्तिवदुक्तानुक्तनिमित्तभेदाद् द्विधा । तत्रानुक्तनिमित्तोदाहृता । उक्तनिमित्ता यथा—

"अनासवाख्यं करणं मदस्य बाल्यात् परं साथ वयः प्रपेदे ।"

१. 'रनालो' ङ. पाठः. २. 'डि' ख. ग. पाठः.

**विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।**

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च । क्रमेणोदाहरणं —

---

सम्प्रदायप्रकाशिनी

**विशेषोक्तिरिति । समग्रेषु कारणेषु कार्याकथनं व्यङ्ग्यविशेषार्थत्वाद् विशेषोक्तिः उक्तानुक्ताचिन्त्यनिमित्ततया त्रिधा ।**

साहित्यचूडामणिः

इति । अत्र मदस्य प्रसिद्धं यदासवाख्यं करणं तदभावेऽपि यौवनं हेतुत्वेनोपनिबद्धम् । मदस्य द्वैविध्येऽप्यभेदाध्यवसायादेकत्वम् । यथा वा ममैव —

"(सु ? अ)कुङ्कुमालेपमकामनिद्रमनासवास्वादमरोषलीलम् ।
सन्ध्यामयूखैः क्षणमङ्गनानां रागोऽयमारोहति गण्डरेखाम् ॥"

इति । तत्र गण्डरेखायां रागाधिरोहे कुङ्कुमालेपादि कारणं नि(र्वे ? व)र्त्यते, उच्यते च सन्ध्यामयूखलक्षणम् ॥ २१ ॥

अथ विभावनावैपरीत्येन विशेषोक्तिमाह— **विशेषोक्तिरिति** । फलावचः कार्यस्यावचनम् ।

कारणसमवायेऽपि कार्यस्याप्रकाशनं विशेषोक्तिरित्याह— **मिलितेष्वपीति** । यत् सूत्रं 'कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः' (अलङ्कारसू० ४२) इति । समग्राणि कारणानि कार्यमुत्पादयन्तीति प्रसिद्धिः । यदि च का(र्येणो ? र्यं नो)त्पद्यते तत् क(श्चि ? श्चि)द् विशेषमभिव्यङ्क्तुं, विशेषश्च विस्मयावहत्वादिः । तथोक्तं —

"सामस्त्येऽपि (च) शक्तीनां फलानुत्पत्तिबन्धनम् ।
विशेषस्याभिधित्सातः सा विशेषोक्तिरिष्यते ॥"

इति । तामेनां

"दर्शितेन निमित्तेन निमित्तादर्शनेन च ।
तस्या बन्धो द्विधा लक्ष्ये दृश्यते ललितात्मकः ॥"

इति नीत्या विभजते — **अनुक्तेति** । यद्यप्यचिन्त्यनिमित्तानुक्तनिमित्तैव, अनु-

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥

---

सम्प्रदायप्रकाशिनी

**निद्रेति** । निद्रानिवृत्तिसूर्योदयसखीद्वारावाप्तिभुजङ्गाश्लेषश्लथीकारेषु समग्रेष्वपि कारणेष्वालिङ्गनादचलनं प्रेमविशेषव्यञ्जनादनुक्तनिमित्ता विशेषोक्तिः ।

**कर्पूर इवेति** । निर्लेशं दग्धोऽपि शक्तिमानित्यवार्यवीर्यत्वादुक्तनिमित्ता ।

साहित्यचूडामणिः

क्तस्य चिन्त्याचिन्त्यत्वेन द्वैविध्यात् । तथापि तद्वैचित्र्यप्रकाशना(य) पृथगुद्देशोदाहरणे ।

**निद्रेति** । द्युरत्ने सूर्ये । अत्र निद्राहान्यादिकारणसामग्र्यामपि चलनलक्षणं कार्यं न लक्ष्यते । सम्भोगौत्सुक्यलक्षणो हेतुरनुक्तश्चिन्त्यः ।

उक्तनिमित्तामाह—**कर्पूर इवेति** । अत्र सत्यपि दाहलक्षणहेताव(नु ? श)क्तत्वलक्षणस्य कार्यस्यानुत्पत्तिः शक्तिमत्त्वरूपेण विरुद्धेन धर्मेणोपनिबद्धा । अवार्यवीर्यत्वं च निमित्तमुक्तम् । नन्वेवं विरुद्धधर्ममुखेनापि कार्यानुदयोक्त्या विशेषोक्तिपरिकल्पने 'यः कौमारहर' इत्यादावपि विशेषोक्तेरनिषेध्यतया निरलङ्कारतापक्षनिर्वाहो न सङ्घटत इति चेत् । सत्यम् । सर्वं काव्यं सालङ्कारमिति चिरन्तनोद्भटाद्यालङ्कारिकपक्षकटाक्षेण ग्रन्थकार एवमुभयमुदाजहारेति न सर्वथा पौर्वापर्यपर्यालोचनायामौचित्याभाव इत्यलं व्याख्येयग्रन्थस्खलनोल्लेखनेन ।

---

१. 'ष्विद्द का' ङ. पाठः.

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥

**यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ २२ ॥**

यथा —

एकस्त्रिधा वसिसि चेतसि चित्रमत्र
देव! द्विषां च विदुषां च मृगीदृशां च ।

---

सम्प्रदायप्रकाशिनी

**स एक** इति । तनुहरणेऽपि बलाहरणोक्तिरचिन्त्यनिमित्ता । उक्तप्राप्ते(?)रनुक्तनिमित्तातोऽन्या । 'भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः' इत्यादिर्वामनादीनाम् एकगुणहानिकल्पनायां साम्यदार्ढ्यलक्षणा विशेषोक्तिः । ग्रन्थकृतस्तु मते रूपकभेद एव ।

**यथासङ्ख्यमिति** । क्रमिकाणां क्रमेणान्वयो यथासङ्ख्यम् । क्रम इत्यन्ये ।

**एकस्त्रिधेति** । शौर्यविनयलीलाभिस्तापसम्मदरतिपोषाद् वैरि-

साहित्यचूडामणिः

अचिन्त्यनिमित्तामाह — **स एक** इति । अत्र तनुहरणे कारणे सत्यपि बलहरणस्य कार्यस्यानुक्तिः । तत्र च निमित्तमनुक्तमचिन्त्यं च । परमेश्वरप्रभावस्य पर्यनुयोगानर्हत्वात् ।

**यथासङ्ख्यमिति** । क्रमिकाणां क्रमवताम् । ते चोर्ध्वनिर्दिष्टाः पश्चान्निर्दिष्टाश्चेति द्विधा । क्रमादाद्यैरन्येषां क्रमेणान्वयो यथासङ्ख्यम् । यत्सूत्रम् 'उद्दिष्टानामर्थानां क्रमेणानुदेशो यथासङ्ख्यम्' (अलङ्कारसू० ५९) इति । अन्ये त्वेनं क्रम इत्याहुः ।

**एक** इति । अवैषम्यप्रतिपादनाय सर्वत्र चकारः । अस्य च द्वैविध्यमस्ति शाब्दत्वार्थत्वभेदात् । शाब्दं यस्मिन्नसमस्तानां पदार्थानामसमस्तैः पदार्थै-

---

१. 'चरसि' ख. पाठः. २. 'क्त' क. घ. पाठः. ३. 'तान्या' ख. पाठः.

तापं च सम्मदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥ २२ ॥

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**
**यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ २३ ॥**

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते, विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः। क्रमेणोदाहरणं —

---

सम्प्रदायप्रकाशिनी

विद्वन्मृगीदृशां हृदि त्रिधा वससीति क्रमिकोऽन्वयः। एवं समासेऽपि विज्ञेयम् ॥ २२ ॥

सामान्यं वेति। साधर्म्यवैधर्म्याभ्यां सामान्यविशेषयोर्मिथः समर्थकत्वे चतुर्धार्थान्तरन्यासः। समर्थना दृष्टान्ततो भेदः।

साहित्यचूडामणिः

रर्थद्वारकः सम्बन्धः, अतिरोहितस्य क्रमसम्बन्धस्य प्रतीयमानत्वात्। आर्थं तु यत्र समासः प्रक्रियते तत्र समुदायस्य समुदायेन क्रमसम्बन्धमात्रं शाब्दमन्यदार्थम् अर्थानुगमपर्यालोचनेन पश्चादवयवविषयस्य क्रमसम्बन्धस्य प्रतीयमानत्वात्। समुदायनिष्ठस्य श्रुत्या प्रतीतिः, अवयववर्तिनः पुनरर्थानुसारादिति तात्पर्यात्। तच्च बहिरूहनीयम्। यथा —

"कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः।
जलनिधिगिरिकमलस्था हरिहरकमलासना ददतु ॥"

इति ॥ २२ ॥

अर्थान्तरन्यासमाह — सामान्यमिति। तदन्येन विशेषेण सामान्येन वा। इतरेण वैधर्म्येण। यत् सूत्रं 'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' (अलङ्कारसू० २५) इति। कार्यकारणसम्बन्धनिबन्धनत्वमस्य पाक्षिकमित्युपेक्षितं ग्रन्थकारेण।

तत्र च सामान्यं विशेषेण विशेषो वा सामान्येन समर्थ्यत इति द्वौ भेदौ, प्रत्येकं साधर्म्यवैधर्म्याभ्यां चत्वार इत्याह — साधर्म्येणेति।

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद् विधुः ।
तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क नासि शुभप्रदः ॥

गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं *जीवति गौर्गडी[1] ॥

सम्प्रदायप्रकाशिनी

निजदोषेति । दुष्टमनसां सुन्दरमसुन्दरं भातीति पित्तोपहतः शङ्खं पीतं पश्यतीति सामान्यं विशेषेण साधर्म्यात् समर्थ्यते ।

सुसितेति । अत्र तु विधावस्तमितेऽपि कीर्त्तौ गीतायां[2] तज्ज्योत्स्नाभिसारिका निश्शङ्कं प्रियगृहमगादिति विशेषः क नासि शुभप्रद इति सामान्येन । क्वेति काक्का नञो निषेधात् साधर्म्यम् ।

गुणानामेवेति । गुणै[3]दौरात्म्याद् धुरि धुर्यो नियुज्यत इति

साहित्यचूडामणिः

निजेति । अत्र दुष्टचित्तत्वलक्षणं सामान्यं पित्तोपहतेन विशेषेण साधर्म्यद्वारा समर्थ्यते ।

सुसितेति । अत्र वर्णनीयस्य भद्रप्रदायितायामभिसारिकाकारो विशेषः केति सर्वाक्षेपिणा सामान्येन समर्थ्यते ।

वैधर्म्येणाह — गुणानामिति । गळी वहनासमर्थः, भूमार्थ इनिः,

१. ‘ळी’ ग. पाठः. २ ‘यां ज्योत्स्ना’ ग., ‘यां सज्ज्योत्स्ना’ ङ. पाठः. ३. ‘णै न दौ’ ख. ग. पाठः·

* ‘स्वपिति गौ’ इति मूलकोशपाठः.

अहो हि मे बह्वपराद्धमायुषा
यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदां पराभवं
जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥ २३ ॥

---

सम्प्रदायप्रकाशिनी

सामान्यं विवक्षितम् । अकिणस्कन्धो गडी[1] अकर्मण्योऽनड्वान् सुखं जीवतीति विशेषेण वैधर्म्येण ।

अहो हीति । अत्राप्रि[2]यस्य वाच्यत्वादायुषापराद्धमिति विशेषः सुहृत्पराभवमदृ[3]ष्ट्वैव क्षयं गता धन्या इति सामान्येन वैधर्म्येण ॥२३॥

साहित्यचूडामणिः

दिन उत्सृष्टतया प्रलम्बकण्ठसास्नादिकः । अत्र गुणव(दध्व ? द्धु)र्यजननियोगस्वभावं सामान्यं गोवृषेण विशेषेण समर्थ्यते । तत्र धुर्यत्वस्य वैधर्म्यमसंजातकिणस्कन्धत्वं धूर्नियोगस्य च सुखस्वापः ।

अहो इति । कश्चिदप्रियं दैवोपनतं विवक्षन् विशेषरूप(ए ? मे)व धन्या इति सामान्येन वैधर्म्यात् सम(र्थ्य ? र्थय)ते । अहमधन्य इति वैधर्म्यं, यस्मादायुःकर्तृकापराधाक्षिप्तस्य धन्यत्वाभावस्यायुर्विरुद्धक्षयगमनप्रयुक्तं धन्यत्वं विरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तम् । समर्थनार्हस्य प्रकृतस्य समर्थनमात्रोपक्षीणत्वाद् नायमनुमानं, प्रत्याय्यप्रत्यायकभावव्यतिरिक्तः समर्थ्यसमर्थकभाव इति समर्थयिष्यते ।

"++समर्थयत् पूर्वं वचोऽन्यस्य तु पृष्ठतः ।
विपर्ययेण वा यत् स्याद्धिशब्दोक्त्यान्यथापिवा ।
ज्ञेयः सोऽर्थान्तरन्यासः प्रकृतार्थसमर्थकः ॥"

समर्थकपूर्वोत्तरोपन्यासाभ्यां हिशब्दोक्त्यनुक्तिभ्यां च भेदान्तरसद्भावेऽपि तद्गु(णा ? णना) वैचित्र्यविशेषाभावात् ॥ २३ ॥

---

१. 'डिः' क. ख. ग. पाठः. २. 'पि' ख. ग. पाठः. ३. 'ष्ट्वा क्ष' ख. ङ. पाठः.

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद् वचः ।**

वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ॥ २३½ ॥

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणास्त्रिभिः ॥२४॥**
**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।**

क्रमेणोदाहरणम् —

अभिनवनलिनीकिसलयमृणालवलयानि दवदहनराशिः ।
सुभग ! कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥

---

सम्प्रदायप्रकाशिनी

**विरोधः स** इति । अविरुद्धयोर्विरुद्धवदुक्तिर्विरोधः ॥ २३½ ॥

**अत्र** जातेर्जातिगुणक्रियाद्रव्यैर्विरोधे चत्वारः, गुणस्य गुणादिभिस्त्रयः, क्रियायाः क्रियादिभ्यां द्वौ, द्रव्यस्य द्रव्येणैक इति दश ।

**अभिनवेति** । पविर्वज्रम् । अत्र किसलयादिजातेर्दहनजात्या विरोधः ।

साहित्यचूडामणिः

**विरोध** इति । जात्यादीनां चतुर्णां तन्मध्य एव प्रत्येकं सजातीयविजातीयाभ्यां सम्बन्धे विरोधः । स च समाधानं विना दोषः । सति तु तस्मिन् प्रमुख एव भासमानत्वाद् विरोधाभासः । यत् सूत्रं 'विरुद्धाभासत्वं विरोधः' (अलङ्कारसू० ४०) इति ॥ २३½ ॥

जातेर्जात्यादिभिः सह चत्वारो विरोधाः, गुणस्य गुणादिभिः सह त्रयः, क्रियायाः क्रियाद्रव्याभ्यां सह द्वौ, द्रव्यस्य द्रव्येण सहैक इत्येतदाह — **जातिरिति** ।

**अभिनवेति** । नलिनीकिसलयादिजात्या दवदहनजातिर्विरुद्धा विरुद्धगुणकत्वादिति भावः । सा च विरहवेदनया परिह्रियते ।

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः।
विश्वम्भराप्यतिलघुर्नरनाथ! तवान्तिके नियतम् ॥
येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च।
तेषां सङ्गररङ्गरक्तमनसां राज्ञां त्वया भूपते!
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥
सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम्।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥
सन्ततमुसलासङ्गाद् बहुतरगृहकर्मघटनया नृपते!।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः॥

---

सम्प्रदायप्रकाशिनी

**गिरयोऽपीति** । अत्र गिर्यादिजातीनामनुन्नत्यादिभिर्गुणैः।

**येषामिति**। धाराधरः खड्गः। तैक्ष्ण्यं निशितत्वमुग्रशीलता च। रागो रुधिरारुणिमा प्रीतिश्च। स्नेहो मासृण्यं प्रीत्यतिशयश्च। तैक्ष्ण्यस्यानुरागादिना विरोधो गुणविषयत्वान्नेहोदाहरणम्[1]। किन्तु राजजातेः पांसुप्रसाधनक्रिययैव।

**सृजति चेति**। अत्र शफरजातेर्जनार्दनेन[2] द्रव्येण। एते जातेः।

**सन्ततेति**। अत्र काठिन्यस्य सौकुमार्येण।

साहित्यचूडामणिः

**गिरय इति**। अत्रानौन्नत्यादिगुणो गिर्यादिजात्या विरुद्धः।

**येषामिति**। अत्र राजजातेः पांसुप्रसाधनक्रियया विरोधः।

**सृजति चेति**। अत्र द्रव्यभूतस्य भगवतः शफरजातेश्च मिथो विरोधः तस्य जगद्रक्षादीक्षितत्वेन परिहारः। एवं जातिश्चतुर्भिरित्युदाहारि।

अथ गुणस्त्रिभिरित्युदाहरति — **सन्ततेति**। अत्र काठिन्यस्य च सौकुमार्यस्य च गुणयोः साक्षाद् विरोधः। राजौदार्यात् समाधिः।

---

१. 'न्नोदा' ग. पाठः. २. 'र्दन' ख. पाठः.

पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयते ॥

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽयं[1] यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥

सम्प्रदायप्रकाशिनी

पेशलमपीति । अत्र पेशलत्वस्य दाहक्रियया । तथा पारुष्यस्य प्रमोदनक्रियया ।

क्रौञ्चाद्रिरिति । शातं वृन्दम् । अपूर्वसर्गः अनीदृशान्यजन्मा । अत्र दलाभिजात्यस्य क्रौञ्चाद्रिणा द्रव्येण । एते गुणस्य ।

परिच्छेदातीत इति । मकरन्दाय विनिवेदितमालतीसन्द[2]-र्शनवृत्तान्तः पूर्वानुरागविप्रलम्भविसंस्थुलान्तरात्मा[3] माधवः स्वचेतो विक्रियामाविष्कर्तुकामो वक्ति[4] । अन्तर्विकारः कोऽपि तदाप्रभृति दुर्निरूपः अन्तरात्मन्येवान्यैर्दुरुन्नेयो विक्रियाविशेषः कश्चिज्जडयति च तापं च कुरुते अप्रतिपत्त्या स्थगयति विदाहमुद्वेलयति च । कुतः । उपचितमहामोहगहनः, अतिमात्रप्ररूढेनापरिच्छेद्येन वैचित्त्येन दूरदुरु-

साहित्यचूडामणिः

पेशलमिति । अत्र पेशलत्वस्य दाहलक्षणया क्रियया, पारुष्यस्य प्रमोद-रूपया च विरोधः । खलवचनस्य दुस्सहत्वात्, सुजनवाक्यस्य हृद्यत्वाच्च परिहारः ।

(क्रौञ्चेति ।) अत्राप्य(ति ? द्रि)विशेषस्य द्रव्यस्य कमलदलवत् सौकु-मार्यगुणस्य च विरोधः । रैणुकेयस्य गाढप्रहारितया परिहारः ।

अथ क्रिया द्वाभ्यामित्युदाहरति— परिच्छेदेति । जडीकरणतापकर-णयोः क्रिययोर्विरोधः । औत्सुक्योत्कर्षात् परिहारः ।

१. 'सौ' ग. पाठः. २. 'तीव्रं', ३. 'लात्मा' क. घ. ङ. पाठः. ४. 'क्ता' ख. पाठः.

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिनिकरमापास्यति मुनिः ॥

सम्प्रदायप्रकाशिनी

त्तरः । कुतश्चेत्थं गहनः । विवेकप्रध्वंसात्, सारासारविभजनशक्तेर्निरवशेषविलयात् । अतोऽयं विकारः प्रमाणप्रवृत्तिकलाया अपि नावकाशं ददाति । तथाहि—परिच्छेदातीतः य ईदृगिति निर्धारणपथमतिक्रान्तः । अतः प्रत्यक्षातिलङ्घी । तथा सकलवचनानामविषयः जात्यादिप्रवृत्तिनिमित्तवतां सर्वेषामेव वचनानामगोचरः । अतः शब्दप्रमाणातिपाती । अस्मिन् जन्मनि पुनरनुभवपथं न गतवान् । प्रागप्यपेक्षमिह पुनस्त्वम् । देहोदयादारभ्यैतावन्तं कालं नैवमनुभूतपूर्वः । अतो व्याप्तिग्रहासम्भवादनास्पदमनुमानस्यापि । य(त) इत्थं प्रत्यक्षशब्दानुमानप्रमाणैर्न निर्धार्यते, अतो विवेकप्रध्वंसः । विवेकप्रध्वंसान्महामोहोपचयः । अतो गहनः सन् विकारो जडयति च तापं च कुरुते । जडयति चेति चकारो जाड्यदशां तापसंभेदनिरन्तरामभिव्यनक्ति, तथा तापं च कुरुत इति चकारस्तापदशां जाड्यसम्भेदनिरन्तरामिति जडीभावतापातिरेकमन्तरेण नान्यत् किञ्चिदध्यवस्यामीति पूर्वानुरागविप्रलम्भवेदनाविकारस्य परां कोटिमधिरूढोऽस्मीत्यवगमयति । अत्र जडीकरणेन तापकरणस्य ।

अयं वारामेक इति । तृष्णा लिप्सा पिपासा च । अत्र जलनिधिः पीत इति क्रिया(या) द्रव्येण । एतौ क्रियायाः ।

साहित्यचूडामणिः

अयमिति । कुम्भोद्भवस्य द्रव्यस्य जलनिधिपानक्रियया च विरोधः तस्य महाप्रभावतया परिह्रियते ।

१. 'तोऽयम् ई' क. घ. पाठः. २. 'न्तः' ग. पाठः. ३. 'तिपाती ।' ङ. पाठः. ४. 'थाहि स', ५. 'चसाम' ग. पाठः. ६. 'क्षागमानु' ङ. पाठः. ७. 'नैः प्र', ८. 'तावत् समभेदां नि' क. घ. पाठः. ९. 'अथ ता' ङ. पाठः. १०. 'म्भे' क. पाठः. ११. 'धिः क्रि' क. घ. पाठः.

समदमतङ्गजमदजलनिष्यन्दतरङ्गिणीपरिष्वङ्गात्[1] ।
क्षितितिलक! त्वयि तटजुषि शङ्करचूडापगापि कालिन्दी ॥

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥२५॥**

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च । उदाहरणं —

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं[2] द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा[3] विधूय ।

सम्प्रदायप्रकाशिनी

सम्मदेति । अत्र गङ्गा कालिन्दी जातेति द्रव्यस्य द्रव्येण । अयं द्रव्यस्य ॥ २४½ ॥

स्वभावोक्तिस्त्विति । डिम्भग्रहणं स्वाभाविकक्रियारूपप्राचुर्यात् । आदिशब्दात् सदृशवस्त्वन्तरपरिग्रहः । स्वशब्दात् क्रियारूपयोरनारोपितत्वम् । अतः स्वभावोक्तिरित्यन्वर्थता ।

तदेतद्व्याचष्टे— स्वयोस्तदेकाश्रययोरिति । रूपं द्विविधमित्याह—वर्णः संस्थानं चेति । संस्थानमवयवसन्निवेशः । क्रियावर्णसंस्थानानां व्यस्तत्वे त्रयः, क्रियावर्णयोः, क्रियासंस्थानयोः, वर्णसंस्थानयोस्त्रयाणां च समस्तत्वेन चत्वार इति सप्तास्य भेदाः । डिम्भतिर्यक्स्थावराविकृतवस्त्वन्तरगतत्वेन पुनरानन्त्यम् । प्रायेण तिरश्चामनारोपितक्रियारूपप्राचुर्यमित्यभिप्रायेणोदाहरति—पश्चादङ्घ्री इति ।

साहित्यचूडामणिः

द्रव्यं द्रव्येणेति द्रव्यस्य तेनैव विरोधमुदाहरति — समदेति । अत्र गङ्गाकालिन्द्योर्द्रव्ययोर्विरोधः । वर्णनीयस्य गजघटाधिक्यात् समाधिः ॥ २४½ ॥

स्वभावोक्तिरिति । स्वयोः क्रियारूपयोर्वर्णनमुक्तिः । रूपं च द्विधा वर्णः संस्था(प ? )नं च ।

पश्चादिति । अत्र सुप्तोत्थितस्याश्वस्य तिर्यग्जातेः स्वभावः । क्रियारूपो

१. 'निस्सङ्गत' क. ख. पाठः. २. 'तटविनतं' ख. पाठः. ३. 'ता' ग. पाठः.

घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥

सम्प्रदायप्रकाशिनी

प्रोथो नासाग्रदेशः । अत्र संस्थानक्रिये[१] । क्रिया यथा मम—

उत्प्लुत्याङ्घ्रियुगेन दन्तयुगलीमाक्रम्य तर्षार्दितः
श्वासैर्दीर्घतरैः शिरः करिपतेर्निश्चूष्य निर्दारितम् ।

साहित्यचूडामणिः

यथावद् वर्ण्यते । वर्णो यथा 'तुण्डैराताम्रकुटिलैरि'त्यादि । यथावा ममैव — (उत्तप्तहाटककडारदारगण्डैः नार्भकस्तिर्यीबुरन्तत इतस्थपुटेषु तथैरद्दते च तव गतिरिति । तैर्विनैव भूयो यदा तु उचिततरमिति ?) । संस्था(प ? )नस्य यथा — स दक्षिणापाङ्गनिविष्टमुष्टिमि'त्यादि ।

''मुग्धाङ्गनार्भकस्तिर्यञ्चि च पात्राणि चाश्रयः ।''

इति स्थित्या डिम्भादेरित्युक्तम् । यथा —

''आक्रोशन्नाह्वयन्नन्यानाधा(व)न्मण्डलं रुदन् ।
गाः कालयति दण्डेन डिम्भः सस्यावतारिणीः ॥''

इति । यत् सूत्रं — 'सूक्ष्मवस्तुस्वभावस्य यथावद् वर्णनं स्वभावोक्तिः' (अलङ्कारसू० ७८) इति । नखलु स्वभावमात्रमुक्तमलङ्कारः, अतिप्रसङ्गाद् येन सूक्ष्मग्रहणम् । सूक्ष्मत्वं च कवयितृमात्रस्य दुरशकत्वम् । यथावत्त्वं चान्यूनानतिरिक्तत्वम् । डिम्भादिपदार्थनिष्ठोऽपि स्वभावः कविनिर्मित इव यथावभासते तथा वर्णनं स्वभावोक्तिरिति । नचेयं भाविकं, तत्र हि भूतभविष्यतोरपि प्रत्यक्षीकाराय लोकोत्तरस्य वस्तुनो वर्णनमनुवर्णयिष्यते । प्रतीतिश्च तस्य परिस्फुटा ताटस्थ्यशालिनी च । अत्र तु लौकिकस्य वस्तुनो वर्णनीयता । प्रतीतिश्च सूक्ष्मधर्मत्वादपरिस्फुटा साधारण्यशालिनी च क्वचिदुभयसमावेशोऽपि पूर्ववत् सम्भवति । इयं चाक्षिप्ता समाहिता च व्यक्तिविवेके । यथा —

''अर्थस्वभावस्योक्तिर्या सालङ्कारतया मता ।
यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः ॥

१. 'क्रिययोः । क्रि' ग. पाठः.

सम्प्रदायप्रकाशिनी

दृप्तः सन्नवरुह्य गह्वरगतः पुच्छाग्रमाच्छोटय-
न्नास्ते शोणितपङ्किलाननतनेखं मुष्टिं लिहानो हरिः ॥

डिम्भस्य क्रिया यथा —

अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनसरसिजं शिशोः स्मरामि स्खलदसमञ्जसमञ्जु जल्पितं ते ॥

एवं स्थावरादिषु यथा ममैव —

हीयमानपरिणाहदुर्बलं पिण्डितं रविमणेः सिरामुखे ।
क्षुद्रबुद्बुदवदर्चिराकुलं सस्वनस्फुटनतो लयं ययौ ॥

अत्र क्रियासंस्थाने । (तावे? ते ए)वाविकृते चेतने यथा —

स्रस्तोत्तरीयमयथायथकीर्णगात्रं दोर्मूललङ्घिकुचमण्डलमायताक्ष्यः ।
अंसापवृत्तमणिकुण्डलमध्वखेदादङ्केष्वशेरत लतागहने पतीनाम् ॥

क्रियावर्णसंस्थानानि तिरश्चि यथा —

क्षीरक्षालितशङ्खशुक्तिधवला निर्मोकविस्रंसनाद्
भोगस्योपचयेन वामनमिवायामं सदा बिभ्रती ।

साहित्यचूडामणिः

कथं तर्हि स्वभावोक्तेरलङ्कारत्वमिष्यते ।
नहि स्वभावमात्रोक्तौ विशेषः कश्चनानयोः ॥
उच्यते वस्तुनस्तावद् द्वैरूप्यमिह विद्यते ।
तत्रैकमस्य सामान्यं यद् विकल्पैकगोचरः* ॥

---

१. 'शाद्वलग' ग. पाठः. २. 'मु' क. ख. घ. पाठः. ३. 'मुग्धज' ख. ग. पाठः ४. 'म ही' ख. पाठः. ५. 'शिरो मु' क. घ., 'शि' ग. पाठः. ६. 'श्चां' ख. पाठः.

---

* एतदनन्तरं "स एव सर्वशब्दानां विषयः परिकीर्तितः । अतएवाभिधेयं ते श्यामलं बोधयन्त्यलम् । विशिष्टमस्य यद्रूपं तत् प्रत्यक्षस्य गोचरः ।" इत्यधिकं मुद्रितव्यक्तिविवेके दृश्यते ।

सम्प्रदायप्रकाशिनी

धारादुर्गमकोटरे विटपिनः स्कन्धे शयाना शनैः
पातुं प्रक्रमते पयोदमरुतो गर्भालसा पन्नगी ॥

एवं भेदान्तरमभ्यूह्यम् । क्वचित् पुनः स्वभावोक्त्या स्वभावोक्त्यन्तरं व्यज्यमानमत्यन्तवैचित्र्याय । यथा —

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥

अत्रोदबिन्दुक्रियाविषयया समाधिसंस्थानविषया स्वभावोक्तिरभिव्यज्यते । तथाहि — उदबिन्दूनां क्षणं स्थित्या पक्ष्मणां संहतत्वं ताडनेनाधरयोः संवृतत्वं, चूर्णितत्वेन पयोधरोत्सेधहेतुरुरसोऽग्रतो विष्टब्धता, स्खलनेन वलीनां विश्लेषः, प्रपत्त्या नाभेर्विवृतत्वम् । अङ्गादङ्गमभिव्याप्नुवत्स्वपि पयोदबिन्दुषु निरालम्बसमाधिना स्थाणुवदवर्तिष्ट देवीति यावत् । अत्र स्वक्रियारूपेति स्वशब्दार्थमचेतयमानेन सान्धिविग्रहिकेण

"धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपाः ।
कृतमुखवाद्यविनोदाः क्रीडन्ति सुनिर्भरं डिम्भाः ॥"

इत्येतत् समारोपितक्रियारूपतया प्रत्युदाहरणमेवोदाहरणत्वेन यद् दर्शितं, तदुपहासमपि नार्हति ॥ २५ ॥

साहित्यचूडामणिः

स एव सत्कविगिरां गोचरः प्रतिभाभुवाम् ।
रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ॥
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ।
सा हि चक्षुर्भगवतस्तृतीयमिति गीयते ॥
येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्तिनः ।"

इति ॥ २५ ॥

१. 'नः स्वभावोक्त्य', २. 'प्रथमं स्थि' क. घ. पाठः.

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा* ।**

**व्याजरूपा व्याजेन वा स्तुतिः । क्रमेणोदाहरणं —**

सम्प्रदायप्रकाशिनी

**व्याजस्तुतिरिति । मुखे आपाततः प्रतीतौ निन्दा अन्यथा रूढिः प्रतीतिरित्येका । मुखे स्तुतिरन्यथा रूढिरित्यन्या ।**

**इत्थं च सति व्याजस्तुतिशब्दार्थौ द्विधा भवतीत्याह—व्याजरूपा व्याजेन चेति । स्तुतिशब्दः प्रत्येकमभिसम्बध्यते । यदा मुखे स्तुतिरन्यथा रूढिः तदा व्याजरूपा । अन्यदा व्याजेन । कर्मधारयस्य प्राक्प्रतीतिकत्वात् शब्दापेक्षया व्याजरूपामादौ निर्दिश्य लक्ष्यपदे स्तुतिपर्यवसितायाः प्राक्प्रतीतिकत्वादर्थापेक्षया सूत्रोद्देशक्रमेणोदाजिहीर्षुराह — क्रमेणेति ।**

साहित्यचूडामणिः

व्याजस्तुतिरिति । रूढिः पार्यन्तिकी प्रतिष्ठा तस्या अन्यथात्वं व्यत्यासः । यत् सूत्रं 'स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः' (अलङ्कारसू० ३७) इति । यच्चाहुः ।

"यत्र वाच्यतया निन्दा स्तुतिर्व्यङ्ग्यतयोच्यते ।
विपर्ययो वा विच्छित्त्यै व्याजस्तुतिरसौ स्मृता ॥"

इति । यत्र स्तुतिरभिधीयमाना प्रमाणान्तरेण बाधितस्वरूपा निन्दायां पर्यवस्यति तत्र व्याजरूपा स्तुतिः । यत्र तु निन्दा शब्देन प्रतिपाद्यमाना पूर्ववद् बाधितस्वरूपा स्तुतितया पर्यवस्यति तत्र व्याजेन निन्दामुखेन स्तुतिः । स्तुतिनिन्दाद्वारकविच्छित्त्यन्तरणादियमप्रस्तुतप्रशंसाया भिद्यते ।

**क्रमेणेति** । कारिकापेक्षया । व्याजरूपेत्यादिवृत्त्युक्तः क्रमो न घटते, तदपेक्षायां व्युत्क्रमत्वात् ।

१. 'मि', २. 'च व्या', ३. 'श्य पदौ स्तु' क. घ. पाठः.

* 'था ॥ व्याजेन व्याजरूपा वा' इति मूलकोशपाठः.

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जामज्जनमन्तरेण न रमामन्यत्र सन्दृश्यते ।
यस्त्यागं तनुषेतरां मुखशतैरेत्य श्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥

हे हेलाजितबोधिसत्त्व! वचसां किं विस्तरैस्तोयधे!
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥

---

सम्प्रदायप्रकाशिनी

**हित्वा त्वामिति** । मन्य इति वितर्के । एत्य श्रितायाः स्वतः समधिगम्य संश्रितायाः श्रियो मणिकनकादिना मुखेन यस्त्वं त्यागं तनुषे तं त्वां हित्वोपरोधवन्ध्यमनसां निरनुरोधचेतसां मौलिभूतः परो नास्ति । तथा त्यागकृतमवमाननं प्राप्यापि यस्यास्त्वय्येव स्थितिस्तां रमामन्तरेणान्यस्या लज्जाया मज्जनं निर्लज्जता न संदृश्यते । अत्रे[1]त्थं वाक्यद्वयेऽपि मुखे निन्दा । रूढौ महावदान्यत्वगुणवदाश्रया-नुरागित्वलक्षणायां स्तुतौ पर्यवसानम् । इयं व्याजेन ॥

**हे हेलेति** । बोधिसत्त्वो जीमूतवाहनः । अत्र मरोरुपकरोषीति स्तुतिर्नि[3]न्दां गमयति । इयं व्याजरूपा ॥ २५$\frac{1}{2}$ ॥

साहित्यचूडामणिः

हित्वेति । अनुरोधवन्ध्यमनसो निर्दाक्षिण्याः तेषां मौलिरग्रणीः । लज्जाया मज्जनं विनाशः । अत्र प्रमुखे निन्दा पर्यन्ते स्तुतिर्व्यङ्ग्येति व्याजेन स्तुतिः ।

हे इति । तृष्यतः पान्थजनस्य या सलिलप्रदानरूपोपकारघटना तत्र वैमुख्यमनादरः तेन लब्धस्य दुष्कीर्तिपुञ्जस्य प्रोद्वहने मरोरध्वनः साहायकदानं क्षारोदकत्वात् तत्र व्याजरूपा स्तुतिः ॥ २५$\frac{1}{2}$ ॥

---

१. 'त्यागतं, २. 'थं' क. घ. पाठः. ३. 'ति निन्दां' क. पाठः.

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥२६॥**

एकार्थाभिधायकमपि सहार्थबलाद् यदुभयस्यावगमकं सा सहोक्तिः। यथा—

सह दिअहणिसाहिँ दीहरा सासदण्डा
सह मणिवळएहिँ बाहधारा गळन्ति।

---

सम्प्रदायप्रकाशिनी

**सा सहोक्तिरिति**। घटपटौ सह तिष्ठत इत्येतद्विधर्मणस्तृतीयाविषयस्य सहार्थस्य बलाद् यदेकमुभयाभिधायि सा सहोक्तिः।

**सह दिअहेति**।

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सहमणिवलयैर्बाष्पधारा गलन्ति।

साहित्यचूडामणिः

सहोक्तिमाह — सेति। अर्थग्रहणं पर्यायस्वीकाराय। बलादिति। अन्यथा कस्यचिदेव वाचकत्वासिद्धेः।

वाचकत्वं च विविच्यमानं क्वचिदभिधायकत्वं क्वचिदवबोध(क)त्वमित्याह — **उभयस्यावगमकमिति**। यत् सूत्रम् 'उपमानोपमेययोरेकस्य प्राधान्यनिर्देशे परस्य सहार्थसम्बन्धे सहोक्तिः' (अलङ्कारसू० २९) इति। उपमानोपमेयत्वं चात्र वैवक्षिकं द्वयोः प्राकरणिकत्वादप्राकरणिकत्वाद्वा तुल्ययोगितावदभिधीयमानत्वादेकस्य प्रतीतिः सहार्थसामर्थ्यादन्यस्येति। यथोक्तं—

"तुल्यकालं क्रिये यत्र वस्तुद्वयसमाश्रिते।
पदेनैकेन कथ्येते सा सहोक्तिर्मता सताम्॥"

इति। तुल्यकालमित्युक्त्या दीपकव्यवच्छेदः। तत्र ह्येकत्र वर्तमाना क्रिया कारकान्तरमनुषङ्गादनुबध्नाति। इह तु केवलमुभयसम्बद्धत्वेन प्रतिपद्यते।

सहेति।

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति

तुह सुहअ! विओए तीअ *उव्विग्गिरीए
सह अ तणुळदाए दुब्बळा जीविदासा ॥

श्वासदण्डादिगतं† दीर्घत्वादि शाब्दम् । दिवसनिशादिगतं तु सहार्थसामर्थ्यात् प्रतिपद्यते ॥ २६ ॥

---

सम्प्रदायप्रकाशिनी

तव सुभग! वियोगे तस्या उद्वेगशीलायाः
सह च तनुलतया दुर्बला जीविताशा ॥

अत्र श्वासदण्डादिविषयं शाब्ददीर्घत्वादि सहार्थसामर्थ्याद् दिवसनिशादिविषयत्वमप्यापद्यते ।

तदेतदाह—**श्वासदण्डादीत्यादि** ॥ २६ ॥

साहित्यचूडामणिः

तव सुभग! वियोगे तस्या उद्वेगशीलायाः
सह च तनुलतया दुर्बला जीविताशा ॥

इति । श्वासदण्डादिविषयस्य दैर्घ्यादेः शाब्दत्वं (त?अन्य)त्र 'सह युक्तेऽप्रधाने' (२-३-१९) इति तृतीयानियमेन गुणभावा(द?दा)र्थत्वमित्याह — **श्वासेति** । औपम्यविवक्षाव्यतिरेकेण सहोक्तिमात्रं नालङ्कारः । यथा —

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।

इति । अस्या मालावैचित्र्यं यथा —

उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम् ।
वैदेहीमनसा समं तदधुनाकृष्टं ततो भार्गव-
प्रौढाहङ्कृतिकन्दलेन च समं भग्नं तदैशं धनुः ॥

इति । अत्र कर्मसाहित्यात् सहोक्तिः पूर्वत्र कर्तृसाहित्यादित्यपि भेद उन्नेयः ॥

---

* 'तम्मिरी' इति, † 'तं दीर्घदी' इति च मूलकोशपाठः.

**विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः ।**

क्वचिदशोभनः; क्वचिच्छोभनः; क्रमेणोदाहरणम्—

अरुचिर्निशया विना शशी शशिना सापि विना महत् तमः।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥
मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदानेन विना नरेन्द्रसूनुः ॥

---

सम्प्रदायप्रकाशिनी

**विनोक्तिरिति** । अन्यनिवृत्त्यान्यस्य साधुत्वासाधुत्वयोर्निवृत्ति-र्द्विधा विनोक्तिः ।

**अरुचिरिति** । अरुचिः अप्रभः । महत् तमः अत्यर्थं तम एव । मनोभवस्फुरितं कामोत्क्षोभः । अत्र साधुत्वस्य निवृत्तिः ।

**मृगलोचनयेति** । अत्रासाधुत्वस्य ॥ २६ $\frac{1}{2}$ ॥

साहित्यचूडामणिः

अथ सहोक्तिप्रतिभटभूता **विनोक्तिरिति** । सन्न शोभनो न किन्तु अशोभनः । नेतरः अशोभनो न किन्तु शोभनः ।

व्याचष्टे — **क्वचिदशोभन** इति सन्नेत्युक्तत्वात् । क्वचिच्छोभनः नेतर इत्युक्तत्वात् । यत् सूत्रं 'विना किञ्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः' (अलङ्कारसू० ३०) इति । सत्त्वस्य शोभनत्वस्याभावोऽशोभनत्वमसत्त्वस्य चाशोभनत्वस्याभावः शोभनत्वं, ते द्वे अपि प्रत्येकं यत्र कस्यचिदसन्निधाना-न्निबध्यते, सा द्विधा विनोक्तिः । अभिरूपानभिरूपत्वसत्तायामेव वक्तव्यायाम-सत्त्वमुखेनाभिधानमेकनिवृत्तिप्राधान्यादन्यनिवृत्तिरिति ख्यापनार्थम् ।

**अरुचिरिति** । अत्र निशीथिन्याद्यसन्निधिप्रयुक्तशशाङ्काद्यरुचित्वाभिधान-मुखेन शोभनेतरत्वमुक्तम् । यत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः ।

**मृगलोचनयेति** । अत्र विचित्रव्यवहारप्रागल्भ्याभिधानमुखेन शोभन-त्वमुक्तम् । एवं सुहृदसन्निधिप्रयुक्ते राजपुत्रस्य चन्द्रसौम्यहृदयत्वे द्रष्टव्यम् ॥

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः ॥ २७ ॥**

परिवृत्तिरलङ्कारः । उदाहरणं —

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमरुदितमोहव्यतिकरम् ॥

सम्प्रदायप्रकाशिनी

**परिवृत्तिरिति**।[2]अत्रार्थानां समैरर्थैर्विनिमये सम[3]ैका। अधिकै-न्यूनैर्वेति विषमा द्विधा ।

लक्ष्यस्योद्देशभ्रमो मा भूदित्याह — **परिवृत्तिरलङ्कार इति** ।

**लतानामिति** । मतमभिमतं लास्यं दत्त्वामोदं श्रयतीति समा । दृशं दृष्टिपातमादायाध्यादिव्य[4]तिकरं ददतीति विषमा अधिकेन ।

साहित्यचूडामणिः

**परिवृत्तिरिति** ।

लक्ष्यलक्षणयोर्विपर्ययशङ्कां शिथिलयति — **परिवृत्तिरलङ्कार इति** । परिवृत्तिशब्दो व्यत्यय इव विनिमये वर्तत इति भावः । भावानां यो विनिमयः सा परिवृत्तिः । समासमैः समैरसमैश्च । असाम्यं द्विधा न्यूनत्वमाधिक्यं च । एवं त्रिधा परिवृत्तिः । यत् सूत्रं 'समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः' (अलङ्कारसू० ६१) इति । दानप्रतिदानलक्षणो विनिमयः । (समत्वं) साम्यंगमितगुणत्वम् । न्यूनत्वमपकृष्टगुणत्वम् । उत्कृष्टगुणत्वं चाधिक्यम् । उक्तं हि —

"समन्यूनविशिष्टैस्तु कस्यचित् परिवर्तनम् ।
अर्थानर्थस्वभावं यत् परिवृत्तिरभाणि सा ॥"

इति ।

**लतानामिति** । अत्र तुल्यगुणेन त्यज्यमानेन तादृशस्य परिमलस्यादानम् ।

---

१. 'मु' क. पाठः. २. 'अर्था' ख. ग. ङ. पाठः. ३. 'है' ग. ङ. पाठः,
४. 'तिरेकं द' ग. पाठः.

अत्र प्रथमेऽर्धे समेन समस्य । द्वितीये उत्तमेन न्यूनस्य ।

नानाविधप्रहरणैर्नृप! सम्प्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥

अत्र न्यूनेनोत्तमस्य विनिमयः ॥ २७ ॥

**प्रत्यक्षा इव यद् भावाः क्रियन्ते भूतभाविनः ।**
**तद् भाविकं**

सम्प्रदायप्रकाशिनी

**नानाविधेति** । सम्प्रहारे मिथोयुद्धे प्रहारान् पातान्[1] । अत्र प्रहारान् स्वीकृत्य वसुधा वितीर्णेति न्यूनेन ॥ २७ ॥

**प्रत्यक्षा इवेति** । भूताश्च भाविनश्चार्थाः प्रत्यक्षा इव[2] यद् भाव्यन्ते तद् भाविकम् । अत्रोभयी दर्शनस्थितिः । कविसमर्थितानां विच्छित्तीनामलङ्कारत्वाद्[3] वर्णनायांतस्यानुभावस्य[4] प्रत्यक्षायमाणत्वं भाविकं[5], नेन्दुसौन्दर्यादेरिव वस्तुसन्निवेशिनः । अतः शब्दानाकुलतेति भामहेन, व्यस्त[6]सम्बन्धरहितशब्दसमर्पितत्व[7]मित्युद्भटेन चानाकुल-

साहित्यचूडामणिः

एतद्व्याचष्टे — **प्रथमेऽर्ध इति** । **द्वितीय इति** । उत्तमेन दृग्लक्षणेनाध्यादेः न्यूनस्य परिवृत्तिः । परिमलाध्यादेरर्थानर्थरूपत्वात् । तत्स्वरूपत्वं च व्याख्यातम् ।

**नानाविधेति** । वसुन्धराया उत्तमभूतायाः प्रहाररूपेण न्यूनेन परिवृत्तिः ॥ २७ ॥

भाविकमाह — लोकोत्तरतयात्यद्भुतत्वाद् वास्तवत्वव्यतिरेकेण शब्दसन्दर्भसमर्पितत्वाच्च प्रत्यक्षा इवेत्युक्तम् ।

१. 'न् स्वी' ङ. पाठः. २. 'विं' ख. ङ. पाठः. ३. 'विधीना' ङ. पाठः. ४. 'य' ग., 'यां' ङ. पाठः. ५. 'कमुक्तम् ।' ख. पाठः. ६. 'र्थ' ङ. पाठः. ७. 'र्थि' ग., 'र्थितमि' क. घ. पाठः.

भूताश्च भाविनश्चेति द्वन्द्वः। भावः कवेरभिप्रायो[1]ऽत्रा-
स्तीति भाविकम्। उदाहरणम्—

सम्प्रदायप्रकाशिनी

शब्दसमर्पितं प्रत्यक्षायमाणत्वं भाविकमुक्तम्। रुचकेन तयोरेव वर्त्मा-
नुसरता ग्रन्थकृन्मतमप्यासूचितम्। ग्रन्थकृता पुनः वस्तुसन्निवेशिनो
निसर्गवशादेव प्रत्यक्षायमाणस्यानुभावाल्लौ[2]किकस्यापि स्वभावोक्तिन-
येन कविवर्णनया विच्छित्तिविशेषसम्भ[3]वाद् अनागतविषयत्वादल-
ङ्का[4]रान्तरकल्पनेगौरवादिदोषाच्च भाविकत्वमेव सिद्धान्तितम्। अतः श-
ब्दानाकुल[5]त्वं विशेषमनपेक्ष्य सर्वभेदोपसङ्ग्रहाय 'प्रत्यक्षा इव यद् भावाः
क्रियन्ते भूतभाविनः' इत्येतावदेव लक्षणं कृतम्।

इदं व्याचष्टे—भूताश्चेति। द्वन्द्व इति प्रत्येकं प्राधान्याभि-
धानाद्[6] विषयद्वयं दर्शितम्। लक्ष्यैं[7]पदं निर्वक्ति—भावः कवेरिति।
कविभावस्य सार्वत्रिकत्वेऽपि तदेकप्राधान्यादिह व्यपदेशहेतुता।

अत्र[8]च,

"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥"

इत्यादिकस्य वर्णनायातस्य प्रकारस्याविवादसिद्धत्वाद् भूतभाविविषय-

साहित्यचूडामणिः

समासान्तरशङ्काभङ्गार्थमाह — द्वन्द्व इति। प्रध्वंसाभावाभि(भूतं?)
भूता भूताः, प्रागभावाक्रान्ताश्च भाविनः। कवेर्भाव आशयः श्रोतरि प्रति-
बिम्बत्वेनास्तीति व्युत्पत्तिरित्याह — भाव इति। भावश्च भावना पुनःपुन-
श्चेतसि विनिवेशनमादरप्रत्ययेन हृदये धार्यमाणत्वं यत्र योगिनामिव काव्य-
वेदिनामभियोगः।

१. 'यो यत्रा' ख. पाठः. २. 'नुमानस्या' क. ग. घ. ङ. पाठः. ३. 'म्भावे-
ना' ग. पाठः. ४. 'ङ्कार' क. ग. घ. ङ. पाठः. ५. 'नुकूल' ख. पाठः. ६. 'द् द्वि
(वि)षयं' क. ग. घ. 'द्विविषयत्वं द' ङ. पाठः. ७. 'क्ष्यं नि' क. ग. पाठः. ८. 'त्र
मु' ख., 'त्रहि मु' ङ. पाठः.

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥

अत्राद्येऽर्धे भूतस्य द्वितीये भाविनो दर्शनम् ।

---

सम्प्रदायप्रकाशिनी

तयोदाहृतकल्पतामभिसन्धाय द्वितीयं प्रकारमुदाहरति — आसीद-ञ्जनमिति । तव लोचनं पूर्वेद्युरञ्जनमत्रासीदिति पश्यामि दर्शनकाले क्षालितमप्यञ्जनं स्वाभाविकसौन्दर्यवशात् साक्षादनुभवामीत्यर्थः । कुर्व इत्यात्मनेपदाद् दर्शनविषयस्यानन्दस्य कर्त्रभिप्रायता । एवं भा-विन्यपि भूषणसम्भारे तद्योगिनीमिव तवाकृतिं प्रत्यक्षयामि ।

अत्र भेदद्वयमुदाहृतमुद्घाटयति — अत्राद्येऽर्धे इत्यादि । एवम् 'अनुभावविशेषात्तु सेनापरिगताविव' इत्यादावपि ज्ञेयम् । एव-मादौ

काव्यप्रकाशसूत्राणां व्याख्याबुद्ध्या विरोधिनः ।
लिखिता रुचकग्रन्थाः सान्धिविग्रहिकेण धिक् ॥

साहित्यचूडामणिः

आसीदिति ।

अत्र पूर्वार्धे भूतस्य लोचनाञ्जनस्य प्रत्यक्षतया प्रतिभासः । उत्तरत्र भविष्यतो भूषणसम्भारस्य । अन्यत्राप्येवमुदाहारि ।

"करोषि पीडां प्रीतिं च निरञ्जनविलोचना ।
मूर्त्यानया समुद्वीक्ष्य नानाभरणशोभया ॥"

इति । नचेद(म)तिशयोक्तिः अन्यस्यान्यतयाध्यवसानाभावात्, नह्यत्राभूतं भावित्वेन प्रत्यक्षमप्रत्यक्षत्वेन वाध्यवसीयते । नचेवार्थगर्भीकारात् प्रतीयमानो-त्प्रेक्षा न खलु वस्तुवर्तिनमिवार्थमादायोत्प्रेक्षा प्रयुज्यते तस्या आभिमानिकतया प्रतिपत्तृधर्मत्वात् । यदाहुः —

'अभिमाने च सा योज्या ज्ञानधर्मे सुखादिवत् ।'

---

१. 'मिति त' क. ग. घ. ङ. पाठः. २. 'सुख' क. घ. पाठः.

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ २८ ॥**

वाक्यार्थता यथा —

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे! नैवास्मि क्षणमपि भवन्तं प्रणतवान् ।
नमन् मुक्तः सम्प्रत्यतनुरहमग्रेऽप्यनतिमान्
महेश! क्षन्तव्यं तदिदमपराधद्वयमपि ॥

सम्प्रदायप्रकाशिनी

काव्यलिङ्गमिति । हेतोर्जनकस्य । अर्थतेति प्रत्येकमभिसम्बध्यते वाक्यार्थता पदार्थता चेति । काव्यग्रहो व्याप्तिपक्षधर्मतानपेक्षया लौकिकलिङ्गवैधर्म्याय ।

वपुरिति । वपुःप्रादुर्भावात् कार्यात् पुरा जन्मनि अनमनं कारणं, सम्प्रति नमतो मुक्तेः कारणादग्रेऽप्यनमनं कार्यमनुमितम् । अनुमितेर्लौकिकत्वम् । अनुमितेर्लौकिकत्वाद् नायमनुमानालङ्कारः । ते एते वपुःप्रादुर्भावमुक्ती यथावदनमनद्वयस्य जन्यजनकतया लिङ्गे ।

साहित्यचूडामणिः

इति । नापि काव्यलिङ्गं, जन्यजनकभावाद्यप्रतीतेः, योगिवत् प्रत्यक्षतया प्रतीतेश्च । नापि रसवान् । तत्र रत्यादिचित्तवृत्तीनां साधारण्येन परमाद्वैतज्ञानिवत् प्रतीतेः, ताटस्थ्येन भिन्नसर्वज्ञवत् प्रतीतेश्च । नाप्यस्य शब्दानाकुलताहेतुतया झटित्यर्थसमर्पणात् प्रसादलक्षणे गुणेऽन्तःपातः । तस्य स्फुटास्फुटोभयवाक्यार्थवर्तितया झटित्यर्थसमर्पणस्वभावत्वाद्, अस्य झटिति समर्पितस्य स्फुटत्वेन प्रतीतौ स्वरूपप्रतिलम्भात् । नापि वस्तु भूतमात्रं भूतभाविवर्तिनः प्रत्यक्षप्रतिभासलक्षणस्य धर्मस्याधिक्येनोपलम्भनात् । नच भ्रान्तिमान् । भूतभाविनोस्तथात्वेनैव स्फुरणात् । इत्यलमतिसूक्ष्मेक्षिकया ।

काव्यलिङ्गमिति । यत्र कारणरूपो हेतुर्वाक्यार्थस्थित्या विशेषणद्वारे वा पदार्थस्थित्या लिङ्गत्वेन निबध्यते तत् काव्यलिङ्गमित्याह — हेतोरि-[1]
यत् सूत्रं 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम्' (अलङ्कारसू० ५७) इति । ', ४.

१. 'जन्यजनक' ख. पाठः.

अनेकपदार्थता यथा —

प्रणयिसखीसलीलपरिहासरसाधिगतै-[1]
ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपाक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥

एकपदार्थता यथा —

भस्मोद्धूलन! भद्रमस्तु भवते रुद्राक्षमाले! शुभं
हा सोपानपरम्परे! गिरिसुताकान्तालयालङ्कृते! ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे[2] ॥

एषु अपराधद्वये पूर्वापरजन्मनोरनमनं, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ॥

सम्प्रदायप्रकाशिनी

पदार्थता द्विधेत्यभिप्रायेणाह — अनेकेति ।

प्रणयीति । अत्र भुजदण्डपाते सुकुमारवपुर्वधाय शस्त्रं तदुपक्षेपश्चेत्यनेकः[3] पदार्थो हेतुः ।

भस्मोद्धूलनेति । शुभमित्यत्र भवत्यै इत्यनुषङ्गः । हा अनुशोचामीत्यर्थः । अत्रालोकोच्छेदो महामोहत्वे हेतुः ।

त्रिष्वपि योजयति — एष्वपराधेत्यादि । उक्त[4]रूपमित्यत्र

साहित्यचूडामणिः

क्षण्यार्थं काव्यग्रहणम् । नखल्वत्र व्याप्तिपक्षधर्मोपसंहारादि क्रियते । वाक्यार्थरूपस्य चास्य हेतुत्वेनोपनिबन्धः । नोपनिबद्धस्य हेतुत्वं कर्तव्यम् । अन्यथार्थान्तरन्यासत्वापत्तेः । पदार्थत्वं द्विधा । अनेकत्वादेकत्वाच्च । क्रमादुदाहरति ।

प्रति व्याचष्टे — एष्विति । वाक्यार्थतायामे(काने)कपदार्थतायां चोदा-

१. 'यि' क. पाठः. २. 'धी' ख. ग. पाठः. ३. 'कप' ग. पाठः. ४. 'क्त' —, ङ. पाठः.

**पर्यायोक्तं विना वाच्यवाचकत्वे वचस्तु यत् ।**

वाच्यवाचकभावविविक्तेनावगमनव्यापारेण यत् प्रतिपादनं तत् पर्यायेण भङ्ग्यन्तरेण भणनात् पर्यायोक्तम् । उदाहरणं —

---

सम्प्रदायप्रकाशिनी

तदेतत् त्रयमित्यध्याहारः । अर्थान्तरन्यासवैधर्म्याय हेतोरुक्तरूपता । अर्थान्तरन्यासे ह्युक्तस्य पश्चाद्धेतुभावः ॥ २८ ॥

पर्यायोक्तमिति । साक्षात्सङ्केतगोचरो वाच्यः, तदभिधायको वाचकः । इमं वाच्यवाचकत्वसम्बन्धं विना यदवगमनप्रकारान्तरेण प्रतिपादनं तत् पर्यायोक्तम् ।

व्याचष्टे — वाच्यवाचकभावेति ।

साहित्यचूडामणिः

हृतेषु । वपुरित्यादावपराधद्वये क्षन्तव्यतया प्रार्थिते (न ?) पूर्वापरजन्मनोरनमनं प्रणामाभावो जन(को) हेतुः वपुःप्रादुर्भा(वो ? वा)त्वमन्नित्यादिवाक्यार्थरूपः । प्रणयीत्यादौ भुजपाते शस्त्रोपक्षेप उत्पादको हेतुः शस्त्रमुपक्षिपत इत्यनेकपदार्थरूपः । भस्मेत्यादौ च महामोहे सुखालोकोच्छेदित्वमेकपदार्थरूपो जनको हेतुः ॥

पर्यायोक्तमिति ।

अभिधायकाभिधेयभावव्यतिरेकादवगमनव्यापारेण यत् प्रतिपाद(कं ? न)मनभिधायकरूपं तत् पर्यायोक्तमित्याह — वाच्येति । निर्वक्ति — तदिति । यत् सूत्रं 'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्' (अलङ्कारसू० ३६) इति । उक्तं च —

"पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥"

इति । वाच्यवृत्तिराकाङ्क्षास(न्नि)धियोग्यताभिः संसर्गः । वाचकवृत्तिरभिधा । तदुभयशून्येन व्यञ्जनव्यापारेणाभिधीयत इति भावत् ।

---

१. 'कवि' क. पाठः. २. 'कथनात्' ग. पाठः. ३. 'रादाह । अ', ४. 'ते' क. घ. पाठः. ५. 'क' क. पाठः. ६. 'कनमभि' ग. घ. पाठः.

यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥

अत्र ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते । तेन यदेवोच्यते तदेव व्यङ्ग्यम् । यथा तु व्यङ्ग्यं न तथोच्यते । यथा गवि शुक्ले चलति दृष्टे गौः शुक्लः चलतीति विकल्पः । यदेव दृष्टं तदेव विकल्पयति नतु

---

सम्प्रदायप्रकाशिनी

यं प्रेक्ष्येति । चिररूढा चिराद् बद्धमूला ।

योजयति — अत्र ऐरावणेत्यादि । अत्र ह्यैरावणशक्रौ मदमानमुक्ताविति व्यङ्ग्यं सदपि शब्देनोच्यते । अतो यदेव वाच्यकक्ष्यायां तदेव व्यङ्ग्यकक्ष्यायामपीत्याह — तेन यदेवेति । व्यञ्जनाभिधानप्रकारौ तु भिन्नावित्याह — यथा त्विवति । मदमानमुक्ताविति व्यङ्ग्यम् । मदमानाभ्यां निवासप्रीतिरुज्झितेति अभिधानम् । नन्वेवंभावे किं निदर्शनमित्यत आह — यथा गवीत्यादि । गोः शुक्लत्वे चलत्वेऽपि प्रथमाक्षसन्निपाते सामान्यावगतिः । अथ गौः शुक्लश्चल इति विकल्पः । अतो दृश्यविक(ल्प ? ल्प्य)योर्न भेदः । दर्शनविकल्पप्रकारयोस्तु भेद इत्याह — यदेवेत्यादि । प्रकारभेदं

साहित्यचूडामणिः

यमिति । अत्र कार्यमुखेन रावणस्य स्वर्गविजयलक्षणः प्रभावविशेषो वर्णितः । प्रभावविशेषवर्णनं च न कारणादेव यावत् कार्यादपीत्युक्तम् ।

ननु व्यङ्ग्यमपि शब्देनोच्यत इति महती व्याहतिरिति चेत् । तेनेति । व्यङ्ग्यापेक्षया प्रकारान्तरेणाभिधानसम्भवात् । नहि तस्यैव तदैव तथैव विच्छित्त्या गम्यत्वं वाच्यत्वं चेत्याचक्ष्महे । किन्तर्हि । कार्यादिद्वारेण वाच्यत्वमेव स्वसामग्र्या व्यङ्ग्यत्वमिति । प्रकारान्त(रां ? राद्)गम्यमानस्य प्रकारान्तरेण वाच्यत्वं, नतु तेनैव प्रकारेणेत्याह — यथात्विति । प्रकारभेदद्योतकः थाल्प्रत्ययः । एतद् दृष्टान्तेन प्रतिष्ठापयति — यथेति । दृष्ट इति । निर्विकल्प-

**यथा दृष्टं[1] तथा । अभिन्नासंसृष्टत्वेन[2] रूपेण दृष्टं भेदसंसर्गाभ्यां[3] विकल्पयति ।**

**उदात्तं वस्तुनः सम्पत्**

**सम्पत् सर्म्द्धियोगः[4] । यथा —**

---

**सम्प्रदायप्रकाशिनी**

**विविच्य दर्शयति — अभिन्नेति । भेदो व्यावृत्तिः गुणकृता । संसर्गोऽन्वयः क्रियाकृतः । क्रोडीकृतविशेषं सामान्यमभिन्नासंसृष्टत्वेन पश्यति । अथ विकल्पस्य शब्दोल्लेखनियतत्वाद्[5] भेदसंसर्गाभ्यां विकल्पयति ।**

**उदात्तमिति । सम्पदित्युक्तेऽपि वस्तुसम्बन्धसिद्धौ पुनर्वस्तुग्रहः[6] सम्यक्त्वाय ।**

**तदेतदाह —सम्यगिति ।**

साहित्यचूडामणिः

तयेति शेषः । अविकल्पतया यदेव गवादिकं दृष्टं तदेव वैचित्र्यादि प्रमाता विकल्पयति । न पुनर्यथा दृष्टं तथैव विकल्पयितुमर्हति, विकल्पाविकल्पयोरवैलक्षण्यप्रसङ्गात् । ननु विकल्प्यमानत्वमविकल्प्यमानत्वं च कथमेकस्यैवेति चेद् आह— **अभिन्नेति** । अविकल्पावस्थायां शुक्लादिना यदभिन्नं विकल्प्यादुल्लेखादसंस्पृष्टं च, तस्मादेव तद्विकल्पवेलायां भेदेन संसर्गेण च विकल्पयतीति प्रकारभेदात् तत्रापि न व्याहतिः । यदि पुनरभिधीयत इत्यस्य बलाद् व्याख्या प्राधान्येन प्रतीयते इति, तदलङ्कारत्वमस्य दत्तजलाञ्जलि स्यात् । आत्मतायां पर्यवसानात् । ध्वनिर्हि सर्वत्र भाव्याद् व्यापकः समस्तप्रतिष्ठास्थानत्वादङ्गी । नचालङ्कारस्य व्यापक(त्व)मङ्गित्वं वा बाह्यालङ्कारान्तरवदलङ्कार्यपारतन्त्र्यात् । अथैतदुदाहरणमनादृत्य 'भम' धम्मिअ' इत्याद्युदाह्रियत इति चेद्, नेयं राज्ञामाज्ञा, नच धर्मसूत्रकारवाक्यं, यावतास्मच्छिष्यता परिशिष्यते ।

**उदात्तमिति ।**

कविवर्णनोद्रेचिता समृद्धिरस्य लक्षणमित्याह— **सम्पदिति** । यत् सूत्रं

---

१. 'य', २. 'न ह' ख. पाठः. ३. 'सृष्टाभ्यां' क. ख. पाठः. ४. 'मृद्धियोगः' इति मूलकोशपाठः. ५. 'खित्वा' घ., 'खितत्वा' क. पाठः. ६. 'सम्बन्धः स' क. घ. पाठः.

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः[1]
प्रातः प्राङ्कणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
आराद् दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद् विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम् ॥

**महतां चोपलक्षणम् ॥ २९ ॥**

उपलक्षणमङ्गभावः । अर्थादुपलक्षणीयेऽर्थे । उदाहरणं —

सम्प्रदायप्रकाशिनी

**मुक्ता** इति । केलिविसूत्रत्वं सुरतलीलाछिन्नसूत्रत्वम् । विद्वद्भवनेषु कर्षन्ति यत्, तदेतद् भोजस्य त्यागलीलायितमात्रम् ॥

उदात्तान्तरमाह—**महतां चेति** । उपलक्षणमुपलक्ष्येऽर्थे[2] व्यावर्तकत्वम् ।

व्याचष्टे — **उपलक्षणमिति** । अङ्गिन आक्षेपात् सिद्धिरित्याह — **अर्थादुपलक्षणीय** इति ।

साहित्यचूडामणिः

'समृद्धिमद्वस्तुवर्णनमुदात्तम्' (अलङ्कारसू० ८०) इति । स्वभावोक्तिभाविकयोर्यथावस्थितस्य वस्तुनो वर्णनमत्र त्वारोपितस्येति भेदः ।

**मुक्ता** इति । अत्रासम्भाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमनुभूयते ।

एवं मतान्तरानुगुण्यादन्यथापि लक्षणमित्याह— **अर्थादिति** । यत् सूत्रम्—'अङ्गभूतमहापुरुषचरितवर्णनं च' (अलङ्कारसू० ८१) इति । यदाहुः—

"उदात्तमृद्धिमद् वस्तु चरितं च महात्मनाम् । "

इति । उदारचरितानामङ्गीभूतवस्त्वन्तराङ्गभावेन निबध्यमानं यच्चरितं तदुदा(र?)त्तं(न?) न पुनरितिवृत्तविषयम् । यदाहुः —

"उदात्तमृद्धिमद् वस्तु चरितं च महात्मनाम् ।
उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम् ॥"

इति । अर्थप्राप्तावनर्थाप्राप्तावनर्थपरिहारे च प्रवृत्ताः पुरुषा महान्त उच्यन्ते

१. 'भिः कृताः' इति मूलकोशपाठः. २. 'क्ष्यकेऽर्थे' क. घ. पाठः.

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥

नचात्र वीरो रसः । तस्येहाङ्गत्वात् ॥ २९ ॥

तत्सिद्धिहेतावेकस्मिन् यत्रान्यत् तत्करं भवेत् ।
समुच्चयोऽसौ ।

तस्य प्रस्तुतस्य कार्यस्य एकस्मिन् साधके स्थिते साधकान्तराणि यत्र सन्ति स समुच्चयः । उदाहरणं —

---

सम्प्रदायप्रकाशिनी

तदिदमिति । अत्र रामस्यारण्योपलक्षणत्वम् ।

ननु वीररसः प्रतीयते तदालम्बनस्य कथमङ्गत्वमित्यत आह— नचात्रेति । नात्र प्रतीयमानो वीररसः, अरण्येऽङ्गत्वात् । अतो रसवानेव । अत्रैतदाकूतं— येषामुद्भटादीनां प्रधानभूतो रस एव रसवान्, तन्मते अङ्गभूतो रसो द्वितीयोदात्तत्वेन सम्भवति । ध्वनिदर्शने तु प्रधानभूतस्य रसस्यालङ्कार्यत्वादङ्गभूतो रसो रसवान् । स एव द्वितीयोदात्तत्वेन व्यवह्रियत इति ॥ २९ ॥

तत्सिद्धीति । अन्यदित्येकत्वमविवक्षितम् । प्रकृतस्य कार्यस्य एकस्मिन् साधके स्थिते साधकान्तरयोगः समुच्चयः ।

व्याचष्टे — तस्येत्यादि ।

साहित्यचूडामणिः

तदिदमिति । अत्रारण्ये वर्णनीये राघवचरितमङ्गत्वेन वर्णितम् ।

नन्वत्र वीररसप्रयुक्तचमत्कारोऽस्तु इत्यत्राह — नचेति । प्रधानभूतो वीरोऽत्र नास्तीति भावः ॥ २९ ॥

समुच्चयमाह — तत्सिद्धीति ।

यत्रैकं कस्यचित् कार्यस्य सिद्धिहेतुत्वेन विवक्ष्यते, तत्रान्ये यदि स्पर्धया तद्वृद्धिं कुर्युः स समुच्चय इत्याह—तस्येति । नचायं समाधिः । यत्र

---

१. 'क' क. घ. पाठः. २. 'नचात्र' ख. पाठः.. ३. 'न् । तत्सि' क, ग, घ, पाठः.

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथन्नु विरहः सोढव्य इत्थं शठः ॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति । तदुपरि प्रियतमदूरस्थित्याद्युपात्तम् ।

एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च[२] पृथग् लक्ष्यते । तथाहि—

सम्प्रदायप्रकाशिनी

दुर्वारा इति । अत्र विरहासहत्वस्य स्मरमार्गणेष्वेव साधकेषु प्रियतमदूरस्थित्यादीन्यपि साधकानि ।

तदेतदाह— अत्र विरहेत्यादि ।

रुद्रटस्तु[३] त्रिधान्यः[४] सदसतोर्योग इति वक्ष्यमाणं गुणक्रियायौगपद्यलक्षणं समुच्चयमेव सद्योगे असद्योगे सदसद्योगे चेति पृथगलक्षयत् । न तथा लक्षणीयम् । तस्यापि समुच्चयस्य सद्योगादित्रैविध्यसम्भवादित्याह— एष एवेत्यादि[५] । तथोदाहर्तुमाह— तथाहीति ।

साहित्यचूडामणिः

खल्वेकस्य कार्यं प्रति पूर्णं साधनत्वमन्यत्तु काकतालीयन्यायादवतिष्ठते स समाधिः । यत्र खलेकपोतिकायुक्त्या बहूनामवतारः स समुच्चय इति विवेकः ।

दुर्वारा इति । यत्र प्रथमोपात्ताः स्मरमार्गणा एव विरहवैक्लव्यमुद्भावयितुं प्रगल्भन्ते, तदुपरि वल्लभप्रवासादयः समुच्चीयन्ते ।

अत्र चिरन्तनचर्चितो विभागः उपजी(व्य) व्यवहर्तव्य इत्याह — एष चेति ।

१. 'च स', २. 'च पर्यवस्यतीति न प्र' ग. पाठः. ३. 'द्रस्तु' क. घ. पाठः. ४. 'त्रे' ख. पाठः. ५. 'व चेत्या' क. ग. घ. पाठः.

कुलममलिनं भद्रा मूर्तिर्मतिः[1] श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥

अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्कणगतः खलो मनसि सप्त शल्यानि मे ॥

---

सम्प्रदायप्रकाशिनी

**कुलमिति । अत्र कुलमूर्त्यादीनां सतां योगः ।**

**दुर्वारा इत्यत्रासद्योग इत्याह—उक्तोदाहरणे त्विति । विरहासहहेतुत्वाविशेषान्निर्मलं कुलमप्यसत्त्वेन विवक्षितम् ।**

**सदसद्योग उदाहरति—शशीति । अत्र शशिनः सतो धूसरत्वेन सदसतां शल्यान्तराणां योगः ।**

साहित्यचूडामणिः

कुलमिति । अत्र निष्कलङ्कत्वेन शोभनस्य कुलस्य मूर्त्यादिभिः शोभनान्तरैर्योगः ।

उक्तेति । दुर्वारा इत्यत्र । दुस्सहत्वादशोभनानां मन्मथबाणानां प्रेयःप्रवासादिभिरशोभनान्तरैर्योगः ।

शशीति । अत्र शशिप्रमुखस्य शोभनस्य खलेनाशोभनेन योगः । अन्ये तु शशिनः शोभनस्यापि दिवसधूसरत्वादशोभनत्वम् । एवं कामिन्यादेर्गलित-

---

१. 'र्तिः श्रुतिः' क. पाठः. २. 'हत्वहे' क. ख. घ. पाठः.

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोर्योगः ।

स त्वन्यो युगपद् या गुणक्रियाः ॥ ३० ॥

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः । क्रमेणोदाहरणं —

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप! मलिनानि च तानि जातानि ॥

---

सम्प्रदायप्रकाशिनी

तदेतदाह — अत्र शशिनीत्यादि ।

समुच्चयान्तरमाह — स त्वन्य इति ।

गुणक्रिया इत्येकशेष इत्याह — गुणौ च क्रिये च गुणक्रिये चेति । तद्यौगपद्यात्मा समुच्चयोऽयं त्रिधा ।

विदलितेति । प्रखलमुखानि दुर्जनमुख्यानि तानि अरिबलानि । अत्र वैमल्यमालिन्ये गुणौ युगपत्, द्वौ चकारौ यौगपद्यद्योतिनौ यतः ।

साहित्यचूडामणिः

यौवनत्वाद्यूह्यम् । अन्ते च खलत्वादशोभनत्वं नृपाङ्कणगतत्वेन च शोभनत्वम् । नच दुर्वारा इत्यादावपि सदसद्योगप्रसङ्ग इति वक्तुं युक्तं, शस्यादिवत् स्मरमार्गणादीनां स्वतः शोभनत्वप्रसिद्ध्यभावात् । यस्तु चन्द्रादेर्विशेष्यस्य शोभनत्वं दिवसधूसरत्वादेश्च विशेषणस्याशोभनत्वमिति प्रक्रमे खलस्य विशेष्यस्याशोभनत्वं नृपाङ्कणगतत्वस्य च विशेषणस्य शोभनत्वमिति व्यत्यासः, तदुभयथापि न प्रक्रमभङ्गमुल्लङ्घयतीत्याचक्षते ।

प्रकारान्तरेण समुच्चयमाह — स त्विति ।

बहुवचनानुकूलं विगृह्णाति — गुणौ च क्रिये च गुणक्रिये चेति । तन्त्रेणोक्तिरिति यावत् । यत् सूत्रम् — 'गुणक्रियायौगपद्यं समुच्चयः' (अलङ्कारसू० ६५) इति ।

---

१. 'शीत्या', २. 'पि' ख. पाठः. ३. 'ख्या' क. ख. घ. पाठः.

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुरसहो मे।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपर्धिरम्यैः॥

कलुषं च तवाहितेष्वकस्मात्
सितपङ्केरुहसुन्दराश्रि चक्षुः।
पतितं च महीपतीन्द्र! तेषां
वपुषि प्रस्फुटमापदां कटाक्षैः॥

'धुनोति चासिं तनुते च कीर्त्तिम्' इत्यादेः,

---

सम्प्रदायप्रकाशिनी

अयमेकपद इति। अत्रोपनतिभवने क्रिये।

कलुषं चेति। अत्र कालुष्यपातौ गुणक्रिये। एष्वपि यथावत् सदसद्योगः। यत्तु रुद्रटेनैव—

"व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन्।
उपजायेते देशे समुच्चयः स्यात् तदन्योऽसौ॥"

इत्येककालं वैयधिकरण्ये एकदेशत्वे च समुच्चयान्तरमुक्तं, तन्न वाच्यमिति सम्प्रत्युदाहरणमाह—धुनोति चेत्यादि। अत्र धूननतननयोरेककालमैकाधिकरण्याद् व्यधिकरण इति न वाच्यम्।

साहित्यचूडामणिः

अयमिति। अत्र प्रियया वियोगोपनतेः अह्नामुक्तविशेषणतया भावस्य च क्रिययोः समुच्चयः।

केचिन्न केवलं गुणक्रियाणां व्यस्तत्वे, यावत् समस्तत्वेऽपि समुच्चयं निश्चिन्वन्तीत्यागूर्योदाहरति— कलुषं चेति। सितेति। पुण्डरीकसौम्यकान्ति। अत्र चक्षुःकालुष्यगुणस्य विपत्कटाक्षपातलक्षणायाश्च क्रियाया यौगपद्यम्। एवं च शुद्धयोर्गुणयोः क्रिययोश्च मिथो गुणक्रिययोश्च यौगपद्यं समुच्चय इत्युक्तं भवति।

अत्र सामानाधिकरण्यप्रयुक्ता विप्रतिपत्तिर्व्यर्थेत्याह—न वाच्यमिति। उभयथाप्यभीष्टत्वात्॥ ३०॥

कृपाणपाणिश्च भवान् रणक्षितौ
ससाधुवादाश्च सुराः सुरालये ।

इत्यादेश्च दर्शनात् व्यधिकरणे इति एकस्मिन् देश इति च न वाच्यम् ॥ ३० ॥

**एकं क्रमेणानेकस्मिन् पर्यायः**

एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा स पर्यायः । क्रमेणोदाहरणं —

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

यथावा —

सम्प्रदायप्रकाशिनी

**कृपाणेति** । अत्र क्षितौ सुरालय इत्येककाले[2] देशभेदादेकस्मिन् देश इत्यपि न वाच्यम् ॥ ३० ॥

**एकं क्रमेणेति** ।

**व्याचष्टे — एकं वस्त्विति** । विशेषालङ्कारव्यावृत्त्यै क्रमग्रहः, तत्र हि यौगपद्यम् ।

साहित्यचूडामणिः

पर्यायमाह — एकमिति । क्रमग्रहणं वक्ष्यमाणद्वितीयविशेषालङ्कारव्यवच्छेदाय, तत्र यौगपद्यस्यावस्थापयिष्यमाणत्वात् । तत एव पर्याय इत्यर्थाश्रयणं भवति ।

**क्रियते** वेति । स्वतस्सिद्धि(मा ? र्भा)वः, अन्येन प्रयोजनेनोत्पादनं करणम् । एवञ्च यदेकं तद् भवति क्रियते वेति द्विधा । यदनेकं तत् संहतमसंहतं चेति द्विविधम् । श्लेषेणौपम्येन च विच्छित्त्यन्तरमिति चत्वारो भेदाः ।

---

१. 'स्मिन्नेव दे' ग. पाठः. २. 'ल' क. ख. घ. पाठः.

बिम्बोष्ठ एव रागस्ते तन्वि! पूर्वमदृश्यत।
अधुना हृदयेऽप्येष मृगशावाक्षि! लक्ष्यते[1] ॥

रागस्य वस्तुतो भेदेऽप्येकतयाध्यवसितत्वादेकत्वमविरुद्धम्[2] ।

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥

सम्प्रदायप्रकाशिनी

**श्रोणीबन्ध** इति । यौवनेन गात्राणां बाल्यगुणविनिमयः कृतः । तथा हि— तनुतामुपचीयमानः श्रोणीबन्धस्त्यजति । अपचीयमानो मध्यभागः सेवते । पद्भ्यां मान्थर्यावलम्बिभ्यां तरलगतयस्त्यक्ताः त्यक्तमान्थर्याभ्यां लोचनाभ्यां श्रिताः । अद्वितीयं वक्षः कुचसचिवतां धत्ते । त्यक्तमातृकुचसाचिव्यं वक्त्रमद्वितीयमनुपमं भवति । अत्रैकस्य तनुतादेरनेकत्र क्रमेण भावः ।

साहित्यचूडामणिः

क्रमेणोदाहरति— **तन्विति** । आश्रयस्थितिराश्रयमर्यादा । अत्र कालकूटस्य बिम्बोष्ठहृदययोः (?) संहतयोर्वृत्तिर्दृश्यत इति स्वतःसिद्धिलक्षणोक्ता ।

ननु रागः कदाचिदारुण्यम् अन्यदा भावविशेष इत्यस्य कथमेक(त्व)मित्याह— **रागस्येति** । श्लेषोपश्लेषादेकत्वमविरुद्धमिति यावत् ।

**श्रोणीति** । अत्र तनुताया एकस्य श्रोणीबिम्बमध्यभागयोः संहतयोः क्रमेण वृत्तिः । सा च गुणविनिमयः कल्पितो यौवनेनेत्युक्तत्वादन्योत्पादनरूपे करणे पर्यवस्यति । विनिमयोऽत्र व्यत्ययरूपो गौणः । न तदा(दा)नलक्षणो मुख्यः । तारुण्यादावूह्यम् । एकस्या नितम्बबिम्बस्य त्यागहेतुत्वान्मध्यभागस्य च सेवाहेतुत्वात् संहतत्वम् । एवं पादलोचनादीनां तरलगतिमोचनसंश्रयादा(रुण्यं? वूह्यम्) ।

१. 'दृश्यते' ख. ङ. पाठः २. 'द्धम् । तं ताण' इति मूलकोशपाठः.

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम्।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥

अन्यस्ततोऽन्यथा।

---

सम्प्रदायप्रकाशिनी

तं ताणेति।

तत् तेषां श्रीसहोदररत्नाहरणे[1] हृदयमेकरसम्।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥

अत्र दानवानां कौस्तुभापहरणे सक्तस्य हृदयस्य प्रियाधरे निवेशनं[2] करणम्।

पर्यायान्तरमाह — अन्यस्ततोऽन्यथेति।

साहित्यचूडामणिः

तं ताणेति।

"तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥"

इति। तेषां पातालवासिनामसुराणामिति प्रकरणात्। यैः क्रियासमभिहारतः पुरन्दरपुरामर्दनादि किं किं न कृतम्। श्रीसहोदररत्नाहरणे श्रीसहोदराणामत एवानिर्वाच्योत्कर्षाणामित्यर्थः। तेषां रत्नानामासमन्ताद्धरणे एकरसं तत्परं यद्धृदयं तत् कुसुमबाणेन सुकुमारतरोपकरणसंभारेण प्रियाणां बिम्बाधरे निवेशितम्। तदवलोकनपरिचुम्बनमात्रकृतकृत्यताभिमानयोगि कृतं तेषां हृदयमिति, यदत्यन्तं विजिगीषाज्वलनजाज्वल्यमानमभूत्। अत्र हृदयस्यैकस्य यथोक्तरत्नाहरणबिम्बाधरयोरसंहतयोर्वृत्तिः निवेशितं कुसुमबाणेनेत्युक्तत्वात् करणरूपा। अर्थतो हृदयस्य रत्नाहरणचिन्तामपास्य बिम्बाधरैकशरणतया तयोरसंहतत्वम्।

अथैतद्विपर्ययादपरं पर्यायमाह— अन्य इति। यत्सूत्रम् 'एकमनेकस्मिन् अनेकमेकस्मिन्वा क्रमेण पर्यायः' (अलङ्कारसू० ६०) इति। अत्रापि क्रम-

---

१. 'राभरणे' ग. ङ. पाठः. २. 'न' क. ख. ग. घ. पाठः.

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा यत् सोऽन्यः क्रमेणोदाहरणं—

मधुरिमरुचिरं वचः खलाना-
ममृतमहो प्रथमं पृथु व्यनक्ति।
अथ कथयति मोहहेतुरन्त-
र्गतमिव हालहलं विषं तदेव॥

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति[1] करिणामेता घनाभा घटाः।
स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं[2] भूमिं समारोपितः॥

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न[3] परिवृत्तिः।

---

सम्प्रदायप्रकाशिनी

अन्यथात्वं दर्शयति— अनेकमेकस्मिन्नित्यादि।

मधुरिमेति। अत्र खलवचनस्यामृतहालाहलयोर्भावः।

तद्गेहमिति। अत्रैकत्र द्विजे विषये गेहमन्दिराद्यनेककरणम्।

ननु प्रथमपर्यायस्य प्रथमोदाहरणे परिवृत्त्यलङ्कार इत्यत आह— अत्रैकस्यैवेत्यादि। हानोपादानयोरेककर्तृकत्वाविवक्षणान्न परिवृत्तिः। केचिदेतच्छ्लोकस्थाने[4]

साहित्यचूडामणिः

ग्रहणानुवृत्त्या समुच्चयस्य व्यवच्छेदः। गुणक्रियायौगपद्यस्य तल्लक्षणस्योक्तेः। भवति क्रियते वेति प्राग्वत् संहतासंहतत्वयोरत्र न वैचित्र्यमित्युपेक्षा।

मधुरिमेति। अत्रैकस्मिन् खलवचने सुधाभिव्यक्तिकालकूटकथनयो-रनेकयोः क्रमेण वृत्तिः। अतएव हि तदेवेत्युक्तम्। व्यनक्ति कथयतीत्युक्तत्वात् स्वसिद्धिरूपो भावः।

तद्गेहमिति। अत्रैकमेव ब्राह्मणमधिकृत्य कृच्छ्रगृहमहामन्दिरयोः

---

१. 'चरन्ति', २. 'तिं' ङ. पाठः. ३. 'योर्विव', ४. 'त्वान्न' क. ग. पाठः. ५. 'कसंस्था' ग. पाठः.

**अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः ॥ ३१ ॥**

पक्षधर्मा[1]न्वयव्यतिरेकेण त्रिरूपो हेतुः साधनम् । धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यम् । यथा —

सम्प्रदायप्रकाशिनी

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

इति पठन्ति । तदन्याय्यम् । परिवृत्तिसन्देहस्याप्राप्त्या परिहारग्र[2]न्थस्य निर्विषयत्वप्रसङ्गात् । नह्युदाहरणान्तरे परिवृत्तिसन्देहप्राप्तिः, हानोपादानानुपादानात् ॥

अनुमानमिति । साध्यसाधनयोर्निर्दे[3]शोऽनुमानम् । सामर्थ्यात् तु विच्छित्त्यात्मनोः ।

व्याचष्टे पक्षधर्मेत्यादि । पक्षधर्मेत्यत्र त्वोऽभिसम्बध्यते । अन्वयव्यतिरेकेत्य[4]त्र तु मतुबपि । साध्यधर्मविशिष्टे धर्मिणि व्या[5]प्यधर्म-

साहित्यचूडामणिः

जरद्धेनुमत्तकरिणोर्मुसलध्वनिसंगीतयोश्च क्रमेण वृत्तिः । समारोपित इत्युक्त्या करणे पर्यवस्यति ।

परिवृत्तिभ्रमं निरस्यति — अत्रेति ।

“श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां त्यक्तास्तरलगतयस्त्वाश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतां वक्त्रमप्यद्वितीयं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥”

एकस्यैव कर्तुरिति यावत् । अन्यावगमा अन्यो धर्म एकस्यैव कर्तुस्तत्कारत्वाविशेषात्(?) न परिवृत्तिरलङ्कारः ।

अनुमानमिति ।

यत्र शब्दवृत्तेन पक्षधर्मान्वयव्यतिरेकवत् साधनं साध्यसिद्धये निर्दिश्यते

---

१. ‘र्मतान्वयव्यतिरेकवत्त्वेन त्रि’ इति मूलकोशपाठः. २. ‘प्रबन्धस्य’ क. पाठः ३. ‘शे’ क. घ. पाठः. ४. ‘त्र म’ ख. ग. पाठः. ५. ‘प्यत्र’ ख. पाठः.

यत्रैता लहरीचलाञ्चलदृशो व्यापारयन्ति भ्रुवं
यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥

सम्प्रदायप्रकाशिनी

वृत्तित्वं पक्षधर्मत्वम् । सपक्षे सत्त्वमन्वयवत्त्वम् । विपक्षाद् व्यावृत्तिर्व्यतिरेकवत्त्वम् । एवं त्रैरूप्योपपन्नो हेतुः साधनम् । व्यापकस्य गम्यस्य धर्मिणि अयोगव्यवच्छेदोऽतद्धर्मत्वापोहः साध्यम् । ननु सूत्रे साध्यपूर्वको निर्देशः, वृत्तौ साधनपूर्वक इति किं व्युत्क्रमेण । उच्यते । रुद्रटेन,

"वस्तु परोक्षं यस्मिन् साध्यमुपन्यस्य साधकं तस्य ।
पुनरन्यदुपन्यस्येद् विपरीतं वै तदनुमानम् ॥"

इति साध्यसाधनयोः पौर्वापर्यनिबन्धनो भेदोऽनुशिष्टः । न तत्र वैचित्र्यविशेषोऽस्तीत्यनादराय । अल्पाच्तरमिति न्यायानुसारेण सौत्रो निर्देशः । वृत्तौ तु साधनायत्ता साध्यसिद्धिरित्यर्थस्थित्यनुसारेण साधनपूर्वा[1] व्याख्या । वैचित्र्याभावं च प्रान्ते वक्ष्यति — साध्यसाधनयोः पौर्वापर्ये तथेत्यादिना । अतः सर्वमनाकुलम् ॥

यत्रैता इति । लहरीवच्चलाञ्चला[3] दृशो यासां ताः । अत्र नार्यः

साहित्यचूडामणिः

तदनुमानमित्याह — पक्षधर्मेति । पक्षधर्मत्वं पक्षे वृत्तिमत्त्वम् अन्वयः सपक्षे सत्त्वं व्यतिरेको विपक्षाद् व्यावृत्तिः । अबाधितविषयत्वादेः पक्षधर्मत्वाद्यन्तर्भावात् (रे तेलो रूप्यः हेतुस्त्रिरूपः) । यत्सूत्रं 'साध्यसाधननिर्देशोऽनुमानम्' (अलङ्कारसू० ५८) इति । अन्ययोगव्यवच्छे(द ? दे) सपक्षादपि व्यावृत्त्यापत्तेः ।

यत्रेति । अत्र योषितां भ्रूव्यापारे शराणां पतनं मन्मथपुरोगामित्वस्य साध्यस्य साधनमिति शुद्धमनुमानम् । केचित्तु तर्कानुमानवैलक्षण्यार्थं विच्छित्ति-

१. 'न्वि' ङ. पाठः. २. 'र्वं वाक्यम् । वै' ख. पाठः. ३. 'ला दृ' क. ग. घ. पाठः,

साध्यसाधनयोः पौर्वापर्ये[1] तथा न वैचित्र्यं किञ्चिदिति न तथा दर्शितम् ॥ ३१ ॥

सम्प्रदायप्रकाशिनी

पक्षः । शासनधरत्वेनाग्रतः सक्रोधाञ्चितशरप्रेङ्खत्करस्मरधावनं साध्यम् । भ्रूव्यापारानुसारेण[2] मार्गणपतनं साधनम् । यत्र ह्येवं शरपातस्तत्रैवं विशिष्टधानुष्कधावनं व्याप्तं, धावनाभावे पाताभावश्च[3] ॥ ३१ ॥

साहित्यचूडामणिः

विशेषाश्रयणेनोदाहरन्ति —

"यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्जालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुषण्डे स्मरदवः ॥"

इति । अत्र रूपकरूपं विच्छित्त्यन्तरमाश्रय(ते ? न्ते) । एवञ्च यस्मिन्नप्रतीतस्य प्रत्यायनं तत्र प्रत्या(यान्त्य ? य्य)प्रत्यायकभावे च पदार्थस्य हेतुत्वेनोपादानमुपात्तस्य च हेतुत्वम् इति द्वयी प्रक्रिया । पूर्वत्र नालङ्कारता । यथा —

"प्रजानां विनयाधानाद् रक्षणाद् भरणादपि ।"

इति ।

"असकलहसितत्वाद् क्षालितानीव कान्त्या
मुकुलितनयनत्वाद् व्यक्तकर्णोत्पलानि ।"

इति । उत्तरत्र काव्यलिङ्गं यत्र तु वाक्यार्थो हेतुः तत्र हेतुत्वप्रतिपादकमन्त(रे)णोपन्यासे काव्यलिङ्गमेव ताटस्थ्येनोपन्यस्तस्य हेतुत्वेऽर्थान्तरन्यासः । यथोदाहारि । ततश्च कार्यकारणयोर्वाक्यार्थत्वे काव्यलिङ्गमेव नार्थान्तरन्यासः ताटस्थ्याभावात् अतः सामान्यविशेषभाव एवार्थान्तरन्यासस्य विषयः न कार्यकारणभावः । (ये ? यत्) पुनः 'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' (अलङ्कारसू० ३५) इति सूत्रं, काव्यलिङ्गलक्षणान्यथाकारयुक्त्या यत्सत्यमौद्भ(ट्य ? टीय)मवलम्ब्येति ।

ननु रुद्रटोक्तयुक्त्या साध्यसाधनयोः पौर्वापर्यविकल्पः किमि(ति)

---

१. 'र्यविकल्पने वैचित्र्यं न किञ्चिदिति न तथाद' इति मूलकोशपाठः. २. 'पातेन मा' क. ग. घ. पाठः. ३. 'तस्याभा' ख. पाठः.

**विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः ।**

अर्थाद्विशेष्यस्य । उदाहरणं —

महौजसो मानधना धनार्चिता

धनुर्भृतः संयति लब्धकीर्तयः ।

न संहतास्तस्य न भिन्नवृत्तयः

प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥

---

सम्प्रदायप्रकाशिनी

**विशेषणैरिति** । साभिप्रायैर्विशेषणैर्विशेष्यस्योक्तिः अभिप्रायस्य वाच्याङ्गत्वात् परिकरः ।

**महौजस इति** । महौजसो महाविक्रमाः । अनेन दुराक्रमता । मानधनाः[1] नेतु न[2]श्वरमणिकनकादिधनाः । अनेनावमानासहिष्णुता । धनैरभिमतैरर्चिताः पूजापुरस्कारेण प्रसादिताः । अनेन प्रत्युपकारपरमोत्सुकता । धनुर्भृतः योद्धुमुपक्रान्तसन्नाहाः । अनेनादीर्घसूत्रता । संयतीति जात्यां[3]ख्या । पूर्वं युद्धेषु जयेन समासादितयशसः । अनेन कार्येषु सिद्धिरूपता । न संहताः स्वाधिकारेषु विभिन्नवृत्तयः । अनेन नैकामिषं[4]वृत्तिविरहः (?) । न भिन्नवृत्तयः षाड्गुण्ये संहताः । अनेन स्वामिकार्येष्वैकार्थ्यनित्यता । असुभिरपि प्रियाण्याचरितुमिच्छन्तीति परिसमाप्तत्वेनात्यन्तहितैषिता । यद्यपि निरभिप्रायतायामपुष्टार्थतेति साभिप्रायत्वमदुष्टतैव नत्वलङ्कारः, तथाप्येकस्य बहुभिर्विशेषणैः साभिप्रायैरेवं परिपोषो विच्छित्तिरूप इति परिकरालङ्कारः ।

साहित्यचूडामणिः

(स ? न)प्रदर्शित इत्यत्राह — **साध्येति** । तथेति पौर्वापर्यव्यतिरेकेण ॥ ३१ ॥

परिकरमाह — **विशेषणैरिति** । साकूतैः साभिप्रायैः ।

कस्यैवमुक्तिरित्यपेक्षायामाह — **अर्थादिति** ।

**महौजस इति** । अत्र प्रत्येकं विशेषणानि वर्णनीयार्थोपक्षीणानि ।

---

१. 'नाः । अ' क. घ. पाठः. २. 'न मणि' ग. पाठः. ३. 'त्या । पू' ख. पाठः. ४. 'षत्ववि' ख ग. पाठः. ५. 'ण्येन सं' क. घ. पाठः. ६. 'मप्यपु' ख. ग. पाठः.

यद्यप्यपुष्टार्थस्य दोषताभिधानात् तन्निराकरणेन पुष्टार्थस्य स्वीकारः कृतः, तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्येऽयं गणितः ॥

**व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ३२ ॥**

निगूढमपि[1] वस्तुनो रूपं कथमपि प्रतिभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः । नचैषा अपह्नुतिः प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहा[2]सम्भवात् । उदाहरणं—

सम्प्रदायप्रकाशिनी

तदेतदाह — **यद्यपीत्यादिना** ।

**व्याजोक्तिरिति** । उद्भेदः प्र[3]रूढतामाक्षिपति । निगूहनाय व्याजवचनाद् व्याजोक्तिः ।

व्याचष्टे — **निगूढमपीत्यादिना**[4] । अपह्नुतिवैलक्ष्यण्यायाह — **नचैषेत्यादि** । प्रकृतं निषिध्याप्रकृतसमर्थने[5] हेतोर्द्विष्ठस्य सा[6]म्यस्यासम्भवान्नासावपह्नुतिः ।

साहित्यचूडामणिः

सप्तमोल्लासग्रन्थविरोधमाशङ्क्य परिहरति— **यद्यपीति** । अपुष्टार्थत्वनिराकरणादर्थपोषयोगः न पुनर्विशेषणबाहुल्यनिबन्धनं वैचित्र्यमिति भावः । यत्सूत्रं 'विशेषणसाभिप्रायत्वं परिकरः' (अलङ्कारसू० ३२) इति । यच्च व्याख्यानं विशेषणानां साभिप्राय(त्वमिति परिकर ? त्वं प्रतीयमानार्थगर्भीकार) इत्यर्थाश्रयणात् प्रतीयमानेन चांशेन वाच्यस्यैव परिष्क्रियमाणत्वाद् न ध्वनिविषयत्वशङ्का ।

**व्याजोक्तिरिति** ।

यदुद्भिन्नस्य वस्तुनः छद्मना केनचिन्निगूहनमपलापः सा वस्त्वन्तरप्रक्षेपरूपस्य व्याजस्य वचनाद् व्याजोक्तिरित्याह — **निगूढमिति** । यत्सूत्र'मुद्भिन्नवस्तुनिगूहनं व्याजोक्तिः' (अलङ्कारसू० ७६) इति । गूढं वस्तु कुतश्चिन्निमि-

१. 'गूढ', २. 'स्यास' ङ. पाठः. ३. 'प्रागूढ' ख. पाठः. ४. 'दि । अ' ख. ग. पाठः. ५. 'नहे', ६. 'साधर्म्यस्या' ग. पाठः.

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः ॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ॥ ३२ ॥

सम्प्रदायप्रकाशिनी

शैलेन्द्रेति । हस्तोपगूढश्चोल्लसद्भ्यां रोमाञ्चवेपथुभ्यां सात्त्विकभावाभ्यां विसंस्थुलानामखिलविवाहक्रियासमासङ्गानां भङ्गेनाकुलः किंकर्तव्यतानभिज्ञश्च, रोमाञ्चादिनिगूहनाय तुहिनाचलस्य करयोः शैत्यं हा आश्चर्यमित्युक्तवान्, निगूहननैपुणाभिज्ञतया शैलावरोधजनेन ब्राह्मयादिमातृमण्डलेन स्वानुचरैर्गणैश्च सस्मितं दृष्टः शिवो युष्मान् अवतात् ।

योजयति — अत्र पुलकेत्यादि । हिमहेतुकतया प्रकाशने आदिशब्दसंग्राह्यो वेपथुरेवेत्यभिप्रायेणाह — पुलकवेपथू इति । अनयोः सात्त्विकतया प्रसृतिरुद्भेदः । शैत्यहेतुकतया प्रकाशनं स्वरूपापलपनम् ॥ ३२ ॥

साहित्यचूडामणिः

त्तात् प्राप्तप्राकट्यं सद् वस्त्वन्तराद्पलप्यते चेदयमलङ्कार इति यावत् । अपह्नुतिशङ्कामस्यापास्यति — नचेति । इहासम्भवात् । तत्र सम्भवस्य निर्व्यूढत्वादिति भावः ।

शैलेन्द्रेति । अतिविसंस्थुलता वेपथुमत्त्वम् । व्यासङ्गो निरोधस्तस्माद् भङ्गो भयम् ।

अत्र परमेश्वरस्य गौरीपाणिग्रहणे वेपथुपुलकोत्पत्तिरासीत् । सा च मेनया मातृमण्डलेन गणैश्च प्रत्यभेदि । (यस्या ? या) देवीहस्तार्पणे हिमवत्पाणिसंस्पर्शशैत्यप्रयुक्तत्वोद्भावनेन वस्त्वन्तरप्रक्षेपणेन निगूह्यत इत्याह — पुलकवेपथू इति ॥ ३२ ॥

१. 'लासक्ति' क. ग. घ. पाठः. २. 'ज्ञः रो' क. पाठः. ३. 'तुत' क. ग. घ. पाठः. ४. 'ग्रा आ' ग. पाठः. ५. 'ति । तयोः' ख. पाठः. ६. 'तुल' ग. पाठः.

**किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते ।**
**तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता ॥ ३३ ॥**

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति सा भवेत् परिसङ्ख्या । अत्र[2] च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टं, तथोभयत्र व्यपोह्यमानस्य प्रतीयमानत्वं[3] वाच्यत्वं चेति चत्वारोऽस्या भेदाः[4] । क्रमेणोदाहरणं —

---

सम्प्रदायप्रकाशिनी

**किञ्चित् पृष्टमिति** । कथनं मानान्तरज्ञातस्य शब्देन प्रतिपादनम् । अतोऽवगतप्रयोगव्यवच्छेदात्मकप्रयोजनान्तराभावात् कथनेन सदृशान्तरापोहे यत् पर्यवस्यति, सा अन्यवर्जनादन्यसङ्ख्यानमिति परिसङ्ख्या । पृष्टमपृष्टमिति भेदद्वयम् । चेति च भेदान्तरद्वयम् ।

व्याचष्टे— प्रमाणान्तरेत्यादि । परिदृष्टं, व्यवहार इति शेषः ।

साहित्यचूडामणिः

परिसङ्ख्यामाह — किञ्चिदिति ।

शब्दानां स्वार्थाभिधानमात्रव्यापृतानां कथमन्यव्यपोहे तात्पर्यमित्याह— प्रमाणान्तरेति । प्रयोजनान्तराभावात् सदृशेति । असदृशवस्तुव्यवच्छित्तावनौचित्यात् । परि वर्जने । कस्यचित् परिवर्जनेन कुत्रचित् संख्यानं परिसङ्ख्या । यत् सूत्रम् 'एकस्यानेकत्र प्राप्तावेकत्र नियमनं परिसंख्या' (अलङ्कारसू० ६२) इति । यदेकं वस्तु युगपदुभयत्र सम्भाव्यते तत्र तस्यैकत्र द्वितीयपरिहारेण नियमनं परिसंख्येति यावत् । यदाहुः —

"तत्र चान्यत्र च प्राप्ते परिसंख्येति कथ्यते ।"

इति । अस्याश्च प्रश्नपूर्वकत्वमन्यथा चेति द्वैधम् । प्रत्येकं च वर्णनीयस्य शाब्दतार्थत्वभेदात् चातुर्विध्यमित्याह — अत्र चेति ।

---

१. 'घा' ग. पाठः. २. 'त्र क', ३. 'ता', ४. 'दाः । किमा' क. ख. पाठः. ५. 'थो' क. ग. घ. पाठः. ६. 'मन्यथो' ख. पाठः.

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं[1] पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या[2] चेतो निरवधिविमुक्त्यै प्रभवति ॥

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥

सम्प्रदायप्रकाशिनी

**किमासेव्यमिति** । द्युसरितः सविधमासेव्यं, न राजकुलम् । कौस्तुभभृतश्चरणयुगलमेकान्ते ध्येयं, न विषयः[3] । पुण्यमाराध्यं, न प्रभुचित्तम्[4] । करुणा अभिलषणीया, न सम्पत् । सर्वत्रैवात्र हेतुः— **यदासक्त्येति** । राजकुलाद्यासक्त्या बन्धायेति यावत् । इयं समप्रश्ना प्रतीयमानापोह्या ।

**किं भूषणमिति** । चरितमाचरितम् । इयं सप्रश्ना शाब्दापोह्या ।

**कौटिल्यमिति** । कचनिचये कौटिल्यं, न हृदये । करादिषु

साहित्यचूडामणिः

किमिति । अत्र प्रश्नपूर्वकथनम् । अपोह्यमानस्य सरिदन्तरादेः प्रतीयमानत्वं स्पष्टम् ।

किं भूषणमिति । अत्र प्रश्नपूर्वकत्वे भूषणभूतस्य रत्नादेरपोह्यमानस्य वाच्यत्वं, *न विभव इत्युक्तत्वात् ॥ ३३ ॥

१. 'पार्ध्यं पु' ख. ग. पाठः. २. 'क्त्या' ख. पाठः. ३. 'याः' ग. पाठः. ४. 'त्ये' क. ग. घ. पाठः. ५. 'भ्या' ग. पाठः.

* अत्र कियांश्चिदंशो लुप्तः स्यात् । न विभव इत्यस्य हि अनन्तरपद्यांशत्वम् ।

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ ३३ ॥

**यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ।**
**तदा कारणमाला स्यात्**

उत्तरमुत्तरं प्रति यथोत्तरम् । उदाहरणं —

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥

---

सम्प्रदायप्रकाशिनी

**रागः**, न लोभनीये[2] वस्त्वन्तरे । कुचयुगले काठिन्यं, न[3] शीले । नयनयोस्तरलत्वं, न स्वभावे । इयमप्रश्ना प्रतीयमानापोह्या ।

**भक्तिरिति** । युवतिरूपे कामास्त्रे । इयमप्रश्ना शाब्दापोह्या ॥ ३३ ॥

**यथोत्तरमिति** ।

**यथेति** क्रमनिर्देशो वीप्सामाक्षिपतीत्याह — **उत्तरमुत्तरमिति** । अतः शृङ्खलाक्रमः ।

**जितेन्द्रियत्वमिति** । जितेन्द्रियत्वादीनां पूर्वपूर्वेषां विनयादिकमुत्तरमुत्तरं प्रति हेतुता ।

साहित्यचूडामणिः

कारणमालामाह — **यथोत्तरमिति** । उत्तरोत्तरस्य हेतुमतः पूर्वपूर्वोऽर्थो हेतुश्चेत् तदा कारणमाला । यत् सूत्रं 'पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला' (अलङ्कारसू० ५२) इति । शृङ्खलाधिकारादत्र वीप्सासिद्धिः ।

**जितेति** । इन्द्रियजयाद् विनयो विनयाद् गुणोत्कर्षः गुणोत्कर्षाज्जनानुरागः जनानुरागात् सम्पद इति हेतुमाला ।

---

१. 'णाधिके पुंसि ज', २. 'यवस्तुषु । कु' ख. पाठः. ३. 'नच शी' ग पाठः.

'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति हेत्व[1]ङ्कारोऽत्र न लक्षितः। आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति, वैचित्र्याभावात्।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।
रम्योऽयमेति सम्प्रति लोकोत्क[2]ण्ठाभरः कालः॥

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न[3]तु हेत्वलङ्कारकल्पनयेति पूर्वो[4]क्तोऽलङ्कारः काव्यलिङ्गमेव हेतुः।

सम्प्रदायप्रकाशिनी

यत्तु रुद्रटेन,
"हेतुमता सह हेतोरभिधानमभेदकृद् भवेद् यत्र।
सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूतः॥"

इति हेतुमता सहाभेदतो हेत्वभिधानं[5] काव्यलिङ्गादिभ्योऽन्यो हेत्वलङ्कार इत्युक्तं, न तदुपपन्नमित्याह — हेतुमता सहेत्यादि। अलक्षणे हेतुमाह — आयुर्घृतमिति। हेत्वलङ्कारसम्मतो ह्ययमा[6]युर्घृतमित्यादिवच्छुद्धसारोपलक्षणात्मको वैचित्र्याभावान्न कदाचिदलङ्कारतामर्हति।

एतदुदाहरणे[7]ऽपि वैचित्र्याभावं दर्शयति — अविरलेति। अत्र कमलविकासालिमदयोः कोकिलानन्दोत्कण्ठयोश्च हेतुहेतुमतोः कालविशेषणतया भेदनिर्देशो न किञ्चिद् वैचित्र्यमावहति। काव्यत्वं तु कोमलानुप्रासमहिम्नैवोद्भटादयः समाम्नासिषुः। अतः काव्यलिङ्गादन्यो न हेत्वलङ्कारः॥

साहित्यचूडामणिः

ननु रुद्रटादिनीत्या शुद्धो हेतुरलङ्कारतया किं नोक्तः, अत आह — हेतुमतेति। कार्येण कारणस्याभेदाभिधानं हेतुः योऽयमायुर्घृतमित्यादिवदुपचा-

१. 'रो न' ख. पाठः. २. 'ह' क., 'क' ख. पाठः ३ 'न हे' ख. पाठः. ४. 'क्तं का' ग. पाठः. ५. 'नं काव्यलिङ्गाभिधानं का' क. घ. पाठः. ६. 'प्य' क. पाठः. ७. 'णे वै' क. घ. पाठः. ८. 'ला' ख. पाठः.

**क्रियया तु परस्परम् ॥ ३४ ॥**

**वस्तुनोर्जननेऽन्योन्यम्**

अर्थयोरेकक्रियामुखेन परस्परं[1] कारणत्वे सति अन्योन्यनामालङ्कारः । उदा—

हंसाण सरेहि सिरी सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं च्चिअ एए अप्पाणं णवर गरुऐन्ति ॥

सम्प्रदायप्रकाशिनी

**क्रियया त्विति।** एकक्रियाद्वारा मिथः कारणत्वे अन्योन्यम् ।
**हंसाणेति** ।

हंसानां सरोभिः श्रीः सारीक्रियतेऽथ सरसां हंसैः ।
अन्योन्यमेवैतानि आत्मानं केवलं गुरूकुर्वन्ति ॥

**मिथः श्रीसारतासम्पादनं क्रिया** ।

साहित्यचूडामणिः

रव्यतिरेकेण न वैचित्र्याय कल्पते अतो नालङ्कारः, वैचित्र्यलक्षणभङ्गिभणित्यभावात् । नन्वविरलेत्यादौ हे(तो ? तु)रलङ्कार एव न स्यादिति चेदाह—**पूर्वोक्तेति** । **काव्यलिङ्गमेवेति** । न पुनः कोकिलानन्दो लोकोत्कण्ठाभरः काल इत्युपचारमात्रानुप्राणनो हेतुः ॥

अन्योन्यमाह — **क्रिययेति** ।

एकवचनं विवक्षितमित्याह—**एकक्रियामुखेनेति** । **परस्परं कारणत्वे सतीति** । तादृक्चमत्कारातिशयविवक्षायाम् अन्योन्यालङ्कारः । यत् सूत्रं 'परस्परं क्रियाजननेऽन्योन्यम्' (अलङ्कारसू० ४९) इति । क्रियाद्वारकं मिथो जननमन्योन्यमिति यावत् ।

**हंसाणेति** ।

हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।
अन्योन्यमेवैते आत्मानं केवलं गुरूकुर्वन्ति ॥

**इति** ।

१. 'र' क. ख. पाठः. २. 'अएन्ति' क. ख. पाठः. ३. 'ह' क. पाठः. ४. 'रु' ग. पाठः.

अत्रोभयेषामपि परस्परं[1]जनकता मिथः श्रीसारतासम्पादनद्वारेण।

उत्तरश्रुतिमात्रतः।

**प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ ३५ ॥**

**असकृद् यदसम्भाव्यमुत्तरं स्यात् तदुत्तरम्।**

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र परिकल्प्यते, तदेकं तावदुत्तरम्। उदा —

वाणिअअ! हत्थिदन्ता के[2]त्तो अह्माण वग्घकित्ती अ।
जाव लुळिआळअमुही घरम्मि परिस प्पए सो[3]ह्णा ॥

सम्प्रदायप्रकाशिनी

योजयति — अत्रोभयेषामिति ॥

उत्तरेति। उत्तरश्रवणमात्रादप्रयुक्तस्य प्रश्नस्योन्नयनमेकमुत्तरम्। प्रश्ने सत्यसकृदसम्भाव्यमुत्तरं द्वितीयम्।

यथावद् व्याख्यायोदाहरति — प्रतिवचनेत्यादिना। प्रश्नस्य पूर्ववाक्यमित्युक्तिरुभयस्यापि वाक्यैकविषयतां द्योतयितुम्।

वाणिअएति।

साहित्यचूडामणिः

नन्वत्र हंससरसां मिथो जन्यजनकभाव इति चेदाह — श्रीति। हंसाः श्रीमन्तः सरोभिः क्रियन्ते, सरांसि चात्र हंसैरिति तात्पर्यम्। यदाह महाकविः — 'कण्ठस्य तस्याः स्तनबन्धुरस्ये'त्यादि ॥

उत्तरमाह — उत्तरेति। उत्तरश्रुतिमात्रेण प्रतिवचनोपलम्भनेनैव प्रश्नोन्नयनं पूर्ववाक्यपरिकल्पनमेकमुत्तरम्।

वाणिअएति।

१. 'रं' ख. ग. पाठः. २. 'क' क ख. पाठः. ३. 'सुणहा ॥' ख. पाठः.

* 'क्क' इति मूलकोशपाठः.

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, मूल्येन ताः प्रयच्छेति क्रेतुर्वचनममुना वाक्येन समुन्नीयते। नचैतत् काव्यलिङ्गम्। उत्तरस्य ताद्रूप्यानुपपत्तेः। नहि प्रश्नस्य प्रतिवचनं जनको हेतुः। नापीदमनुमानम्। एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलङ्कारान्तरमेवोत्तरं[1] साधीयः।

सम्प्रदायप्रकाशिनी

वाणिजक! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावद् (वि?)लुलितालकमुखी गृहे परिसर्पति स्नुषा॥

अत्र निर्विण्णायाः श्वश्र्वाः दन्तकृत्त्यभावोत्तरेण तदर्थिनो वाणिजकस्य प्रश्न उन्नीयते।

तदेतदाह —हस्तिदन्तेत्यादि। काव्यलिङ्गाद् वैधर्म्यमाह —नचैतदिति। ताद्रूप्यं (काव्य)लिङ्गरूपत्वम्। तदनुपपत्तिं दर्शयति —नहीति। जनकत्वे हि काव्यलिङ्गता। अनुमानतोऽपि वैधर्म्यमाह — नापीदमिति। नह्यत्रैकधर्मिनिष्ठतया साध्यसाधनाभिमतयोः प्रश्नप्रतिवचनयोर्निर्देशः, भिन्नकर्तृकत्वात्। अत उत्तरमलङ्कारान्तरतयैव बाढतरम्।

साहित्यचूडामणिः

वाणिजक! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तिश्च।
यावद् (वि?)लुलितालकमुखी गृहे परिष्वक्कते स्नुषा॥

इति। परिष्वक्कते सविभ्रमं चङ्क्रम्यते।

अत्र हस्तिद(न्त्या रे? न्तादयः कु)तः (संपद्[2]न्य? सन्तीत्य)भिधानेन तदर्थिनस्तद्भावप्रश्नः परिकल्पित इत्याह — हस्तीति। नन्वेतत् काव्यलिङ्गमस्त्विति चेदाह — नचेति। (उत्तरस्य) उत्तरतः प्रश्नोन्नयनस्य। ताद्रूप्यं काव्यलिङ्गलक्षणं, तदनुपपत्तेः। ताद्रूप्यमेव स्मारयति— नहीति। जनको हि हेतुः काव्यलिङ्गं, नैवमुत्तरम्। अथानुमानमस्त्वित्याशङ्क्याह— नापीति। तल्लक्षणाभावादित्याह —एकेति। साधीय इति। अलमन्यस्मिन्नन्तर्भावव्यसनेन।

१. 'रमित्येतत् सा' ख. ग. पाठः. २. 'दुप' क. ख. पाठः.

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यदसम्भाव्यरूपं प्रतिवचनं स्यात् तदपरमुत्तरम् । अनयोश्च सकृदुपादानाद् न चारुताप्रतीतिरित्यसकृदित्युक्तम् । उदा —

का विसमा देव्वगई[1] किं लद्धव्वं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं *दुग्गाहिअं खलो लोओ ॥

प्रश्नपरिसङ्ख्यायामन्यव्यपोह एव तात्पर्यम्, इह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः ॥ ३५½ ॥

सम्प्रदायप्रकाशिनी

द्वितीयमाह — प्रश्नादनन्तरमित्यादि । तथाविधयोरपि । प्रश्नोत्तरयोः सकृद्चारुत्वादसकृत्त्वम् ।

का विसमेति ।

का विषमा दैवगतिः किं लब्धव्यं[2] जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥

प्रश्नपरिसङ्ख्यातो वैधर्म्यायाह— प्रश्नपरिसङ्ख्यायामित्यादि । वर्जनवाक्यस्य विधेयत्वाद् व्यपोह एव तात्पर्यम्, इह तूत्तरस्य विधेयत्वाद् वक्तव्य एव ॥ ३५½ ॥

साहित्यचूडामणिः

अथ मतभेदाद् द्वितीयमुत्तरमाह — तत्रेति । तत्र प्रश्ने सति प्रष्टुरभिप्रायानुगुण्येन लोकातिशायितया यदसम्भाव्यं प्रतिवचनं तद् द्वितीयमुत्तरम् । अनयोश्च प्रश्नप्रतिवचनयोः यद्यपि सकृदुपादानाद् वाक्यार्थसिद्धिः, तथापि न चमत्कारोत्पत्तिरित्यसकृत्त्वेन बन्ध इत्याह — अनयोश्चेति ।

का विसमेति ।

का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः ॥

इति ।

अस्य प्रश्नपरिसंख्यया वैलक्षण्यमित्याह — अन्यव्यपोह इति । 'तादृगन्यव्यपोहाये'त्युक्तत्वात् । इह तु वाच्य एव, नतु व्यङ्ग्ये विश्रान्तिः । यत्

१. 'द' ग. पठः. २. 'लभ्यं सज्जनो' ख., 'सत्यं यज्जनो' ङ. पाठः.

* 'दुःक्खं जं ख' इति मूलकोशपाठः.

**कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥**
**धर्मेण केनचिद् यत्र तत् सूक्ष्मं परिचक्षते ।**

कुतोऽपि आकारादिङ्गिताद्वा । सूक्ष्मस्तीक्ष्णमतिसंवेद्यः[2][3] ।

उदा—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥

---

सम्प्रदायप्रकाशिनी

**कुतोऽपीति** । आकारादिना लक्षितः सूक्ष्मोऽर्थो निपुणक्रियात्मना केनचिद् धर्मेण यत्रान्यस्मै बोध्यते तत् सूक्ष्मम् ।

व्याचष्टे—कुतोऽपीत्यादि । अबुद्धिकारिताः स्तम्भस्वेदादयः सात्त्विकभावाः आकारः । बुद्धिकारिताश्चक्षुर्विकाराः इङ्गितम् । उक्तं हि मया भरतसंग्रहे—

"तारकापुटदृष्ट्यादेर्विकारानिङ्गितं विदुः ।
आकाराः सात्त्विका भावाः पूर्वे बुद्ध्या परेऽन्यथा ॥"

इति ।

**वक्त्रस्यन्दीति** । अत्र स्वेदेनाकारेण संलक्षितं पुरुषायितं पुरुषहस्तोचितखड्गलेखेन प्रकाशितम् ।

साहित्यचूडामणिः

सूत्रम् 'उत्तरात् प्रश्नोन्नयनमसकृदसंभाव्यमुत्तरं चोत्तरम्' (अलङ्कारसू० ७४) इति ॥ ३५$\frac{१}{२}$ ॥

सूक्ष्ममाह —**कुतोऽपीति** । लक्षणस्योपकरणमुच्यते — **धर्मेणेति** । प्रकाशनस्य ।

सूक्ष्मशब्दार्थमाह — **तीक्ष्णेति** । तीक्ष्णमतिभिः कुशाग्रीयबुद्धिभिः संलक्ष्यः स्थूलबुद्धिभिरसंलक्ष्यश्च । यत् सूत्रं 'संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम्' (अलङ्कारसू० ७५) इति ।

**वक्त्रेति** ।

---

१. 'क्ष्मं ती', २. मसश्चिन्त्यम् । ड' ख. पाठः. ३. 'वेद्यः । ड' ग. पाठः.

अत्राकृतिमालोक्य कयापि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं, पुंसामेव कृपाणस्य पाणियोग्यत्वात् । यथावा —

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ॥ ३६½ ॥

**उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः ॥ ३७ ॥**

परः पर्यन्तभागः अवधिर्यस्य । धाराधिरोहिकया[1] तत्रैवोत्कर्षस्य विश्रान्तेः । उदा —

सम्प्रदायप्रकाशिनी

**सङ्केतेति** । अत्र विटस्य नेत्रहासेनेङ्गितेन[2] विदितस्तज्जिज्ञासितः सङ्केतकालः पद्मनिमीलनेन सन्ध्येत्यावेदितः ॥ ३६½ ॥

**उत्तरोत्तरमिति** । उत्तरोत्तरं धारावाहिकया पर्यन्तनिवेशितप्रतीतिविश्रान्त्यास्पदं प्रकर्षः सारः ।

साहित्यचूडामणिः

अत्र वदनस्वेदप्रयुक्तकण्ठकुङ्कुमभेदलक्षणामाकृतिमवलोक्य सख्या परिज्ञातं पुरुषायितं पुरुषैकयोग्यखड्गलेखनलक्षणेन धर्मेण प्रकाशितमित्याह — आकृतिमिति ।

सङ्केतेति । हसद् विकसत् ।

धूर्तस्य सङ्केतवेलाजिज्ञासां तदीयेन भ्रूभङ्गादिनेङ्गितेनोपलक्ष्य प्रगल्भया सायंसमयोचितेन लीलाकमलनिमीलनेन सङ्केतसमयोऽभिव्यज्यत इत्याह — **जिज्ञासित इति** । इङ्गितमात्रेणेति उदाहरणवैलक्षण्यायोक्तिः । **लीलयेति** । वैदग्ध्यवत्तया ॥ ३६½ ॥

सारमाह — **उत्तरोत्तरमिति** ।

१. 'ततया' क. ख. पाठः. २. 'त्रविहासे' ख. ग. पाठः.

राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ ३७ ॥

**भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः ।**
**युगपद् धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥ ३८ ॥**

इह यद्देशं कारणं तद्देशमेव कार्यमुत्पाद्यमानं दृष्टं यथा धूमादि । यत्र तु हेतुफलभूतयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदे[1]वभासनं सा [2]तयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागादसङ्गतिः । उदा—

सम्प्रदायप्रकाशिनी

**राज्ये सारमिति** । अत्र राज्यवसुधादिषूत्तरोत्तरधारावाह्युत्कर्षोऽङ्गनायां विश्रान्तः ॥ ३७ ॥

**भिन्नदेशतयेति** । एकदेशनियतयोरपि हेतुफलभूतयोर्धर्मयोर्वैलक्षण्याद् नातिशयेनात्यन्ताय (?) नानादेशतया युगपत्प्रतीतिर्मिथः स्वाभाविकसङ्गतित्यागादसङ्गतिः ।

साहित्यचूडामणिः

**विश्रान्तेरिति** । आकाङ्क्षायाः पर्यवसानात् । यत् सूत्रम् 'उत्तरोत्तरमुत्कर्षः सारः' (अलङ्कारसू० ५६) इति । पूर्वपूर्वापेक्षयोत्तरोत्तरस्य प्रकर्षकल्पनं सार इति यावत् ।

**राज्य इति** । अत्र राज्यापेक्षया वसुन्धरायाः सारत्वं तदपेक्षया पुरस्येत्यादिपरिपाट्या वराङ्गनायामुत्कर्षो विश्राम्यतीति ॥ ३७ ॥

असङ्गतिमाह— **भिन्नेति** । **अत्यन्तमिति** । नखलु धूमतद्ध्वजयोर्भूधराधित्यकायामूर्ध्वाधोभागव्यतिरेकादनेकदेश्य(त्व)शङ्का ।

यद्देशो हेतुः तद्देश एव हेतुमानिति न्यायोल्लङ्घनादस्या उत्थानमित्याह— **यत्र त्विति** । **केनाप्यतिशयेन** वर्णनीयार्थोत्कर्षपर्यवसायिना । **युगपदवभासनं** क्रमेणावभासने वस्तुनोः संगम्यमानत्वात् । **निर्वक्ति**—

१. 'दे' क. पाठः. २. 'न' ख. पाठः.

जस्सेअ वणा तस्सेअ वेअणा भणइ तं जणो अळिअम् ।
दन्तक्खअं कवोळे वहुए विअणा सवत्तीणं ॥

एषा च विरोधबाधिनी, न विरोधः, भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् । विरोधे तु विरोधित्व-

सम्प्रदायप्रकाशिनी

जस्सेएति ।

यस्यैव व्रणास्तस्यैव वेदना *इति यद् भणति तदलीकम् । जन इति शेषः ।

दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥

ननु विरोधोऽयमित्यत आह— एषा चेति । बाधेऽन्यत्वे च हेतुः—भिन्नेत्यादि । यत इहापवादात्मनि भिन्नाधारतयैव प्रतिभासः, अत उत्सर्गात्मनि विरोधे तद्विषयपरिहारेणैकाधार्यं पर्यवसितम् ।

साहित्यचूडामणिः

सेति । यत् सूत्रं 'तयोर्भिन्नदेशत्वेऽसङ्गतिः' (अलङ्कारसू० ४४) इति । तद्वृत्तेन कार्यकारणयोः परामर्शः ।

जस्सेएति ।

"यस्यैव व्रणास्तस्यैव वेदना भणंति तज्जनोऽलीकम् ।
दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥"

इति । व्रणनिमित्तायाः सापत्न्यनिमित्तायाश्च वेदनाया अभेदाध्यवसायः ।

नन्वियं विरोधभेदेषु कश्चिदित्याशङ्क्याह — एषेति । नेयं विरोधः यावत् तस्य बाधिका, यदुत्सर्गविषयत्वं विरोधस्यापवादगोचरत्वं चास्याः । शङ्क्यमानो यत्र विरोधो हेतुफलयोर्भिन्नाधिकरणतयावतिष्ठते, शुद्धे तु विरोधे विरोधित्वमेकाश्रयनिष्ठं । सामानाधिकरण्यम् अनुक्तमपि तल्लक्षणवेलाया-मकण्ठोक्तमपि तथात्वे पर्यवस्यति । तस्मादपवादिकामिमां परिहृत्यौत्सर्गिको विरोधो विजृम्भते । ननु विरोधे सामानाधिकरण्यमनुक्तं प्रथमं प्रतिपत्स्यामहे,

१. 'णं' तस्यै' ख. पाठः.

* एतदनुगुणो मूलपाठ उन्नेयः.

मेकाश्रयनिष्ठमनुक्तमपि पर्यवसितम्, अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः । तथाचैव हि दर्शितम् ॥ ३८ ॥

**समाधिः सुकरं कार्यं कारणान्तरयोगतः ।**

साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्धं सम्यगाधीयते स समाधिर्नाम । उदा—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ ३८$\frac{1}{2}$ ॥

---

सम्प्रदायप्रकाशिनी

ऐकाधार्येणैवोदाहृतमित्याह — **तथाचैवेति** । कुरङ्गदृगाद्येकाश्रयत्वेनैव दर्शितम् 'अभिनवनलिनी'त्याद्युदाहरणेष्विति शेषः ॥ ३८ ॥

**समाधिरिति** । कारणान्तरं साधनान्तरम् । सुकरस्य सतः सम्यगाधानं समाधिः ।

कार्याक्षिप्तं कर्तारं शब्देनोपादाय व्याचष्टे — **साधनान्तरेत्यादि** ।

**मानमिति** । गर्जितोपकृतस्य निपततो मानः सुनिराकरः ॥ ३८$\frac{1}{2}$ ॥

साहित्यचूडामणिः

तत्राह — **तथाचेति** । उदाहरणेषु सामानाधिकरण्यमेव विरुद्धयोः, न क्वचिद् वैयधिकरण्यम् । वैयधिकरण्यमेवास्या लक्षणम् । एवं 'सा बाला वयमप्रगल्भवचस' इत्यूह्यम् ॥ ३८ ॥

**समाधिरिति** ।

हेत्वन्तरानुदये सौकर्याभावः, तदुदये तु कर्तुः कार्यं प्रति सौकर्यमित्याह — **साधनान्तरेति** । आधीयते समाप्यते । आदधातिः करणे, समुपसर्गश्च सौकर्य इत्याकूतेनाह — **अक्लेशेनेति** । यत् सूत्रं 'कारणान्तरयोगात् कार्यसुकरत्वं समाधिः' (अलङ्कारसू० ६७) इति ।

---

१. 'थैव च निद' ख पाठः. २. 'शा' क., 'श्य। ग. पा०:.

**समं योग्यतया योगो यदि सम्भावितः क्वचित् ॥३९॥**

**इदमनयोः श्लाध्यमिति योग्यतया सम्बन्धस्य नियत-विषयमध्यवसानं चेत् तदा समम्। उदा —**

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमे दत्तपादः स्मरस्य।
जातं दैवात् सदृशमनयोः सङ्गतं यत् तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥

सम्प्रदायप्रकाशिनी

**सममिति।** क्वचिद्, अभिरूपयोरनभिरूपयोर्वा।

व्याचष्टे — **इदमनयोरित्यादि।**

**धातुः शिल्पेत्यादि।** शिल्पातिशयस्याभिरूप्यनिर्माणनैपुण-काष्ठायाः निकषस्थानं परीक्षाभूमिः। देवो नायकोऽप्ययं स्मरस्यानु-पमे रूपे दत्तपादः तदतिशय्य वर्तत इत्यर्थः। शृङ्गारस्य रसस्य एका-तपत्रं राज्यमुपनतं निस्सपत्नमाधिपत्यं सिद्धम्। अत्राभिरूपयोः।

साहित्यचूडामणिः

(**मानमिति**)। अत्रापराद्धेन यूना माननिराकरणलक्षणे कार्ये पादपतन-मात्रादारब्धे दैवयोगाद् घनगर्जितप्रक्षेपः तत्सौकर्यायोपकल्पते यद् दिष्ट्येत्य-नेन स्पष्टीक्रियते ॥ ३८$\frac{1}{2}$ ॥

समालङ्कारमाह — **सममिति। यदि संभावित** इति। एवंविधे साम्यमलङ्कारः। यत् सूत्रं 'तद्विपर्ययः समम्' (अलङ्कारसू० ४६) इति। तच्छब्देन विषमभेदः परामृश्यते। योगः सम्बन्धः। तस्याभिरूपानभिरूपतया द्वैविध्यम्।

**अनयोः** सतोरसतोर्वा। **श्लाध्यमिति।** अश्लाध्यमिति वा। **नियत-विषयमिति।** यत्र तादृक्संभावनं तद्विषयं, न पुनरिच्छाधीनम्।

**धातुरिति।** एतदभिरूपयोरुदाहरणम्। एवं 'त्वमेवंसौन्दर्ये'त्यूह्यम्।

१. 'कं शृङ्गा' ग. पाठः.

यथावा —

चित्रं चित्रं बतबत महच्चित्रमेतद् विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फातिरास्वादनीया
यच्चैतस्याः कबलनकलाकोविदः काकलोकः ॥ ९३ ॥

**क्वचिद् यदतिवैषम्यान्न श्लेषो घटनामियात् ।**
**कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद् भवेत् ॥ ४० ॥**
**गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।**
**क्रमेण च विरुद्धे यत् स एष विषमो मतः ॥ ४१ ॥**

द्वयोरत्यन्तविलक्षणतया यद् अनुपपद्यमानतयैव योगः प्रतीयते, यच्च कर्ता किञ्चिदारभमाणः क्रियायाः प्रणाशात् न केवलमभीष्टं तत्फलं न लभते यावदप्रार्थितमप्यनर्थं विषममासादयेत्, तथा सत्यपि कार्यस्य कारणरूपानुकारे

सम्प्रदायप्रकाशिनी

**चित्रं चित्रमित्यनभिरूपयोः** ॥ ३९ ॥

**क्वचिदिति** । अतिविलक्षणयोरघटमानः सम्बन्ध एकः । न परं क्रियाफलानवाप्तिः, यावतानर्थोऽपीति द्वितीयः । कार्यस्य गुणेन कारणस्य गुणो विरुध्यत इति तृतीयः । क्रियया क्रियेति चतुर्थः ।

व्याचष्टे — **द्वयोरत्यन्तेत्यादि** ।

साहित्यचूडामणिः

अनभिरूपयोराह — **चित्रमिति** ॥ ३९ ॥

अथ विषमं बहुप्रकारमाह — **क्वचिदिति** । अतिवैषम्यस्य मात्रया प्रादुर्भावः । उपर्यनर्थाभिपाते तस्योत्कर्ष इति द्वितीयः । तथेति । कारणगुणप्रक्रमेण कार्यगुणारम्भ इति स्थित्या कार्यस्य कारणस्वभावानुकारः शास्त्रसिद्धोऽर्थः ।

१. 'ला' ग. पाठः. २. 'व' क. पाठः.

यत् तयोर्गुणौ च क्रिये च परस्परं विरुद्धतां व्रजतः, स सम-विपर्ययात्मा चतूरूपो विषमः। क्रमेणोदा —

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥

सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोकाभरणं[2] प्रसूते ॥

सम्प्रदायप्रकाशिनी

**शिरीषादपीति** । अत्र मृद्वङ्गमदनतापयोरघटमानः श्लेषः ।

**सिंहिकेति** । सिंहिका सिंहस्त्री राहुमाता च । अत्र न केवलं सिंह[3]भयं शशस्य, यावता साश्रयस्य राहुतोऽनर्थोऽपि ।

**सद्य इति** । करस्पर्शः पाणिग्रहः । अत्र गुणस्य विरोधः ।

साहित्यचूडामणिः

यत् सूत्रं 'विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसंघटना च विषमम्' (अलङ्कारसू० ४५) इति। विषमं भूषणं, विषमोऽलङ्कार इति वैवक्षिको लिङ्गनिर्देशः। एवमन्यत्रापि।

**शिरीषादिति** । अत्रातिकोमलाङ्ग्यामतिक्रूरकामानलान्वयो नोपपद्यते ।

**सिंहिकेति** । सिंही राहुमाता च तदपत्यात् पूर्वस्मात् सन्त्रस्तस्य प्रतीयमानोत्प्रेक्षास्पर्शेन शीतकिरणाश्रयणे क्रियाफलस्य निरुपद्रवत्वलक्षणस्य प्राप्त्यभावो नाभूत्, तदुपर्यपि तेन सिंहिकासुतेन स्वर्भानुना तस्य स्वाश्रयेण चन्द्रेण सह यद् ग्रसनं तन्महाननर्थः ।

**सद्य इति** । करस्पर्शः सम्भोगस्याग्राम्यतयोपलक्षणम् । नीलात् कारणाद् धवलकार्योदयो विरुध्यत इति ।

---

१. 'नि' ग. पाठः. २. 'क्या' ख. ग. पाठः. ३. 'हादभ' ख. ग. ङ. पाठः.

आनन्दममन्दमिमं कुवलयदललोचने! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥

अत्रानन्ददानं शरीरतापेन विरुध्यते । एवं,

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥

इत्यादावपि विषमत्वं यथायोगमनुसर्तव्यम् ॥४०,४१॥

---

सम्प्रदायप्रकाशिनी

**आनन्दमिति** ।

विरहान्तरितमपि प्रयोजकत्वात् क्रियाविरोधमेककर्तृकत्वेन दर्शयति — **अत्रानन्देति** । भिन्नकर्तृकतयाऽप्यनुमतिरित्याह — **एवमिति** ।

**विपुलेनेति** । असकलया कटाक्षाञ्चलमात्ररूपया ।

**यथायोगम्** उक्तचातुर्विध्ययोग्यतानतिक्रमेण ॥ ४०,४१ ॥

साहित्यचूडामणिः

(अत्र) क्रियाविरोध इत्याह— **आनन्ददानमिति** ।

कथं कर्तृकर्मभावेऽपीदमुदाहर्तव्यमित्याह — **विपुलेनेति** । एकस्याः स्त्रिया एकत्वादेव परिमित्ययोगिन्याः कर्तृभूताया दृष्ट्या सकलभुवनपानक्षमकुक्षिकुहरस्य हरेः कर्मभूतस्य पीयमानताया विरोधः । पानं प्रति पात्र्याः पेयस्य च (पारिमित्या)पारिमित्यलक्षणौ गुणौ विरुद्धाविति यावत् ।

**यथायोगमिति** । योगो युक्तिः कार्यकारणभावस्य कर्मकर्तृभा(वश्च ? वे) पर्यवसानलक्षणा, तामनतिक्रम्य । यदाहुः 'कर्तृकर्मत्वे एव कार्यकारणतायामि'ति ॥ ४०,४१ ॥

---

१. 'बबन्तव्यम्' ग. पाठः.

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥४२॥**

आश्रितमाधेयम् आश्रयस्तदाधारः तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यदधिकतरतां व्रजतः, तदिदं द्विविधमधिकं नाम । क्रमेणोदा—

अहो विशालं भूपाल ! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥

सम्प्रदायप्रकाशिनी

**महतोरिति** । महत आधेयस्य तनुरप्याधारः प्रकृतार्थोत्कर्षायाधिकतरतां यातीत्येकमधिकम् । विपर्यये द्वितीयम् ।

**व्याचष्टे — आश्रितमाधेयमित्यादि** ।

**अहो विशालमिति** । अत्राधेयस्य यशसो महतस्तनुरप्याधारो भुवनत्रयोदरं महीय उक्तम् ।

साहित्यचूडामणिः

अधिकमाह — **महतोरिति** । आधेयाधारयोः क्रमादाधाराधेयौ तनूभूतावपि यन्महीयांसौ लक्ष्येते महत्प्रतिपत्तिविवक्षया । महीयस्त्वमाधिक्यम् अत उक्तम् **अधिकतरतामध्यास्त** *इति† । तदेकमधिकम् (?) । यच्च महतः कस्यचिदाधारस्य विषये तदपेक्षया तनुरप्याधेयः पूर्ववद्विवक्षणादधिकतरत्वमनुभवति, तद् द्वितीयम् । यत् सूत्रम् 'आश्रयाश्रयिणोरनानुरूप्यमधिकम्' (अलङ्कारसू० ४८) इति ।

**अहो इति** । अत्र यशोलक्षणस्य महत आधेयस्यापेक्षया विवक्षया तन्वपि भुवनत्रयं यशःप्रकर्षविवक्षणादाधिक्योत्कर्षमनुप्राप्यते ।

१. 'स्तु तदा' ख. ग. पाठः २. 'धरती' ख. पाठः.

* एतदनुरोधो मूलपाठ ऊह्यः । † अस्य लक्षणवाक्यं लुप्तं स्यात् ।

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसंम्भृता[1] मुदः ॥ ४२ ॥

**प्रतिपक्षमशक्तेन[2] प्रतिकर्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥ ४३ ॥**

निकृतिपरमपि विपक्षं साक्षान्निरसितुमसमर्थेन केनापि यत् तमेव प्रतिपक्षमुत्कर्षयितुं तदीयस्य[3] तिरस्करणं, तदनीक-

सम्प्रदायप्रकाशिनी

**युगान्तेति।** अत्र वपुष्याधारे महति मुदामाधेयानां तनूनामपि महीयस्त्वम् ॥ ४२ ॥

**प्रतिपक्षमिति ।** अभिभावुकमपि प्रतिपक्षं साक्षात् प्रतिकर्तु-मशक्तेन तत्प्रकर्षाय तत्सम्बन्धिनस्तिरस्करणमनीकप्रतिनिधिवदिति[4] प्रत्यनीकम् ।

व्याचष्टे — **निकृतीत्यादि** । तदीयः सम्बन्धी सम्बन्धि-सम्बन्धी च ।

साहित्यचूडामणिः

**युगान्तेति।** अत्र महतीं भगवत्तनुमप्याधारं प्रति नारदागमनप्रमोदलक्ष-णस्याधेयस्य तनोरप्याधिक्योत्कर्षः । एवं चोभयत्राप्याधेयस्योत्कर्षविवक्षा ॥४२॥

प्रत्यनीकमाह— **प्रतिपक्षमिति** । तदीयस्य प्रतिपक्षसम्बन्धिनः कस्य-चिद् दुर्बलस्य । तत्स्तुत्यै प्रतिपक्षस्तोत्राय ।

यद् बलवतः प्रतिपक्षस्य दुर्बलेन प्रतिपक्षेण प्रतीकारः कर्तुं न पार्यते, पार्यते तु तत्सम्बन्धिनः कस्यचिद् दुर्बलस्य, तत् प्रत्यनीकमित्याह— **निकृ-तीति** । **साक्षादिति** । तदीयनिरसनं हि विपक्षस्य किञ्चिद् व्यवहितं सन्नि-

१. 'संभवा मु' क. ग. पाठः. २. 'क्तोऽपि प्र' ख. पाठः. ३. 'दाश्रितस्य' क. ग., 'दाश्रयस्य' ख. पाठः. ४. 'न्धितिर' क. ङ. पाठः.

प्रतिनिधितुल्यत्वात् प्रत्यनीकमभिधीयते। यथानीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते, तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः। उदा—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर! भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादिव कामः॥

यथावा—

यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥

इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात्॥ ४३॥

---

सम्प्रदायप्रकाशिनी

**त्वमिति**। अत्र सम्बन्धिन्या नायिकायास्तिरस्कारः।
**यस्येति**। यस्य विष्णोः।
योजयति—**इन्दोरिति**॥ ४३॥

साहित्यचूडामणिः

रसनम्। औपचारिको व्यपदेश इत्याह—**अनीकेति**। एतदुपपादयति—**यथेति**। अनीकस्य सैन्यस्य प्रतिनिधिः प्रत्यनीकं, तत्सादृश्यादलङ्कारोऽपि तथा। यत् सूत्रं 'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्' (अलङ्कारसू० ६८) इति।

(त्वमिति।) अत्र वर्णनीयः कामस्य विपक्षः, तद्रूपापहाराद् अनुकर्तृत्वात्। तं प्रतिकर्तुमक्षमेण कामेन तदीया नायिका तिरस्क्रियते।

(यस्येति।) *यत् तदीयश्चन्द्रस्तिरस्क्रियते।

अथ कथमिन्दोर्भगवत्सम्बन्धित्वमित्यत्राह—**इन्दोरिति**। भगवत्सम्बद्धं मुखं, तत्सम्बद्धश्च तत्सादृश्याच्चन्द्रः। अत उक्तं—**कान्तवक्त्रसदृशाकृतिमिति**। सम्बन्धिसम्बन्धरूपाद् वैशिष्ट्याद् उदाहरणान्तरप्रदानमिति यावत्॥ ४३॥

---

१. 'तं परं' ख. ग. पाठः.

---

* इतः पूर्वं भूयसो वाक्यांशस्य भ्रंशः सम्भाव्यते।

**समेन लक्ष्मणा वस्तु वस्तुना यन्निगुह्यते ।**
**निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ॥ ४४ ॥**

सहजमागन्तुकं वा किमपि साधारणं यल्लक्षणं, तद्द्वारेण किञ्चिद् वस्तु केनचिदिह यद् वस्तुस्थित्यैव बलीयस्तया तिरोधीयते, तन्मीलितमिति द्वेधा स्मरन्ति । क्रमेणोदा—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।

---

सम्प्रदायप्रकाशिनी

**समेनेति** । निजेनागन्तुकेन वा गूहनीयसदृशेन लक्षणेन वस्तु वस्त्वन्तरं परमार्थतो यन्निगूहति तन्मीलितम् ।

वस्तुसामानाधिकरण्यधीर्लक्ष्मणो मा भूदिति विभक्तिविपरिणामेन वाक्यं भिन्दन् व्याचष्टे— **सहजमित्यादि** ।

**अपाङ्गेति** । लीलया स्वत इति स्फुरितं स्वभावतो लीलैवेत्थं स्फुरति स्म ।

साहित्यचूडामणिः

मीलितमाह — **समेनेति** । निगूह्य(त) इति दीर्घविशिष्टः पाठो लेखकप्रमादजः, यकि सति गुणाभावाद् 'ऊदुपधाया गोहः' (६- ४- ८९) इत्यूदादेशाभावात् । कस्यचिल्लक्षणभूतेन गुह्यसाधारणेन यत् कस्यचिद् वस्तुनो निगुह्यस्य केनचिद् वस्त्वन्तरेण निगूहनं तन्मीलितम् ।

तच्च साधारणं लक्षणं सहजमागन्तुकमिति द्विधेत्याह — **सहजमिति** । **वस्तुस्थित्येति** । सामान्याद् व्यवच्छेदः । तस्य साधारणगुणयोगाद् भेदानुपलक्षणं रूपम्, अस्य तूत्कर्षनिकर्षरूपणव्यतिरेकेण स्वरूपमात्रनिगूहनं निगुह्यस्येति । नचेदं तद्गुणः । तत्र ह्यनपह्नुतस्वरूपमेव प्रकृतं वस्त्वन्तरगुणोपरक्ततया प्रतिपद्यते, अत्र तु प्रकृतं वस्त्वेव वस्त्वन्तरेणावच्छादितम् (ने ? इ)ति । यत् सूत्रं 'वस्तुना वस्त्वन्तरनिगूहनं मीलितम्' (अलङ्कारसू० ७० ) इति ।

**अपाङ्गेति** । अत्रापाङ्गेन कर्त्रा सहजेन दृष्टितारल्यादिना लिङ्गभूतेन करणेन मदोदयसाधारणेन स मदोदयो निगुह्यते । केचित्तु 'समेन लक्ष्मणा

---

१. 'त् प्रस्तुतेन के' क. पाठः.

इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥

अत्र दृक्तरलतादिकमङ्गकस्य लिङ्गं स्वाभाविकं, साधारणं च मदोदयेन[2], तत्राप्येतस्य दर्शनात् ।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥

अत्र* तु सामर्थ्यावसितस्य शैत्यस्यागन्तुकतया तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यं समानता च, भयेष्वपि तयोरुपलक्षितत्वात् ॥ ४४ ॥

---

सम्प्रदायप्रकाशिनी

**योजयति — अत्रेति । गूहनस्य स्फुटत्वात् लिङ्गस्य निजत्वं साधारण्यं च दर्शितम् ।**

**ये कन्दरास्विति । कम्पपुलकौ[3] हि सामर्थ्यात् ।**

**योजयति— अत्र त्विति । ताद्रूप्यमपृथङ्निर्देशात् ॥ ४४ ॥**

साहित्यचूडामणिः

वस्तुने'ति सामानाधिकरण्यादन्वयमाचक्षाणाः अङ्गकवर्तिना दृष्टितारल्यादिना मदोदयसाधारणेन मदोदयवर्ति तदेव तिरस्क्रियते इत्याहुः ।

य इति । अत्र वर्णनीयविद्विषां हिमवत्कान्तारनिवासशैत्य(स)मुद्भाविताभ्यां भयसाधारणाभ्यां (कम्परोमाञ्चाभ्यां) तथैव भयवर्तिनौ कम्परोमाञ्चौ तिरस्क्रियेते इति । इत्थमुभयथापि ग्रन्थयोजना ग्रन्थकारस्यापि सम्मतेत्यत्र सहृदयाः प्रमाणम् ।

नन्वत्र कथं शैत्यस्य प्रतीतिरित्याह — सामर्थ्येति । ननु कथं कम्प-

---

१. 'मनङ्गस्य' ख. पाठः. २. 'ये । त' ग. पाठः. ३. 'कौ सा' क. घ. पाठः.

---

* 'त्र सा' इति मूलकोशपाठः.

**स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् ।**
**विशेषणतया यत्र वस्तु सैकावली द्विधा ॥ ४५ ॥**

पूर्वं प्रति यत्रोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैरेकावलीति भण्यते । क्रमेणोदा—

*पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥
न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद् यदलीनषट्पदम् ।

सम्प्रदायप्रकाशिनी

**स्थाप्यत**—इति । पूर्वं पूर्वं प्रत्युत्तरस्य विशेषणतया विधानमेका, निषेधोऽन्या ।

व्याचष्टे—**पूर्वं प्रतीति** । वीप्सया व्याप्तुमिच्छया आवृत्त्येत्यर्थः ।

**पुराणीति** । अत्र विधिः । उत्तरत्र निषेधः ।

साहित्यचूडामणिः

पुलकयोरागन्तुकत्वमित्यत्राह—**शैत्यस्येति** । शैत्यस्यागन्तुकत्वात् तत्कार्ययोस्तयोरपि तथात्वम् ॥ ४४ ॥

एकावलीमाह—**स्थाप्यत इति** । स्थापनं विधिः । अपोहो निषेधः ।

पूर्वं पूर्वं प्रति परं परं यत्र विशेषणत्वलक्षणं वैचित्र्यमनुभवति, सैकावलीत्याह—**पूर्वं प्रति** (इति) । **वीप्सयेति** । अनेन यथापूर्वमिति समासः । परं परमिति च व्याख्यायते । यत् सूत्रं 'यथापूर्वं परस्य विशेषणतया स्थापनेऽपोहने वैकावली' (अलङ्कारसू० ५४ ) इति ।

**गृहाणीति** । अत्र गृहाणां वराङ्गनाः, तासां रूपं, तस्य विलासाः, तेषां च कुसुमायुधास्त्रत्वं विधीयते । एवं 'सा गोष्ठी यत्र कविरि'त्यूह्यम् ।

**न तदिति** । अत्र जलस्य चारुपङ्कजत्वं, तस्य लीनषट्पदत्वं, तस्य च कलं कूजितं, तस्य च मनोहरत्वं पूर्ववद् विशेषणतयापोह्यते । एवं,

१. 'जातप' क. ग. पाठः.

* 'गृहाणि' इति मूलकोशपाठः.

न षट्पदोऽसौ कलकूजितो न यो
न कूजितं तन्न जहार यन्मनः ॥

पूर्वत्र पुराणां वराङ्गनाः, तासामङ्गविशेषणमुखेन रूपं तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र निषेधेऽप्येवमेव योज्यम् ॥ ४५ ॥

**यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**
**स्मरणं**

यः पदार्थः केनचिदाकारेण नियतो यदाकदाचिदनुभूतोऽभूत, स कालान्तरे स्मृतिप्रबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत् तथैव स्मर्यते तद् भवेत् स्मरणम् । उदा—

सम्प्रदायप्रकाशिनी

उभयत्र योजयति— पूर्वत्रेत्यादि । अङ्गविशेषणमुखेनेति भिन्नप्रक्रमाङ्गस्याय ॥ ४५ ॥

यथानुभवमिति । कालान्तरस्मरणार्हनियताकारस्यार्थस्य स्मृतिप्रबोधके तत्सदृशे दृष्टे यथानुभवं स्मृतिः स्मरणम् ।

व्याचष्टे— पदार्थ इत्यादि ।

साहित्यचूडामणिः

"न सा कीर्तो राष्ट्रे दिशि दिशि न सौधे स्फुरति या
न ते सौधा नार्यो विदधति न यत्र व्यतिकरम् ।
न ता नार्यो यासां विलसति न गीतिः श्रुतिमती
न सा गीतिर्यस्यां तव सुभग! मुद्रा न घटते ॥"

इत्याद्यूह्यम् । उत्तरोत्तरस्य पूर्वं पूर्वं प्रत्युत्कर्षकारितायामेकावली, पूर्वपूर्वस्योत्तरोत्तरं प्रति मालादीपकमिति विवेकः ।

क्रमेण व्याचष्टे—पूर्वत्रेति । कथं स्वातन्त्र्येण रूपस्य रूपिशेष(त्व)मित्यत्राह—अङ्गेति । द्वितीयोदाहरणेऽप्येषैव शय्येत्याह— उत्तरत्रेति ॥ ४५ ॥

स्मरणमाह— यथानुभवमिति ।

१. 'गुञ्जितो', २. 'गुञ्जितं' क. ग पाठः. ३. 'था' ग. पाठः. ४. 'प्रक्र' क. ग. घ. ङ. पाठः. ५. 'णात् नि', ६. 'प्रसाध' ङ. पाठः.

निम्ननाभिविवरेषु यदम्भः प्लावितं चलदृशां लहरीभिः।
तद्भवैः कुहरुतैः सुर*कन्याः स्मारिताः सुरतकण्ठरुतानाम् ॥

यथावा —

करजुअगहिअजसोआत्थणमुहविणिवेसिआहरउंडस्स।
संभरिअपञ्चअण्णस्स णमह कण्हस्स रोमञ्चम् ॥

---

सम्प्रदायप्रकाशिनी

निम्नेति। प्लावितमवगाहितम्। अत्राम्भोरुतानां विवरेषु कु(हरे ? हे)त्याकारैः सदृशत्वात्। कन्याँ अतः स्मारिताः।

करेति।

करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥

रोमाञ्चो निजस्वरूपानुसन्धानप्रहर्षजः। अत्र सादृश्यं चाक्षुषवस्तुविषयम् ॥

साहित्यचूडामणिः

निम्नेति। अत्र सुरस्त्रीणां यानि पूर्वानुभूतानि सुरतकण्ठकूजितानि, तानि तत्सदृशैर्नाभिरन्ध्रप्रवहत्सलिलकुहूशब्दैः स्मार्यन्ते।

करजुएति।

करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥

इति। पूर्वत्र श्रावणम्, अपरत्र चाक्षुषं दर्शनमिति भेदः। एवम्

"आविर्भूतं बलभिदुपलश्यामलादम्बुवाहाद्
विद्युद्दाम्नो विजयनृपते! विभ्रमं प्रेक्षमाणाः।
स्मारं स्मारं नवयवनिकामुल्लसत्खड्गलेखां
दुःखायन्ते रिपुनृपतयः प्रावृषोऽपि प्रसङ्गे ॥"

---

१. 'हु' क. पाठः. २. 'पु' ख. पाठः. ३. 'ण्ण' ग. पाठः. ४. 'रेत्यादिकारः' क. घ., 'रुतेत्या' ख. पाठः. ५. 'रस' ख. ङ. पाठः. ६. 'न्यारुतस्मारकः। क' ग. पाठः. ७. 'रेति। करजुएति। क' क. घ., 'रेति। क' ग. पाठः.

---

* 'नार्यः स्मा' इति मूलकोशपाठः.

**भ्रान्तिमानन्यसंवित् तत्तुल्यदर्शने ॥ ४६ ॥**

तदिति अन्यदप्राकरणिकं निर्दिश्यते[1]। तेन समानस्य अर्थादिह प्राकरणिकस्य तथाविधस्य दृष्टौ सत्यां यदप्राकरणिकतया संवेदनं स भ्रान्तिमान्। नचैष रूपकं प्रथमो[2] वातिशयोक्तिः[3]। तत्र वस्तुतो भ्रमस्याभावात्। इह चार्थानुगमेन संज्ञायाः प्रवृत्तेः तस्य स्पष्टमेव प्रतिपन्नत्वात्। उदा—

सम्प्रदायप्रकाशिनी

**भ्रान्तिमानिति**। प्रकृताप्रकृतदर्शने यदप्रकृतत्वेन प्रकृतसंवित् स भ्रान्तिमान्।

व्याचष्टे—तदित्यादि। नन्वयमभेदाद् रूपकं, भेदे अभेदरूपातिशयोक्तिर्वेत्यत आह—नचैष इति। तयोर्हि न स्वारसिको भ्रमः, अपितु जानतोऽप्येतस्मिंस्तदिति कल्पनात्मा। इह तु भ्रान्तिमानिति संज्ञायाः स्वारसिकभ्रमानुगमेन प्रवृत्तेर्भ्रमस्य स्फुटा प्रतिपत्तिः।

साहित्यचूडामणिः

इत्याद्यनुसरणीयम्। सादृश्यविशिष्टमेव स्मरणमलङ्कारः, न ततोऽन्यथा। तस्माद् 'अत्रानुगोदं मृगयानिवृत्त' इत्यादौ नेदमलङ्कारः॥

**भ्रान्तिमानिति**। अन्यसंविद् अप्राकरणिकप्रतीतिः अन्यथानुभव इति यावत्।

अन्यत्वं तद्वृत्तपरामृश्यत्वं चाप्राकरणिकस्येत्याह—**तदिति**। प्राकरणिकं प्रत्यप्राकरणिकतयोपलम्भो भ्रान्तिमानिति यावत्। **अर्थानुगमेनेति**। भ्रान्तिमानित्यन्वर्थसंज्ञाविधानात्। नचैतल्लक्षणस्य रूपके निगीर्याध्यवसानरूपायामतिशयोक्तौ वातिप्रसङ्ग इत्याह—**नचेति**। यत् सूत्रं 'सादृश्याद् वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्' (अलङ्कारसू० १८) इति। भ्रान्तिश्चित्तधर्मश्चमत्काराय विद्यते यत्र।

१. 'ते। तेन समानमर्थादिह प्राकरणिकं निर्दिश्यते। तच्च यस्य त' क. पाठः.
२. 'माति', ३. 'क्तिर्वा। त' ख. पाठः. ४. 'तसमाप्र' क., 'तसप्र' ग. पाठः.

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विक्लबयति ॥ ४६ ॥

**आक्षेप उपमानस्य प्रतीपमुपमेयता ।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥ ४७ ॥**

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थक्येन यदुपमानमाक्षिप्यते, यदपिच तस्यैवोपमानतया प्रसिद्धस्यो-

---

सम्प्रदायप्रकाशिनी

कपाल इति । अत्र पयःप्रभृति सदृशशशिकरदर्शनानुगुणत्वात्[2]* ॥ ४६ ॥

**कैमर्थक्यं[3] प्रसाधनम् ।**

साहित्यचूडामणिः

**कपाल** इति । अत्र शशिक(रादेः ? रस्य) प्राकरणिकस्योपलम्भेन सदृशं पयःप्रभृत्यप्राकरणिकं प्रतीयते । इतयस्तत्तदपारमार्थ्यद्योतनाय । एष च मालारूपः । अमालारूपोऽपि —

"अवतंसप्रवालानामादाने यत्र सुभ्रुवः ।
पाणीनां तु मिथः स्पृष्ट्या त्रपन्ते विरलैः सितैः ॥"

इत्याद्यनुधावनीयः । अयमपि सादृश्यव्यतिरि(क्तानाम ? क्तो ना)लङ्कारः । यथा —

"दामोदरकराघातचूर्णिताशेषवक्षसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥"

इति ॥ ४६ ॥

प्रतीपमाह — **आक्षेप** इति । उपमानस्याक्षेपप्रतीतेरपकर्षणस्वरूपः । कैमर्थक्याच्च तस्याक्षेपः, उपमेयस्यैव प्रयोजनवत्तया विवक्षितत्वाद् इत्येकं प्रतीपम् । अथोपमानतया प्रसिद्धस्य प्रत्युतोपमेयतया प्रकल्पनं द्वितीयम् ।

---

१. 'नम् ।' क. ग. पाठः. २. 'ति श' क. ख. पाठः. ३. 'प्रधान' ग. पाठः.

* इतः परं कियांश्चिद् व्याख्यांश उपलब्धासु मातृकासु गलित इव भाति ।

पमानान्तरविवक्षयानादरार्थमुपमेयभावः कल्प्येत, तदुपमेयस्योपमानं प्रति प्रतिकूलवर्तित्वाद् उभयरूपं प्रतीपम् । क्रमेणोदा—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥

ए एहि दाव सुन्दरि! कण्णं दाऊण सुणसु वअणिज्जम् ।
तुज्झ मुहेण किसोअरि! चन्दो उपमिज्जइ जणेण ॥

सम्प्रदायप्रकाशिनी

(ए) एहीति[1] ।

साहित्यचूडामणिः

यत्रोपमेयीभूतस्य व्याजस्तुतिद्वारा तिरस्कारानादरगोचरत्वं विवक्षयेत्याह—अस्येति । यत् सूत्रम्—'उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम् (अलङ्कारसू० ६९) इति । प्रातिकूल्यात् प्रतीपव्यपदेशः । तच्चोपमानस्योपमेयतादिकरणम् ।

लावण्येति । अत्र क्रमोक्तविशेषोपपन्ने वर्णनीये तदुपमानभूता इन्द्वादयः किमर्थमेते पितामहेनोत्पादिता इत्याक्षिप्यन्ते प्रतिपत्तेरपकृष्यन्ते । यथासङ्ख्यमप्यत्रानुसन्धेयम् । इत्थं "कुन्दकोमले दन्तमुकुले सति सत्याभिधानमेव सौरभोत्तरमवधीरितकर्पूरपूरोपयोगमामोदयत्याननगर्भं, काव्यालाप एव ललितवृत्तो दूरीकृतहारभारं परिष्करोति कण्ठोपकण्ठं, शास्त्रश्रवणमेव संस्कारभासुरं खण्डितमणिकुण्डल(इत्यमु ? )मुद्भासयति कर्ण(दान ? द्वार)म्" इत्याद्यनुगन्तव्यम् ।

द्वितीयमाह—ए एहीति । अत्र चन्द्र उपमानमुपमेयतया परिकल्प्यते ।

१. 'ति । ए' ख. पाठः.

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वाद् उपमित्यनिष्पत्त्या 'वअणिज्जमि'ति वचनीयपदाभिव्यङ्ग्यया[1] तिरस्कारः। क्वचित्तु निष्पन्नैवोपमितिक्रिया अनादरनिबन्धनम्। यथा—

गर्वमसंभाव्यमिमं लोचनयुगलेन किं वहसि भद्रे!।
सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि॥

इहोपमेयीकरणमेवोत्पलानामनादरः। अनयैव रीत्या[2] यदसामान्यगुणयोगान्नोपमानभावमप्यनुभूतपूर्वं*सहते, तस्य

सम्प्रदायप्रकाशिनी

अयि एहि तावत् सुन्दरि! कर्णं दत्त्वा शृणु वचनीयम्।
तव मुखेन कृशोदरि! चन्द्र उपमीयते जनेन॥

योजयति—अ(हो? त्र) मुखेनेति। उपमीयमानस्योपमेयतयोपक्रान्तस्य। वचनीयपदेन ह्युपमित्यनिष्पत्तिर्व्यञ्जिता तिरस्कारिका, उपमेयभावस्यानिष्पत्तेः। निष्पत्तावपि सम्भवतीत्याह—क्वचित्त्विति।

गर्वमिति। ईदृशानीति निष्पत्तिः। तयोपमेयीकरणमेवानादरः।

एवं क्वचिदुपमानत्वनिष्पत्तिरप्यनादरात् प्रतीपमित्याह— अन-

साहित्यचूडामणिः

स्वल्पतरेति। मात्रया गुणापकर्षस्य सोढव्यत्वात्। उपमित्यनिष्पत्त्येति। यस्या मुखस्यानादरो व्याजस्तुत्यां पर्यवस्यति। अनेन वक्ष्यमाणोदाहरणाद् अस्य व्यवच्छेदः सूच्यते।

क्वचिदुपमितौ निष्पन्नायामनादरः सम्भवतीत्याह — गर्वमिति। अत्र लोचने प्रत्युत्प(न्ना? ला)नाम् उपमेयीकरणमेव तिरस्कारकारणम्।

अथास्तामुपमितेरनिष्पत्तिर्निष्पत्तिर्वा, यत्र पुनरुपमानभावसम्भावनैव नास्ति तत्राप्यनादरगोचरतया प्रतीपमेवेत्याह — अनयैवेति। तिरस्कारानिबन्धनत्वक-

१. 'ञ्चयतया' ग. पाठः. २. 'नी' ख. ग. पाठः.

* 'र्वं, त' इति मूलकोशपाठः.

तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम् । यथा —

अहमेव गुरुः सुदारुणाना-
मिति हालाहल! मास्म तात! दृप्यः ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥

अत्र हालाहलस्योपमानत्वमसम्भाव्यमेवोपनिबद्धम् ॥ ४७ ॥

**प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।**
**ऐकात्म्यं बध्यते योगात् तत् सामान्यमिति स्मृतम्**
**[॥ ४८ ॥**

सम्प्रदायप्रकाशिनी

यैवेत्यादि । पूर्वमनुभूतः[1] अनुभूतपूर्वः ।

अहमेवेति । भवादृशानीति वचनानामुपमेयत्वोक्त्या हाला-हलस्यासम्भाव्यमुपमानत्वं[2] निबद्धमनादरकृत्[3] ॥ ४७ ॥

प्रस्तुतस्येति । अतादृशस्याप्रकृतेन योगात् साम्यविवक्षयैका-त्म्यो[4]पनिबन्धो गुणसामान्यात् सामान्यम् ।

साहित्यचूडामणिः

ल्पनाकारा युक्तिः । यद् असामान्यगुणयोगाद् अन्यसदृशगुणसम्बन्धाभावाद् उपमानत्वमात्रमपि नानुभूतचरं वस्तु, कर्तरि क्तः भुक्ता ब्राह्मणा इतिवत्, तस्य तत्कल्पनायाम् उपमानत्वघटनायामप्यलङ्कारः प्रतीपमेव ।

अहमेवेति । 'स्मोत्तरे लङ् च' (३-३-१७६) । उपनिबन्धनं दुर्जन-वचनसद्भावप्राबल्यात् । इत्थञ्च उपमानस्य कथञ्चिन्निष्पत्तौ च त्रिधा द्वितीयं प्रतीपमुत्थाप्यत इति भावः ॥ ४७ ॥

सामान्यमाह — प्रस्तुतस्येति ।

प्रस्तुतस्याप्रस्तुतेन वस्तुना साधारणगुणयोगादैकरूप्यं सामान्यमि-

१. 'तवद् अनुभूतपूर्वः । अ' क. ग. घ. पाठः. २. 'त्वनि' ग. पाठः. ३. 'न्धनम' क. घ. पाठः. ४. 'त्म्यनि' ग. पाठः.

अताद‍ृशमपि ताद‍ृशतया विवक्षितं यद् अप्रस्तुतपदार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते, तत् समानगुणसम्बन्धात् सामान्यम् । उदा —

मलयजरसाविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥

अत्र प्रस्तुततदन्ययोः अन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः । अत एव पृथग्भावेन न तयोरुपलक्षणम् । यथावा—

---

सम्प्रदायप्रकाशिनी

व्याचष्टे — अताद‍ृशमपीत्यादि । अपरित्यक्तनिजगुणमिति तद्गुणाद् वैधर्म्यम् ।

मलयजेति । अत्र प्रस्तुतानां मलयजरसादीनाम् अताद‍ृशानामपरित्यक्तगुणानामेवाप्रस्तुतशशिधामयोगाद् अविभाव्यतया तादात्म्यम् ।

तदेतदाह — अत्र प्रस्तुतेत्यादि ।

साहित्यचूडामणिः

त्याह — अताद‍ृशमपी(ति) । न्यूनगुणमप्युत्कृष्टगुणेनैकात्मतया विवक्षितम् । वक्ष्यमाणतद्गुणनिराकरणार्थमाह—अपरित्यक्तेति । तदेकात्मतया अप्रस्तुतैकरू(प्यमाणम् ? प्येण) । व्युत्पादयति — समानेति । यत् सूत्रं 'प्रस्तुतस्यान्येन गुणसाम्यादैकात्म्यं सामान्यम्' (अलङ्कारसू० ७१) इति ।

मलयजेति ।

अत्र प्रस्तुतस्य चन्दनलेपादेः अप्रस्तुततया चन्द्रिकात्मतया 'अविभाव्यतां गता' इत्यभेदप्रतीतिरलङ्कारस्य मूलमित्याह — प्रस्तुततदन्ययोरिति । अन्यतया विभाव्यतायामभिसारिकाणां भीतिप्रसङ्गात् । अत एवेति । यतो धावल्यस्यैकात्म्यम् । तयोः प्रस्तुताप्रस्तुतयोः । इदमेव वृत्तवैकल्यपरिहारार्थमनुष्टुभीकृतं दण्डिना —

---

१. 'सामान्यगु', २. 'हारादी' ग. पाठः.

वेत्रत्वचा तुल्यरुचां वधूना

कर्णाग्रतो गण्डतलागतानि ।

भृङ्गाः सलीलं यदि नापतिष्यन्

कोऽवेदयिष्यन्नवचम्पकानि ॥

अत्र निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते, प्रतीतत्वात् तस्य । प्रतीतेश्च बाधायोगात् ॥ ४८ ॥

---

सम्प्रदायप्रकाशिनी

क्वचित् प्रतीतचरस्यैकात्म्यस्याबाधे मानान्तराद् भेदः प्रतीतोऽपि[2] न सामान्यबाधक इत्युदाहरति — वेत्रत्वचेति । वेत्रत्वक्साम्यं गौरता । इह भृङ्गपातान्नानात्वधीः ।

योजयति — अत्र निमित्तेति ॥ ४८ ॥

साहित्यचूडामणिः

"मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।

क्षौमवत्यो न दृश्यन्ते ज्योत्स्नायामभिसारिकाः ॥"

इति । एवं

"यत्राभिसारो भुजगाङ्गनानां धौतस्तनीनां हरिचन्दनेन ।

धातुस्थलैस्तुङ्गफणामणीनां सन्ध्यासु विध्यत्यरुणाङ्ककानाम् ॥"

इत्याद्यन्वेषणीयम् ।

अर्थवैचित्र्यासूत्रणाय पुनरुदाहरति — वेत्रेति । अत्र प्रस्तुततदन्ययोश्चम्पकगण्डस्थलयोरन्यूनानतिरिक्तमनवसितभेदत्वमैकरूप्यहेतुः ।

ननु क्रियातिपत्तिपर्यालोचने भृङ्गपातेन चम्पकानां परिज्ञातत्वम्, येन भेदप्रतीतिरिति कथं सामान्यौचित्यमिति चेदाह — निमित्तेति । निमित्तान्तरं भ्रमरपतनलक्षणं तज्जनिता या सामान्यविरोधितया शङ्क्यमाना भेदस्य प्रतीतिः । सा प्राक्प्रतिपन्नमभेदसामान्यरूपं निराकर्तुं न प्रगल्भते । तत्र हेतुः — प्रतीतत्वादिति । कृतं हेत्वन्त(र)गवेषणेन । यद्यभेदः प्रतीतिमस्प्राक्षीत् वज्रलेपवत्

---

१. 'रोऽद्भेदः' क घ. पाठः. २. 'पि खा' ख. पाठः.

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ ४९ ॥**
**अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।**
**तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥ ५० ॥**

प्रसिद्धाधारपरिहारेण यद् आधेयस्य विशिष्टा स्थितिरभिधीयते सः प्रथमो विशेषः । उदा—

---

सम्प्रदायप्रकाशिनी

**विना प्रसिद्धमिति ।** लोकसिद्धमाधारं विनाधेयस्य स्थैर्यादिविशिष्टावस्थितिरेकः ।

साहित्यचूडामणिः

तस्याप्रकम्प्यत्वमिति यावत् । यथाहुरभियुक्ताः —

("एवरूप्यविभागावरूपा शक्तिमतिर्भवेत् ।
नत्वाद्या रजतत्वे स्यादप्रामाण्यस्य वेदिता ॥
धर्मसिद्धेरपि भवत्येव बाधनाप्यनुमान ॥"

इति । यथाचोक्तं मया चमत्कारचिन्तामणौ 'वस्तु चेत्तत्कथमि'त्यारभ्य

"रजतानुभवे शुक्तिर्न चिन्तामधिरोहति ।
शुक्तिप्रतीतौ च दूरे रजतवासना ॥
बाधेन मेळके भाव्यं स कदाचिल्लभ्यते ।
एवं बाधस्य दौर्बल्याद् भ्रान्तत्वं संविदो वृथा ॥
यद् बुद्ध्योर्न विरोधोऽस्ति मिथो वार्तानभिज्ञयोः । ?) "

इति । एवम् —

"आरब्धामपराह्ण एव मह(ति ? तीं) श्रीवल्लभक्ष्मापते !
गायन्तीं विशदं यशस्तव मुदा गोष्ठीं दिवौकस्पतेः ।
अज्ञानादुदयस्य चन्द्रमहसामामध्यरात्रं स्थिता-
मुल्लासेन सुगन्धिना विघटयत्युद्यानशेफालिका ॥"

इत्याद्यूह्यम् । (स ? न)चेदमपह्नुतिः । किञ्चिन्निषिध्य कस्यचिदप्रतिपादनात् ॥ ४८ ॥

विशेषमाह—विनेति । आ(धे)यस्थितिरनाधारतया विशिष्यमाणानां प्रथमं विशेषमुत्पादयति ।

---

१. 'एकात्म्याद् यु' क. पाठः.

दिवमप्युपयातानामाकल्पमनल्पगुणगणा[1] येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥

एकमपि वस्तु यदेकेनैव[2] स्वभावेन युगपदनेकत्र[3] वर्तते, सः द्वितीयः । उदा —

सा वसइ तुज्झ हिअए स च्चिअअच्छीसु सा अ सवणेसु[4] ।
अम्हारिसाण सुन्दर! ओआसं कत्थ पावाणम् ॥

यदपिच[5] किञ्चिद् रभसेनारभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते, सोऽप्यपरो विशेषः । उदा —

सम्प्रदायप्रकाशिनी

दिवमपीति । अत्र कवीन् विना वचसामाकल्पमवस्थितिः ।
द्वितीयं व्याचष्टे — एकमपीति ।
सावसइ इति ।

सा वसति तव हृदये सैवाक्ष्णोः सा च श्रवणयोः ।
अस्मादृशीनां सुन्दर! अवकाशः कुत्र पापानाम् ॥

अत्रैकस्याँ हृदयाक्ष्यादिष्वेकविधप्रेमपात्रतया युगपद्वृत्तिः ।
तृतीयं व्याचष्टे—यदपिचेति । कार्यान्तरं विधेयं निषेध्यं च ।

साहित्यचूडामणिः

दिवमिति । कविषु किल वाचो वर्त(ते ? न्ते) अनन्यत्रभावो विषयार्थ इति विषयत्वेन तेषामाधारत्वम् । तेषु स्वर्गतेष्वपि वाचामैहिकी वृत्तिर्महान् विशेषः ।

एवं स्वलक्षणकमेव वस्तु युगपदनेकत्र वर्तमानं द्वितीयं विशेषमुन्मेषयति ।
सेति ।

"सा वसति तव हृदये सैवाक्ष्णोः सा च वचनेषु ।
अस्मादृशीनां सुन्दर! अवकाशः कथं पापानाम् ॥"

अथ कस्यचिदुत्साहोत्कर्षात् कार्यमारभमाणस्य तेनैवारम्भेण पृथक् प्रवृत्तावशक्यमपि कार्यान्तरमारभ्यमाणं तृतीयस्य विशेष(क ?)स्य प्रयोजकम् ।

१. 'तमगुणा ये', २. 'न स्व' क. ख. पाठः. ३. 'त्र यद् व', ४. 'वअणे, ख. पाठः. ५ 'पि कि' क. पाठः. ६. 'स्वैव श्र' क. ख. पाठः. ७. 'स्य' ग. पाठः.

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम्।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च॥

यथावा —

गृहिणी सचिवः सखा मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां बत किं न मे हृतम्॥

सर्वत्र चैवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते, तां विनालङ्कार्यालङ्करणत्वायोगात्। अतएवोक्तं —

सम्प्रदायप्रकाशिनी

स्फुरदिति। अत्र नायकसर्गेण नवमनोभवादिविधिः।

गृहिणीति। अत्र नायिकाहरणेन गृहिण्यादिहृतिः।

नन्वत्र भेदत्रयेऽपि गिरादीनां भेदे अभेदाध्यवसाय इत्यत आह— सर्वत्र चेति। एवंविधे विषये अतिशयोक्तिरेव प्राणत्वेन विच्छित्तिबीजत्वेन। दार्ढ्यायाभियुक्तसंवादमाह— अतएवोक्तमित्यादि।

साहित्यचूडामणिः

स्फुरदिति। अत्र वर्णनीयमेकं स्रष्टुमुन्मुखस्य चतुर्मुखस्य तेनैवारम्भेण पृथक् सामग्रीसाध्यजन्मनां मनोजन्मादीनां सृष्टिर्विशेषः।

गृहिणीति। अत्रैकस्या इन्दुमत्याः संहारादेव गृहिणीसचिवादीनां सर्वेषां संहार उक्तः। सृष्टिसंहारद्वारा विधिनिषेधवैचित्र्यप्रदर्शनार्थमुदाहरणभेदः। यत् सूत्रम् 'अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं च विशेषः' (अलङ्कारसू० ५०) इति।

ननु भामहादिप्रक्रियायां सर्वमिदमतिशयोक्तावन्तःपततीत्याशङ्क्य तदभ्युपगतप्रायमित्याह — सर्वत्रेति। प्राणत्वेन जीविततया सारभावेनावतिष्ठते।

१. 'प्रमाण' क. ख. पाठः, २. 'शोकेत्यादिके प्रा।' घ. पाठः.

"सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥"

इति ॥ ४९,५० ॥

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।**
**वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥ ५१ ॥**

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया[1] स्वगुणसम्पदोपरक्तं तत्प्रतिभासमेव यत् समासादयति स तद्-गुणः तस्याप्रकृतस्य गुणोऽत्रास्तीति । उदा—

सम्प्रदायप्रकाशिनी

**सैषा** अभेदाध्यवसायरूपा वक्रोक्तिः । साध्यवसानलक्षणा-रूपत्वाद् विभाव्यते मुख्यातिशयत्वेन प्रत्याय्यते ॥ ४९, ५० ॥

**स्वमुत्सृज्येति** । अत्युज्ज्वलगुणयोगादुपरक्तं वस्तु स्वं गुण-मुत्सृज्य तद्गुणतां यदेति सोऽप्रकृतगुणत्वात् तद्गुणः ।

**व्याचष्टे— वस्त्वित्यादि** । **तिरस्कृतेति** । इहानिगूहितस्य तिरस्कारः मीलने निगूहनमिति विशेषः ।

साहित्यचूडामणिः

अत्र भामहग्रन्थं संवादयति — सैषेति । 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः'ति युक्त्या सर्वोऽप्यलङ्कारोऽलङ्कार्यो वा वक्रोक्तिः । यदनया सक-लजनपुराणीकृतोऽप्यर्थो विचित्रतया भाव्यते, प्रमदादिभिर्वा भावो विभावतां प्राप्यते विशेषेण वा भाव्यत इति वक्रोक्तिरतिशयोक्तिः, वक्रिमातिशययोरे-कत्वात् । तदेषैव सर्वालङ्कारनिर्वाहिका निगीर्याध्यवसानादिरविच्छिन्ना पारि-भाषिक्यतिशयोक्तिः ॥ ४९,५० ॥

तद्गुणमाह — स्वमिति । अत्युज्ज्वलगुणस्य वस्तुनः संबन्धात् तस्य गुणो यत्र स तद्गुणः ।

1. 'णतया गु' क., 'णया गु' ख. पाठः.

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचं[1] रुचा स्वामानिन्यिरे वंशकरीरनीलैः ॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरितमणीनां प्रगुणवर्णता ॥ ५१ ॥

**तद्रूपाननुहारश्चेदस्य तत् स्यादतद्गुणः ।**

---

सम्प्रदायप्रकाशिनी

**विभिन्नेति** । विभिन्नवर्णाः योगादारुण्यं नीताः । वंशकरीरनीलैर्मरतकैः ।

द्वाविह तद्गुणावित्याह — अत्रेत्यादि । नच मन्तव्यं स्वरूपानयनात् प्रथमस्य बोधो द्वितीयस्यानुदय इति । तिरस्कृतनिजरूपभेदाध्यवसायेन हरिन्मणिरुच एव स्वेति व्यपदेशात् । अतः प्रगुणवर्णने द्वे दर्शिते ॥ ५१ ॥

**तद्रूपेति** । तदिति प्रकृतस्याप्रकृतस्य चाधिकगुणस्य निर्देशः । अतो द्वैविध्यम् ।

साहित्यचूडामणिः

**स्वगुणसम्पदेति** । स्वशब्देन समीपगतपरामर्शकेन प्रतियोगित्वं प्रकाश्यते । तत्प्रतिभासं तस्य गुणस्योपरञ्जकस्य प्रतिभासं(क? अ)ल्पगुणस्य प्रचुरगुणेन कबलीकारात् । व्युत्पादयति—तस्येति । यत् सूत्रं 'स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः' (अलङ्कारसू० ७२) इति ।

नचेदं मीलितम् । तत्र हि प्रकृतस्य वस्तुनो वस्त्वन्तरेणापह्नवः (इह त्वनपह्नुतस्वरूपमेव प्रकृतं वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयते) । यत उक्तं— स्वां रुचं पुनरानिन्यिर इत्याह — रवीति ॥ ५१ ॥

अ(थ? था)तद्गुण(मित्या? मा)ह — तद्रूपेति । रूपं वर्णः अननुहृतिरननुवर्तनम् । अत्र ग्रहणमिति यावत् ।

---

१. 'चिं' क. ख. पाठः. २. 'शाङ्कुर' क. ग. घ. पाठः. ३. 'त्यत आह' ग. पाठः. ४. 'प्रकृतव' ग. घ. पाठः.

यदि[1] तु तदीयं वर्णं सम्भवन्त्यामपि योग्यतायामिदं न्यून-गुणं न गृह्णीयात् तदा भवेदतद्गुणो नाम। उदा —

धवलो सि जइ वि सुन्दर! तहवि तुए मज्झ रञ्जिअं हिअअम्।
राअभरिए वि हिअए सुहअ! णिहित्तो ण रत्तोसि ॥

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः ।

सम्प्रदायप्रकाशिनी

आद्यं व्याख्यायोदाहरति—यदि त्वित्यादि । तदीयमधिक-गुणप्रकृतसम्बन्धिनम् । योग्यतायां प्रत्यासत्तिलक्षणायाम् । सम्भ-वन्त्यां कविकल्पनया वस्तुतो वा ।

धवलोऽसीति ।

धवलोऽसि यद्यपि सुन्दर! तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग! निहितो न रक्तोऽसि ॥

धवलो युवा सितश्च । रागो रतिरारुण्यं च ।

प्रथमार्धे विरुद्धकार्योत्पादनाद् विषमधीरिति द्वितीयार्धे योज-यति — अत्रातिरक्तेनापीति ।

साहित्यचूडामणिः

तदीयम् उत्कृष्टगु(णं ? ण)सम्बन्धि(नम्) । सम्भवन्त्यामपीति । न्यूनगुणस्य हि प्रकृ(त ? ष्ट)गुणस्वीकारो न्याय्यः। अन्यथाभावश्चेत् तदानीमत-द्गुणः । तस्योत्कृष्टगुणस्यात्र गुणा न सन्तीति । (अनुत्कृष्टस्यापकृष्टगुणस्यात्र गुणा न सन्तीति ?) । यत् सूत्रं 'सति हेतौ तद्रूपाननुहारोऽतद्गुणः' (अलङ्कार-सू० ७२) इति।

धवल इति ।

"धवलोऽसि यद्यपि सुन्दर! तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग! निहितो न रक्तोऽसि ॥"

इति । रागस्य श्लेषादेकतयाध्यवसानम् । अत्र पूर्वार्धे धवलिमारुणिम्नोर्गुणयो-र्विरोधः ।

उत्तरार्धेऽप्यतद्गुण इत्याह—अतिरक्तेनापीति । अयं पूर्वोक्ततद्गुण-प्रतियोग्यतद्गुणः ।

---

1. 'दि त' ख. पाठः.

किञ्च तदित्यप्रकृतम् । अस्येति[1] च प्रकृतमत्र निर्दिश्यते । तेन यदप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तान्नानुविधीयते सोऽतद्गुण इत्यपि प्रतिपत्तव्यम् । यथा —

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस! तव सैव शुभ्रता चीयते नच नचापचीयते ॥

**यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥ ५२ ॥**
**तथैव यद् विधीयेत स व्याघात इति स्मृतः ।**

सम्प्रदायप्रकाशिनी

द्वितीयं व्याख्यायोदाहरति[2] — किञ्चेत्यादिना । अत्र द्वितीयभेदे । कुतोऽपि नैसर्गिकत्वादेः ।

गाङ्गमिति । अत्र चयापचयाभावाद् अप्रकृताम्बुरूपाननुकारः ॥ ५१$\frac{1}{2}$ ॥

यद्यथेति । यदेकेन येनोपायेन साधितस्यान्येन विजिगीषया तेनैवोपायेनान्यथीकरणं साधितार्थव्याघातकत्वाद् व्याघातः ।

साहित्यचूडामणिः

प्रकारभेदेनाह — किञ्चेति । पूर्वं तद्वृत्तेनोत्कृष्टगुणं परामृष्टम् इदंवृत्तेन च न्यूनगुणम्, इदानीमप्रकृतं तद्वृत्तेन प्रकृतं चेदंवृत्तेन । प्रकृतत्वं च प्राधान्येन वाक्यार्थोपयुक्तत्वम् अप्राधान्यादप्रकृतत्वमित्यागूर्याह — तदिति । प्रकृतस्याप्रकृतस्याननुहारोऽतद्गुण इति यावत् । तस्याप्रकृतस्य गुणा नात्र सन्तीति । इत्यपीति । चिरन्तनैस्तथा व्याख्यातत्वात् ।

गाङ्गमिति । अत्र प्रकृतस्य हंसस्य शुभ्रता(यां ?) सत्यामपि योग्यता(यामपि ? यां) गङ्गाम्भःश्वेतिमानं यमुनाम्बुकालिमानं (चा ? च ना)नुविधत्ते । इह च कार्यकारणविव(क्ष ? क्षा)या अभावान्न विषमालङ्कारत्वशङ्का ॥ ५१$\frac{1}{2}$॥

व्याघातमाह — यदिति । कर्त्रा केनचिदुपायविशेषान्निष्पादितं वस्त्वन्येन प्रतिद्वन्द्विना तस्मादेवोपायविशेषादन्यथाक्रियते यत् स व्याघातः ।

१. 'त्रे' ग. पाठः २. 'त्' क. घ. पाठः. ३. 'तितत्वा' ग. पाठः,

येनोपायेन यदेकेनोपकल्पितं[1] तस्यान्येन विजिगीषुतया तदुपायकमेव यदन्यथाकरणं, स साधितवस्तुव्याहतिहेतुत्वाद् व्याघातः । उदा—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥ ५२½ ॥

सम्प्रदायप्रकाशिनी

व्याचष्टे—येनोपायेनेत्यादि ।

दृशेति । दृशेत्य*ोपायता ॥ ५२½ ॥

साहित्यचूडामणिः

निर्वक्ति—स इति । निष्पादितवस्तुव्याहतिहेतुत्वाद् व्याघात इति यावत् ।

दृशेति । विरूपाक्षेण कर्त्रा दृष्टिरूपेणोपायेन स्मरस्य दाहः साधितोऽभूत् । तद्विजिगीषुभिस्तु चारुलोचनाभिस्तेनैव दृष्टिरूपेण तस्य जीवितत्वं साधितं, यद् दाहस्य प्रतिवादिभूतम् । व्यतिरेकोऽप्यत्र निमित्तं, यतो विरूपाक्षस्य चारुलोचना इति तद्गर्भौ वाचकाविति ॥ ५२½ ॥

इदमत्रावधातव्यं—यद् भेदाभेदतुल्यत्वे सादृश्याश्रयेण उपमानन्वयोपमेयोपमास्मरणानि, अभेदप्राधान्य आरोपे रूपकसन्देहभ्रान्तिमदपह्नुतयः; तत्रापि विषयस्य सन्दिह्यमानत्वे ससन्देहः अपलापेऽपह्नुतिः असम्यग्ज्ञानतायां ससन्देहभ्रान्तिमन्तौ वस्त्वन्तरप्रतीतौ भ्रान्तिमदपह्न(वः ? वौ) अध्यवसायस्य साध्यत्व उत्प्रेक्षा सिद्धत्वेऽतिशयोक्तिः, गम्यमानौपम्याश्रयणे दीपकतुल्ययोगितादृष्टान्तप्रतिवस्तूपमानिदर्शनाः, भेदप्राधान्ये व्यतिरेकसहोक्तिविनोक्त्यादयः, विशेषण विच्छित्त्याश्रयणे समासोक्तिपरिकरौ, प्रस्तुताद् वा(च्य ? च्याद)प्रस्तुतप्रतीतौ समासोक्तिः, विपर्ययादप्रस्तुतप्रशंसा, सामान्यविशेषयोरसदृशरूपयोर्वाच्यतायामर्थान्तरन्यासः, सदृशरूपयोस्तु दृष्टान्तः, गम्यत्वमात्रस्वीकारे पर्यायोक्तव्याजस्तुती, गम्यत्वस्य विशेषवत्त्व आक्षेपः यत्रेष्टा(द ? )निष्टनिषेधविधानयोर्मात्रया विरोधानुप्रवेशः, विरोधगर्भत्वे विरोधविभावनाविशेषोक्त्यस-

1. 'न क' ग. पाठः.

**सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ ५३ ॥**

एतेषां समनन्तरमेवोक्तस्वरूपाणामलङ्काराणां यथा-सम्भवमन्योन्यनिरपेक्षतया यदिह शब्दभाग एव अर्थविषय

---

सम्प्रदायप्रकाशिनी

इत्थं शब्दार्थोभयाश्रिता अलङ्काराः शुद्धतया विवेचिताः । अथ सम्भेदकृते वैचित्र्यान्तरप्रस्तावः । तत्र नैरपेक्ष्ये संसृष्टिमाह — **सेष्टेत्यादिना।** एतेषां निरूपितचरतया धीविनिवेशितानां भेदेन मिथो नैरपेक्ष्येण इह शब्देऽर्थे उभयत्र विषये यथायोगं यदवस्थितिः सा संसृष्टिः । एकार्थसमवायात्मा सम्बन्धः ।

व्याचष्टे — **एतेषामित्यादि** । (**शब्दभाग एवे**)ति । शब्द-भा(गेन? गत्वे)न हि निरवशेषः सन्दर्भः शब्दालङ्कारविषयः । अर्थ-

साहित्यचूडामणिः

ज्ञतिविषमाधिकान्योन्यविशेषव्याघातादयः, शृङ्खलाबन्धे कारणमाला(माला)-दीपकैकावलीसाराः, तर्कन्यायेन काव्यलिङ्गानुमाने, वाक्यन्यायेन यथासंख्य-पर्यायपरिवृत्तिपरिसंख्यासमुच्चयसमाधयः, लोकन्यायेन प्रत्यनीकप्रतीपमीलित-सामान्यतद्गुणातद्गुणाः, गूढार्थप्रतीतितात्पर्ये सूक्ष्मव्याजोक्त्यादयः, चित्त-वृत्तिस्वभावविशेषे उदात्तरसवदादयः, तेषु च पदार्थवृत्तयो दीपकप्रभृतयः, वाक्यार्थवृत्तयश्च प्रतिवस्तूपमादय इति । अथैतेषामुपमादीनामलङ्काराणां बाह्या-नामिव सुवर्णमणिप्रभृतीनां पृथक् चारुत्वहेतुत्वेऽपि सङ्घटनाकृतेन वैचित्र्येणा-लङ्कारान्तरस्फुरत्ता, नतु पृथङ्मात्रपर्यवसानमित्यासूत्र्यते । तस्य च द्वैविध्यं संयोगन्यायात् समवायन्यायाच्च । यत्र भेदस्योत्कटतयावस्थितिस्तत्र संयोग-न्यायः, यत्र त्वनुत्कटत्वेन तत्र समवाय(स्य? न्यायः)। अथ चौत्कटयादवस्थाने तिलतण्डुलन्यायः, अनौत्कट्यात् पुनर्नीरक्षीरन्यायः । पूर्वत्र संसृष्टिः । उत्तरत्र सङ्करः । यत् सूत्रम् — 'एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः ।' 'क्षीर-नीरन्यायेन तु सङ्करः' (अलङ्कारसू० ८४,८५) इति । तत्र प्रथमं संसृष्टिमाह— **सेष्टेति** । **भेदेनेति** । उत्कटत्वेनेति यावत् । प्रक्रान्तानामलङ्काराणां यथासम्भव-मुदाहरणानुगुण्याद् मिथो नैरपेक्ष्यपर्यवसानस्य वक्ष्यमाणत्वात् । उक्तं हि —

"अलङ्कृतीनां बह्वीनां द्वयोर्वापि समाश्रयः ।
एकत्र निरपेक्षाणां मिथः संसृष्टिरुच्यते ॥"

एवं उभयत्रापि वा सहावस्थानं, सैकार्थसमवायस्वभावा संसृष्टिः । तत्र शब्दालङ्कारसंसृष्टिः —

कुसुमसौरभलोभपरिभ्रमद्-
भ्रमरसम्भ्रमसम्भृतशोभया ।
वनितया विदधे कलमेखला-
कलकलोऽलकलोलदृशान्यया ॥

अर्थालङ्कारसंसृष्टिः —

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

---

सम्प्रदायप्रकाशिनी

विषये पदार्थवाक्यार्थलक्षणे विषये, अर्थालङ्काराणामुभयत्र सम्भवात् । स्वभावग्रहादेकार्थे[2] समवायो लक्षणं[3] संसृष्टेः[4], नैरपेक्ष्येणाङ्गाङ्गिभावासम्भवात् ।

कुसुमेति । अलकव्याकुलदृशा मेखलाकलकलो विदधे । इह वृत्त्यनुप्रासयमकयोर्नैरपेक्ष्येण संसृष्टिः । लकलो लकलो इति कलोल कलोलेति यमकयोरपि ।

लिम्पतीवेत्यादि । प्रथमेऽर्धे इवशब्दः सम्भावनायाम् । द्वितीये सदृशतायाम् ।

साहित्यचूडामणिः

इति । सङ्करे तु मिथो व्यपेक्षाया अनुग्राह्यानुग्राहकत्वादिलक्षणाया वक्ष्यमाणत्वात् ।

तत्र शब्दार्थालङ्कारयोः उभयस्य वा वाक्ये छन्दसि वा य एकार्थसमवायः सम्बन्धः सा संसृष्टिस्त्रिधेत्युद्भावयिष्यन्नादिमामुदाहर्तुमाह — तत्रेति ।

कुसुमेति । कलो मेखलायाः काञ्च्याः कलकलः कोलाहलः ।

द्वितीयामुदाहर्तुमाह — अर्थेति ।

लिम्पतीति । अत्र तमस उत्कर्षो ध्वन्यते ।

---

१. 'चलित' ख. पाठः. २. 'र्थे' ख. ग. पाठः. ३. 'णः', ४. 'ष्टिः' ख. पाठः.

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः। उत्तरत्र[1] तु तथाविधे उपमोत्प्रेक्षे। शब्दार्थालङ्कारयोस्तु संसृष्टिः —

सो णत्थि एत्थ गामे जो एअं *मएमएत्थळाअण्णम्।
तरुणाण हिअअलुण्टिं परिस†प्पन्तीं णिवारेइ॥

सम्प्रदायप्रकाशिनी

उभयत्र योजयति — पूर्वत्रेत्यादि। तथाविधे निरपेक्षे। उपमोत्प्रेक्षे इति। नैरपेक्ष्येणार्थक्रमाविवक्षणात् कामचारेण उपमायाः पूर्वनिपातः।

सो णत्थीति।

स नास्त्यत्र ग्रामे य एतामामोदमानलावण्याम्।
तरुणानां हृदयलुण्टिं[2] परिसर्पन्तीं निवारयति॥

लुण्टिर्लुण्टिका[3]। आह्लादिना लावण्येन हृदयलुण्टिकायाः प्रसारनिवारको नोपलक्ष्यत[4] इत्यर्थः। अत्र णत्थि एत्थ मएत्थेत्यनुप्रासस्य, हिअअलुण्टिमिति[5] रूपकस्य च वाक्यैकवाक्यतायामेकत्र वाक्ये समवायः। वाक्यभेदापेक्षया छन्दसि।

साहित्यचूडामणिः

क्रमेण व्याचष्टे—(पूर्वत्रेति)। उपमोत्प्रेक्षे इति। तत्र पूर्वत्रार्धे उत्प्रेक्षा उत्तरत्रोपमा।

तृतीयामुदाहर्तुमाह — शब्दार्थेति।

सो इति।

स नास्त्यत्र ग्रामे य एनां मह(महीयमान)लावण्याम्।
तरुणानां हृदयलूनिं परिष्वक्कमाणां निवारयति॥

इति। अत्र णत्थि एत्थेत्यादावनुप्रासः शाब्दोऽलङ्कारः। हृदयलूनिमिति तु रूपकमार्थः।

१. 'त्र त' ख. पाठः. २. 'ण्ठिं' ग. ङ. पाठः. ३. 'ण्ठि' ग. पाठः. ४. 'भ्य' ख. ग. ङ. पाठः. ५. 'टिड्डुअ' क. घ., 'भिड्डुअ' ग. पाठः.

* 'महमहत्तळा' इति, † 'क्क' इति च मूलकोशपाठः,

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे[1]। संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात्॥ ५३॥

**अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः।**

एत एव तु यद्यत्रात्मनि अनासादितस्वतन्त्रभावाः परस्परमनुग्राह्यानुग्राहकतां दधति स एषां सङ्कीर्यमाणस्वरूपत्वात् सङ्करः। उदाहरणम्—

आत्ते सीमन्तरत्ने मरतकिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।

सम्प्रदायप्रकाशिनी

**तदेतदाह—अत्रानुप्रास इत्यादि॥ ५३॥**

**अविश्रान्ती**ति। स्वरूपे स्वातन्त्र्यमलभमानानामङ्गाङ्गिभावो[2] मिथः सङ्कीर्यमाणा[3]त्मकत्वात् सङ्करः।

**व्याचष्टे—एत एवेति।**

**आत्त** इति। इत्वरीणां पलायनपराणाम्। हारमिति जातौ,

साहित्यचूडामणिः

अथ किमाधा(राधे? रे)यं संसृष्टिरिति संसृष्टिं व्याकर्तुमाह—**संसर्गश्चे**ति। वाक्ये गद्यविवक्षायाम्। पद्यतात्पर्ये छन्दसि॥ ५३॥

अथ 'सङ्करेण त्रिरूपेणे'ति ध्वनिकारनिर्णीतया युक्त्या त्रिविधं सङ्करमुल्लिङ्गयिष्यन् तस्य प्राथमिकं भेदमाह—**अविश्रान्ती**ति। आत्मन्यविश्रान्तानामलङ्काराणामन्योन्यमङ्गाङ्गित्वं प्रथमः सङ्कर इति यावत्।

अन्यसापेक्षा हि नच स्वविश्रान्ताः, स्वविश्रान्ताश्च नान्यसापेक्षाः। अपेक्षा च पर्यालोच्यमाना तेषामङ्गाङ्गित्वलक्षणेऽनुग्राह्यानुग्राहकत्वे संशयास्पदतायाम् एकवाचकानुप्रवेशे च प्रतितिष्ठति। विश्रान्तिः स्वातन्त्र्यलाभ इति तात्पर्येण व्याचष्टे—एत इति। अङ्गमनुग्राहकम् अनुग्राह्यमङ्गि। सङ्कीर्यमाणेत्यादि सामान्यलक्षणम्।

**आत्त** इति। अत्रापह्नुतेष्वपि भूषणेषु शबरा हारं न हरन्ति तस्य

१. 'क्षौ।' ख. पाठः. २. 'वात् मि' क. घ., 'वे' ख. पाठः. ३. 'णत्वा' ख. पाठः.

शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये

राजन्! गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं, तदाश्रयेण च तद्गुणः सचेतसां प्रभूत* चमत्कृतिनिमित्तमित्येतयोरङ्गाङ्गिभावः। यथावा —

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो

वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।

---

सम्प्रदायप्रकाशिनी

एकस्य स्रग्भिरसमन्वयात् ।

योजयति — अत्र तद्गुणमित्यादि । तदाश्रयेण भ्रान्तिमदाश्रयेण । प्रभूतेति । शुद्धस्वरूपापेक्षया प्रभूतता । अतः परस्परमङ्गाङ्गिभावः ।

शब्दार्थालङ्कारगतत्वेनाह — जटाभाभिरिति । आभाभिः

साहित्यचूडामणिः

बिम्बोष्ठकान्त्या शोणत्वाद् यया गुञ्जाफलभ्रम इति तद्गुणभ्रान्तिमतोरङ्गाङ्गिभावः । तत्र तद्गुणमङ्गमपेक्ष्य भ्रान्तिमानङ्गी प्रादुरभूत् । अङ्गाङ्गिनोरुभयोः कुत्र चमत्कारातिशय इति मीमांसमानेरभावेरनया(?) नीत्या भ्रान्तिमल्लक्षणादङ्गिनोऽप्यङ्गे तद्गुणे उत्पद्यते इत्याह — तदाश्रयेण चेति । यथाच —

"आलम्मापि तमालगुच्छरुचिरे वक्षस्थले शार्ङ्गिणो

लक्ष्मीस्त्वा कुलशेखरक्षितिपते! शौर्योत्तरं ध्यायति ।

यस्यास्त्वद्गुणवासना वितनुते तामेव कान्तिं तनो-

र्निर्व्याजस्मयमानपङ्कजदलश्लाघाक्षरोल्लङ्घिनीम् ॥"

इति । अत्रातद्गुणेनोपमया च तद्गुणोऽनुगृह्यते । यथोक्तं —

"परस्परोपकारेण यत्रालङ्कृतयः स्थिताः ।

स्वातन्त्र्येणात्मभावं नो लभन्ते सोऽपि सङ्करः ॥"

इति ।

‡(भस्मापाण्डुः) ईषद् भस्मना पाण्डुरित्यर्थः । एषु च पूर्वपूर्वस्याङ्गत्वम्

---

१. 'मतया । यो' ख., 'मत्वात्' ङ. पाठः.

---

* 'तं' इति मूलकोशपाठः. ‡ 'जटाभाभिः' इत्यादिपद्यस्य प्रतीकव्याख्यांशौ लुप्ताविति भाति ।

परिप्रेङ्खत्तारापरिकरकपालाङ्किततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववद् अङ्गाङ्गितया प्रतीयन्ते । कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते । अस्य हि रूपकत्वे तिरोहितकलङ्करूपमक्षवलयमेव मुख्यतयावगम्यते। तस्यैव च करग्रहणयोग्यतया सार्वत्रिकी प्रसिद्धिः । श्लेषच्छा-

सम्प्रदायप्रकाशिनी

सदृशीभिः । व्यापत्तेर्व्यापादनात् । विशदः शुचिः । भस्मवदापाण्डुः भस्मना च ।

योजयति — उपमेत्यादि । भस्मापाण्डुः पितृवन इवेत्युपमा । कलङ्काक्षवलयेति रूपकम् । वैराग्यविशदेत्युत्प्रेक्षा । करेति श्लेषः । एषां परस्परमङ्गाङ्गिता । (योजयति ?) पूर्ववत् परस्परम् । ननु कलङ्काक्षवलयेत्यत्रोपमाया एव प्रतिभास इत्यत आह — कलङ्क एवेत्यादि । करधृतत्वं पाणिधृतत्वम् । रूपकत्वे कोऽतिशयलाभ इत्यत आह — अस्य हीत्यादि । रूपकत्वे कलङ्करूपं तिरोधायाक्षवलयमेव मुख्यतयावगम्यते । तस्यैव करग्रहणयोग्यतायां भूयसी प्रसिद्धिः । प्रसिद्ध्यनुगमोऽतिशयलाभ इति यावत् । कथं तर्हि किरणापेक्षया संगतिरित्यत आह — श्लेषच्छाययेत्यादि । रूपकापेक्षया हि पाणिः प्राक्-

साहित्यचूडामणिः

उत्तरोत्तरस्याङ्गित्वम् । अङ्गस्याङ्गिनं प्रति चमत्कारोत्कर्षकारित्वप्रयोजकत्वं पर्यालोचनीयम् ।

ननु किं कलङ्कोऽक्षवलय इवेति कलङ्क एवाक्षवलय इत्युपमारूपकसंशयाकारो द्वितीयः सङ्करोऽयं, तत्रोद्दिष्टानां चतुर्णाम् अङ्गाङ्गिभावो विहन्येत, उभयथापि समाससिद्धेः । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२-१-५६) इत्युपमायाः समासः । व्याघ्रादीनामाकृतिगणत्वात् । 'मयूरव्यंसकादयश्च' (२-१-७२) इति रूपकस्य । तेषामपि तथात्वादित्याशङ्क्याह—कलङ्क एवेति ।

१. 'ति उपमेत्यादि । पू' क. ग. घ. पाठः. २. 'त्वेन क' ग. पाठः. ३. 'भि' क. ग. घ. पाठः.

यया तु कलङ्कस्य करधारणमसदेव प्रत्यासत्त्योपचर्य योज्यते, शशाङ्केन कलङ्कस्य मूर्त्यैवोद्वहनात्। कलङ्कोऽक्षवलय *इ-वेति तु उपमायां कलङ्कस्योत्कटतया प्रतिपत्तिः। नचास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्।

सम्प्रदायप्रकाशिनी

प्रतीतिकः तदनुग्रहाय तु श्लेषच्छाया। तदा किरणेन धारणं वस्तु-तोऽसदेव कलङ्कप्रत्यासत्त्यास्तीत्युपचर्याक्षवलये योज्यते, मूर्त्यैव कल-ङ्कधारणात्। ननूपचाराश्रयणं चेदुपमायामपि कोऽतिभार इत्यत आह — कलङ्कोऽक्षवलयमिवेति। एवं हि कलङ्कस्योत्कटप्रतीति-कता। नच[1] कलङ्कस्य करधृतत्वं[2] तत्त्वतोऽस्तीति मुख्येऽप्युपमाभागे[3] उपचार एव शरणं स्यात्, न केवलममुख्ये[4] श्लेषभागे। यथाहि न वस्तुतः किरणैर्ग्रहः कलङ्कस्य, तथा न पाणिनापि। रूपकपक्षे तु मुख्येऽक्षवलयस्य पाणिना धृतौ नोपचारः, अपित्वमुख्ये[5] श्लेषांशे किरणैरेव कलङ्कस्य। अतः श्लेषस्य शब्दालङ्कारत्वात् शब्दार्थालङ्कार-[6]सङ्करोऽयं रूपकेण।

साहित्यचूडामणिः

रूपकाङ्गीकारे करधृतत्वं साधनम्। यथा कलङ्कत्वं तिरोधीयते अक्षवलयत्वं चोद्रिच्यते। तदा रूपकयोग्यता सार्वत्रिकी। यद्यपि श्लेषेण करैरंशुभिर्धृतत्वमि-त्युपमायाः रूपकादानुगुण्यं, तथापि करशब्दस्य किरणादपि पाणौ प्रसिद्धि-विशेषः। पाणिधृतत्वमक्षवलयस्यैव सङ्गच्छत इति। यत् पुनरत्र श्लेषेण कलङ्क-स्यापि करधृतत्वप्रतीतिः तदक्षवलयसान्निध्यप्रयुक्तं, न मुख्यं, येन मृगाङ्को मूर्त्या कलङ्कं वहति, नतु करेणेत्युपमापक्षेऽप्युपचार एव शरणमित्याह — कलङ्कोऽक्षवलय इवेति। उपमायां हि कलङ्कस्य प्रतीतिः स्पष्टा, अक्षवलयस्य तिरोधीयमानत्वात्। उक्तन्यायेन तादृशस्य कलङ्कस्य करधृतत्वानौचित्यात्।

१. 'वा' ख. पाठः. २. 'किरण धृ' ग. पाठः. ३. 'भेदे उ', ४. 'लं मु' ५. 'तु' ख पाठः. ६. 'ब्दाल' क घ. पाठः.

* 'मि' इति मूलकोशपाठः.

एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि[1] दृश्यते। यथा —

राजति तटीयमभिहत-
दानवरासातिपातिसारावनदा ।
गजता च यूथमविरत-
दानवरा सातिपाति सारा वनदा ॥

सम्प्रदायप्रकाशिनी

शब्दालङ्काराणां शब्दानामिवाङ्गाङ्गिता न सम्भवतीति यदुक्तं तदयुक्तमित्यभिप्रायेण सम्भवमाह—एवंरूपश्चेति । एवंरूपः[2] अङ्गाङ्गिभावलक्षणः[3] न केवल(लम् ? लः), एकवाचकात्मा स च[4] दृश्यते। केवलानां हि शब्दानामर्थपरतन्त्रभावाद् गुणानां नाङ्गाङ्गिभावः । स्वरूपसाम्यादिविच्छित्तिपरत्वे तु दृश्यते, न परं युक्तिमात्रेण प्रतिपाद्यत इति भावः ।

राजतीति । तटीयं राजति। कीदृशी । अभिहताः शिलादावास्फालिताः अत एव दानवानां रासमाक्रोशमतिपतन्तोऽतिवर्तमानाः सारावाः सीत्कारसहिताः नदाः पुमभिमानिनो निर्झरा यत्र । गजता गजसमूहश्च यूथमतिपाति बाढमभिरक्षति । कीदृशी । अविरतेन दानेन वरा उत्कृष्टा । सा प्रसिद्धा । सारा बलतः । वनदा वनस्य खण्डयित्री ।

साहित्यचूडामणिः

अथ न केवलमार्थेष्वलङ्कारेष्वयं सङ्करः । यावता शाब्देष्वपीत्याह—एवंरूप इति ।

राजतीति । अभिहतानां दानवानां यो रासः शब्दः तदतिपातिनः सारावाः सजलकलकला नदा यस्याम् । गजता गजसमूहश्च । यूथमतिपाति भृशं रक्षति। अविरतिर्विश्रान्तिशू(न्यो ? न्या)मदस्य वरासा रेखा यस्याः सारा श्रेयसी वनदा वनानि द्यतीति कृत्वा ।

१. 'पि परिदृ' क. ख. पाठः. २. 'पमङ्ग' क. घ. पाठः. ३. 'णम्' क. ख. ग. घ. पाठः. ४. 'च न दृ' क. घ. पाठः. ५. 'खा' ख. पाठः.

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे ॥ ५३$\frac{1}{2}$ ॥

सम्प्रदायप्रकाशिनी

**योजयति — अत्र यमकेत्यादि ।** अनुलोमप्रतिलोमः अनुलोमप्रतिलोमपाठयोरैकरूप्यात्मा । पादद्वयगतत्वाद् यमकस्य परस्परापेक्षिता, अनुलोमप्रतिलोमस्य पुनरुभयत्रैकरूप्यात् ॥ ५३$\frac{1}{2}$ ॥

साहित्यचूडामणिः

अत्र यमकमनुलोमप्रतिलोमलक्षणश्चित्रभेदश्च शाब्दावलङ्कारौ मिथः सापेक्षावङ्गाङ्गिभावरूपं सङ्करमनुभवत इत्याह — यमकमिति । इदं तु चिन्त्यं यदुत शब्दालङ्कारयोः (शाब्दः ?) श(ब्दोयमु ? ब्द्वदु)प(मा ? )कार्योपकारकभावशून्यत्वादङ्गाङ्गिभावो युज्यते वा नवेति । तेन शब्दालङ्कारयोः संसृष्टिः संशयगोचरत्वलक्षणः सङ्करोऽपि वैचित्र्याद् भाव्यतां नाम । अलमनुग्राह्यानुग्राहकभावनिर्बन्धेनेत्यन्ये । इदमत्रावधातव्यं — यदलङ्कारेषु केषाञ्चिद् अलङ्कारविशेषोऽङ्गी भवति । यथा —

"कूटस्थः कुशली ययातिरिति ते मारव्यथाविह्वलो
वर्षीयानपि भोगलौल्यमगमद् बालास्विति श्रूयते ।
बालोऽपि त्वसनेकपूर्वपुरुषप्रेमोत्तरां कौतुकी
धत्से दोषिण करग्रहाद् भुवमहो चन्द्रान्वयप्रक्रिया ॥"

इत्यादौ व्याजस्तुतेः प्रेयोऽलङ्कारः । अन्येषामलङ्कारमात्रं यथा —

"कालं वा कालकूटं वा कल्पाग्निं वा खलं तु वा ।
तव देव ! कृपाणस्य विधाता किमुपाददे ॥"

इत्यादिसंदेहादीनामुपमादिः । अपरेषां परस्परगर्भता सम्भाव्यते यथा दीपकोपमयोः । तत्र दीपकस्योपमागर्भत्वं स्पष्टम् । उपमा काचिद् दीपकानुकारिणी दृश्यते ।

"व्यालस्येव विषाणो दंष्ट्राङ्कुर इव दन्दशूकस्य ।
खड्गो वीर ! कठोरो नख इव सिंहस्य सहजमस्त्रं ते ॥"

इत्यादिमालोपमा इति ॥ ५३$\frac{1}{2}$ ॥

१. 'मपरयो' क. घ. पाठः. २. 'त्मकपा' ख. पाठः.

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ ९४॥**

द्वयोर्बहूनां *वालङ्काराणामेकत्र समावेशेऽपि विरोधान्न यत्र युगपदवस्थानं, †नचैकतरस्य परिग्रहे साधकं तदितरस्य वा परिहारे बाधकमस्ति येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः सङ्करः, समुच्चयेन सङ्करस्यैवाक्षेपात्। उदा—

सम्प्रदायप्रकाशिनी

सङ्करान्तरमाह — एकस्य चेत्यादि। चो भिन्नक्रमः, अनिश्चयश्चेति। न्याय आनुकूल्यलक्षणं साधकत्वम्। दोषः प्रातिकूल्यलक्षणं बाधकत्वम्।

द्वयोरित्यादि। द्वयोर्बहूनां वेति भेदद्वयम्। एकत्र वाक्ये। समावेशेऽपि सन्देहविषयतासम्पातेऽपि। विरोधात् परस्परपरिहाररूपात्। न युगपदवस्थानम्, अतः संसृष्टेर्व्यावृत्तिः। साधकबाधकाभावान्नैकतरपरिग्रहः। अतोऽपि निश्चयाभावरूपो द्वितीयः, चेति समुच्चयेन प्रकृतसङ्कराक्षेपात्।

साहित्यचूडामणिः

अथ द्वितीयं संशयास्पदत्वलक्षणं सङ्करमाह — एकस्येति। न्यायः साधकं प्रमाणं यस्य साध्यं प्रत्यानुकूल्यम्। दोषो बाधकं यस्य साध्यं प्रतिप्रातिकूल्यम्। अनिश्चयः संशयः, कोट्यन्तरस्य निर्धारणाभावात्।

द्वयोरनेकेषां वा भूषणानाम् एकत्र वाक्ये छन्दसि वा समावेशमात्रसद्भावेऽपि विरोधशङ्का न पार्यते प्रक्षालयितुम् एकस्यालङ्कारस्य गोचरमितरः कथमाक्रामत्विति। विरोधश्च सहानवस्थानस्वभावः। तस्मादेकतरस्य परिग्रहे साधकं परिहारे वा बाधकं प्रमाणमवश्यमेषितव्यम्। तदसिद्धेश्चायमनिश्चयरूपः सङ्कर इत्याह — द्वयोरिति। यदाहुः—

"विरुद्धालङ्क्रियोल्लेखे समं तद्वृत्त्यसम्भवे।
एकस्य च ग्रहे न्यायदोषाभावे च सङ्करः॥"[1]

इति। संशयत्वं यस्य(कस्य)चिद्वास्तु, कुतः सङ्करस्यैवेति नियम इति चेदाह— समुच्चयेनेति। एकस्य च ग्रह इत्यत्र चकारप्रतिपाद्येन।

१. 'तो नि' ख. पाठः.

* 'वा' इति, † 'नसम्भवः। न' इति च मूलकोशपाठः,

स्तुतप्रशंसेति बहूनां सन्देहादयमेव सङ्करः । यत्र तु न्यायदोषयोरन्यतरस्याव*तरः, तत्र एकतरस्य निश्चयान्न संशयः । न्यायश्च साधकत्वमनुकूलता[1] । दोषोऽपि बाधकत्वं प्रतिकूलता[2] । तत्र 'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः' इत्यत्र मुख्यतयावगम्यमाना हसितद्युतिर्वक्त्र एवानुकूल्यं भजते

सम्प्रदायप्रकाशिनी

सेत्यप्रस्तुतप्रशंसा । अतः साधकबाधकाभावाद् बहूनां सन्देहात्मैवायं सङ्करः । परस्परपरिहारात् तु नाङ्गाङ्गिभावः । युगपद्विरोधाच्च न संसृष्टिः । साधकबाधकयोरेकतरसद्भावे तु नियतपरिग्रह इत्याह — यत्र त्वित्यादि । अवतरोऽवतारः । 'सौभाग्यमि'त्यत्र हि ज्योत्स्नासादृश्यविशिष्टतया मुख्या हसितद्युतिः (मुखं ? वक्त्रं) शशीवेत्युपमासा-

साहित्यचूडामणिः

पशुमि'त्यादिवत् । इन्दुबिम्बे एतत्परामृष्टे च मुखे प्रसादक्रिया दीप्यते । तुल्ययोगितेति । इन्दुबिम्बस्य च मुखस्य च द्वयोरुपमानयोः उपमेययोर्वा व्यासेन विवक्षणात् । उपलक्षणं चैतत् । तेन समास एकत्वाध्यवसायेन विरोधः, इन्दुबिम्बप्रसत्त्यन्धकारविशरणलक्षणयोः क्रिययोर्विरोधात् । चन्द्रोदयेऽपि न तमो विशीर्यते इति विशेषोक्तिः । (मा ? का)मोत्क(र्षे ? र्ष)शालिनो विप्रलम्भशृङ्गारस्याङ्गत्वाद् रसवांश्च स्वीक्रियते । अयमेवेति । भावसन्धिशबलत्वन्यायेन द्वयोः संसृष्टिः अनेकेषामलङ्काराणां सङ्कर इत्येकदेशिकानां पक्षोऽप्यत्रोपक्षिप्यते । न्यायदोषयोस्तु जाग्रतोर्न सन्देहोत्पत्तिरित्याह — यत्र त्विति । परिजिघृक्षिते न्यायः परिजिहीर्षिते(ऽन्य ? )दोषः । साधकत्वमित्यादौ भावप्रत्ययः स्वरूपनिष्कर्षाय । उपमारूपकयोः प्रत्येकं साधनदूषणद्वारा चत्वारो भेदाः । उपमायाः साधनं (न) रूपकस्य दूषणं किन्तु ताटस्थ्यमित्येकः । रूपकस्य साधनं नोपमाया दूषणं यावत् ताटस्थ्यमिति द्वितीयः । उपमाया दूषणं रूपके ताटस्थ्यमिति तृतीयः । रूपकस्य दूषणमुपमायास्ताटस्थ्यमिति तुरीय इति । तत्रेति ।

१. 'कतमत्व' क. पाठः. २., ३. 'तया ।', ४. 'हासद्यु' ग. पाठः. ५. 'तु' क. घ. पाठः.

* 'ता' इति मूलकोशपाठः.

इत्युपमायाः साधकम् । शशिनि तु न तथा प्रतिकूलेति न रूपकं प्रति तस्या बाधकता । 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतः' इत्यत्रापरत्वमिन्दोरनुगुणं नतु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, नतूपमाया बाधकताम् । 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' इत्यत्र पुनरालिङ्गनमुपमां निरस्यति, सदृशं प्रति* हरिप्रेयसीप्रयुक्तस्यालिङ्गनस्या[1]सम्भवात् ।

सम्प्रदायप्रकाशिनी

धिका यथाच वक्त्रेऽनुकूला न तथाच शशिनि प्रतिकूला, ज्योत्स्नासादृश्येनान्वयसम्भावनात् । अतो न रूपकबाधिका । 'वक्त्रेन्दावि'त्यत्र वक्त्रादपरत्वमिन्दोरनुकूलं, नतु वक्त्रप्रतिकूलमिति रूपकसाधकं, नोपमाबाधकम् । इत्थं साधकादेकतरपरिग्रहः । बाधकादप्याह—राजेति । लक्ष्मीर्हरिप्रिया सम्पच्च । राजनारायणमित्यत्रालिङ्गनं राजा नारायण इवेत्युपमां निरस्यति, उपमेयं राजानं प्रति हरिप्रियाप्रयुक्ता-

साहित्यचूडामणिः

चतुर्णां मध्ये । सौभाग्यमिति । अत्र वक्त्रं शशीवेति वा वक्त्रमेव शशीति वा संशये हासद्युतेर्मुख्यया वृत्त्या वक्त्र एवावस्थानात् शशिनस्तिरोधानं वक्त्रस्याविर्भाव इति तस्या आनुकूल्यम् । ननु शशिनि तस्याः प्रातिकूल्यात् कोट्यन्तरस्य रूपकलक्षणस्य बाधकमेवास्त्विति चेदाह— शशिनि त्विति । तथेति । गुणवृत्त्या घटमानत्वादित्युपमा साध्यते, न पुना रूपकं दूष्यते । वक्त्रेन्दाविति । अत्र चन्द्रस्यापरत्वमनुकूलं, न वक्त्रस्य प्रतिकूलमिति रूपकं साध्यते, नोपमा दूष्यते । राजनारायणमिति । अत्रालिङ्गनमुपमायाः प्रतिकूलम् । तदेवोपपादयति—सदृशमिति । न खलु स्वप्रियौपम्यात् परपुरुषपरिरम्भं प्रत्यौचित्यमित्युपमा दूष्यते, न रूपकं साध्यते । पादाम्बुजमिति ।

१. 'स्याभावा' ग. पाठः.

* 'ति प्र' इति मूलकोशपाठः.

"पादाम्बुजं भवतु वो विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ।"

इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम् असम्भवादिति रूपकस्य बाधकं, नतु पादेऽनुकूलमिति उपमायाः साधकमभिधीयते । विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ॥ ५४ ॥

सम्प्रदायप्रकाशिनी

**लिङ्गनासम्भवात्** । 'पादाम्बुजमि'त्यत्र मञ्जीरशिञ्जितमम्बुजप्रातिकूल्याद् रूपकबाधकं, पादानुकूल्येऽपि नोपमासाधकं, साधकोपमर्दिनो बाधकस्य साधनापेक्षया प्रतीत्यौत्कठ्यात् । इत्थं केवलात् साधकाद् बाधकाच्च नियतपरिग्रह उदाहृत्य दर्शितः । समुदिताभ्यां तु स्फुट इत्याह — **एवमन्यत्रापीति** ॥ ५४ ॥

साहित्यचूडामणिः

अत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलमिति रूपकं दूष्यते । ननु यत्र रूपकस्य दूषणं तत्र तत एवोपमायाः सिद्धिरिति कथं नोपमा साध्यते इत्याह — **विध्युपमर्दिन** इति । विधिबाधयोर्व्यपदेशविकल्पे बाध एव प्रगल्भत इति यावत् । बाधस्य स्वभावो विधिं प्रत्युपमर्दः, उपमर्दनीयलाभे जितकाशिता बाधस्य न्यक्कार इति तात्पर्यम् । तदपेक्षया विधिप्रतियोगितया । औत्कठ्यानौत्कठ्यप्रयुक्तौ च व्यपदेशस्यान्वयव्यतिरेकौ । **एवमिति** । अन्यत्राप्येवं विचक्षणैः परीक्षणीयम् । यथा—

"शरदीव प्रसर्पन्त्यां तस्य कोदण्डठात्कृतौ ।
विनिद्रजृम्भितहरिर्विन्ध्योदधिरजायत ॥"

इति । अत्र विनिद्रजृम्भितहरिरिति हरिहर्यक्षद्वयविषयं यत् साधारण्येन विशेषणं, तद् विन्ध्य उदधिरिवेत्युपमां बाधते रूपकं साधयति सामान्याप्रयोग इत्युक्तत्वात् । यद्वा रूपकोपमयोरिव भूषणान्तरेष्वप्ययं न्या(याद ? य)दोषावकाशः परीक्ष्य इत्युपदेशः । यथा —

"शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥"

स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम् ।
व्यवस्थितं च

अभिन्ने च पदे स्पष्टतया यदुभावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः, सोऽप्यपरः सङ्करः । उदा—

स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुषावतार-
बद्धान्धकारमधुपावलि संचुकोच ॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ ।

---

सम्प्रदायप्रकाशिनी

सङ्करान्तरमाह — स्फुटमिति । एकत्र श्लेषाद्यविभागादभिन्ने[1] विषये पदात्मनि शब्दार्थोभयविषययोरलङ्कृत्योर्द्वयं यद्व्यवस्थितं स चापरः एकवाचकप्रवेशात्मा सङ्कर इत्यर्थः ।

व्याचष्टे — अभिन्न इत्यादि ।

स्पष्टेति । अत्र किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकामिति (स्प ? श्लि)ष्टाष्टदिग्दलकलापामिति च पदे अनुप्रासरूपकयोः स्फुटं व्यवस्था ।

तदेतदाह — अत्रैकेति । एवं शुद्धयोरेकवाचकप्रतिपाद्यत्वमुदाहार्यम् ।

साहित्यचूडामणिः

इत्यत्र दृष्टान्तो निदर्शना वेति सन्देहे निदर्शनायामानुकूल्यम् । यथावा —

"कुशलस्य क्रियौचित्यं खलेन यदि शिष्यते ।
बिम्बमप्यम्बरमणेर्भस्मना परिशोध्यताम् ॥"

इति ॥ ५४ ॥

अथैकपदानुप्रवेशस्वभावसङ्करं तृतीयमाह — स्फुटमिति ।

विषयः पदम् । चकारो वाक्यार्थ इत्यागूर्य व्याचष्टे — अभिन्ने च पद इति । यथाहुः —

---

१. 'भावाद' क. ग. घ. पाठः.

तेनासौ त्रिरूपः परिकीर्तितः ॥ ५५ ॥

तदयमनुग्राह्यानुग्राहकतया, सन्देहेन, एकपदप्रतिपाद्यतया च व्यवस्थितत्वात् त्रिप्रकारतयैव[1] सङ्करो व्याकृतः। प्रकारान्तरेण तु न शक्यो व्याकर्तुम्, आनन्त्यात् तत्प्रभेदानाम्[2]।

इति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलङ्काराः।

कुतः पुनरेष प्रतिनियमो यदेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य, कश्चि-

सम्प्रदायप्रकाशिनी

सङ्करं निगमयति — तेनासाविति।

त्रैरूप्यानतिक्रमे हेतुमाह — प्रकारान्तरेणेति। प्रकारान्तरेण सजातीयविजातीयद्विकत्रिकादिरूपेण।

अथ सर्वानेव नवमदशमविवेचितान् निगमयति — इति प्रतिपादिता इत्यादि।

विषयप्रतिनियममाक्षिपति — कुतः पुनरित्यादि। शोभाति-

साहित्यचूडामणिः

"शब्दार्थवर्त्यलङ्कारा वाक्य एकत्र वर्तिनः।
सङ्करो वैकवाक्यांशप्रवेशाद् वाभिधीयते॥"

इति।

निगमयति — तेनेति। अनुग्राह्यानुग्राहकतया तेषामलङ्काराणां मिथः सापेक्षता स्पष्टा। संशये च कोटिद्वयप्रतिपत्तये तस्या अवश्यंभावः। तृतीये त्वनुप्रविश्यमानपदापेक्षया तस्याः सम्भव इति।

ननु प्रकारान्तरोपकल्पने कः क्रोध इत्यत्राह — आनन्त्यादिति। प्रभेदाः कदाचित् प्राथमिका भेदाः प्राचार्य इतिवत्। कदाचिदनन्तरभेदाः प्रशिष्य इतिवत्।

अथ नवमदशमोल्लासद्वयसमर्थितं परमं प्रकरणार्थमुपसंहरति — इतीति। औभयिकानामप्राचुर्येऽपि तृतीयकोटिनिर्वाहः प्रौढत्वमिति।

१. 'र एव' ग. पाठः. २. 'द्भेदा' ख. पाठः.

च्चोभयस्य इतिचेद् उक्तमत्र। यथा काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात्। ततश्च योऽलङ्कारो यदीयौ भावाभावावनुविधत्ते स तदलङ्कारो व्यवस्थाप्यत इति। एवञ्च यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाभावानुविधायितयोभयालङ्कारौ, तथा हिशब्दहेतुकार्थान्तरन्या-

सम्प्रदायप्रकाशिनी

शयहेतुत्वमाक्षेपबीजम्। परिहरति — उक्तमत्रेत्यादि। अत्र प्रतिनियमे। उक्तं निमित्तम्। श्लेषप्रस्ताव इति शेषः। उक्तप्रस्तावं यथावदनुवदति—यथा काव्य इत्यादि। निमित्तान्तरस्याश्रयाश्रयिभावस्य। सति शब्दे शब्दालङ्कारोऽस्ति, असति नास्तीत्यादि भावाभावानुविधानम्। इतिः प्रकारे। अनेन प्रकारेणोक्तमित्यर्थः। इत्थं च सति प्रतिनियम इति दर्शयति — एवञ्चेत्यादि। पुनरुक्तवदाभासः उभयपौनरुक्त्यं श्लिष्टशब्दं, परम्परितरूपकं श्लेषं ताद्रूप्यारोपं चानुविधत्त इत्युभयालङ्कारौ यथा चेमौ, तथा हिशब्दहेतुकोऽर्थान्तरन्यासः छलादिशब्दहेतुका अप-

साहित्यचूडामणिः

अथालङ्काराणां शब्दार्थभागनैयत्यमाक्षिप्यान्वयव्यतिरेकाभ्यां प्रतिसमादधाति — कुत इति। प्रतिष्ठितो नियमः प्रतिनियमः आश्रयाश्रयिभावस्वीकारश्चेद् अभ्युपगम्यत इति भावः। समाधत्ते— उक्तमत्रेति। प्रागप्युक्तप्रायमेतत् प्रतिपत्तिसौकर्याय प्रपञ्च्यत इति भावः। शाब्द आर्थ औभयिक इत्यलङ्कारविवेके प्रमाणमन्वयव्यतिरेकावेवेत्याह — यथेति। किमलङ्कारैकचिन्तया, दोषगुणावप्येवमित्याह — दोषगुणालङ्काराणामिति। आश्रयाश्रयिभावस्वभावस्य निमित्तान्तरस्य नियामकतायामनुपपत्तेः। तदी(यावि ? य इ)ति। शाब्दो वार्थो वौभयिको वा। नत्वेकैकालङ्कारवदुभयालङ्काराणां तत्प्राचुर्यं न तल्लक्षणपरीक्षाप्रयासश्चे(ति चेदा ? त्या)ह— एवञ्चेति। लाटानुप्रासाद्युपलक्षणमेतत्। उभयालङ्काराविति। यथा तत्तदवसरे व्याकृतौ तद्वदन्येऽपि द्रष्टव्याः। (इति ?

१. 'ष्टं' ख. पाठः. २. 'कार्थो' क. घ. पाठः

सप्रभृतयोऽपि द्रष्टव्याः । अर्थस्य तु तत्र वैचित्र्यमुत्कटतया प्रतिभासत इति ते वाच्यालङ्कृतिमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः । योऽलङ्कारो यदाश्रितः स तदलङ्कार इत्यपि कल्पनायामन्वयव्यतिरेकाववश्याश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्याभावादित्यलङ्काराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान् ॥ ५५ ॥

---

सम्प्रदायप्रकाशिनी

स्तुतिप्रभृतयश्चोभयभावाभावानुविधानादुभयालङ्कारा द्रष्टव्याः । ननु तर्ह्यर्थालङ्कारमध्ये लक्षणमसङ्गतमित्यत अह—अर्थस्य त्वित्यादि । योऽलङ्कार इत्यादि । आश्रयाश्रयिभावस्य व्यवस्थापकत्वं चेत् कल्प्येत, तदाप्यन्वयव्यतिरेकाव[1]वश्याश्रयणीयौ, तयोराश्रयणं विना विशिष्टस्य प्रतिनियतस्याश्रयाश्रयिभावस्याभावात् । नह्याश्रयाश्रयिभावमात्रेण व्यवस्था । कङ्कणादेः केयूरादि[2]पदाश्रयणसम्भवात् । अतो यथोक्तान्वयव्यतिरेकनिमित्तमेव मिथो वैधर्म्य[3] ज्यायः ॥ ५५ ॥

साहित्यचूडामणिः

हि)शब्दो हेतौ समर्थ्यसमर्थकभावद्योतको यत्र तादृगर्थान्तरन्यासादयोऽपि बहव औभयिकाः सम्भवन्ति । संसृष्टिसङ्करेष्वपि कचिदौभयिकत्वयोग्यता । तर्हि ते कथमर्थालङ्कारेषु परीक्ष्यन्त इत्यत्राह — अर्थस्येति । हिशब्दहेतुकत्वाद् औभयिकत्वेऽपि तत्राधिक्यमुत्कृष्यते । तर्हि कथं विवेचकत्वगर्व इत्यत्राह — वस्त्विति । वास्तवीं सरणिम् अ(न)नुसृत्य अनादरादनपेक्ष्य, तत्वनवधानात् । अनुसरणे पुनरौभयिका एव । अथ चिरन्तनमतानुमत्या लोकवदाश्रयाश्रयिभावं नियामकमाशङ्कते दूषयितुं — य इति । आश्रयाश्रयिभावस्याप्यव्यभिचारे प्रमाण(त्व ? )मेषणीयम् । तच्च घट्टकुटीप्रभातन्यायादन्वयव्यतिरेकावेव । विशिष्टस्येति । व्यवस्थितरूपस्य । यथोक्तावन्वयव्यतिरेकौ निमित्तं यस्य । एवकारेण सम्बन्धान्तरमनिमित्तम् । श्रेयान्, इति प्रकाश्यते ॥ ५५ ॥

---

१. 'वेवाव' क. ख. घ. पाठः. २. 'व' ख. पाठः. ३. 'र्म्यज्ञानाय । अ' क. ग. घ. पाठः.

**एषा दोषा यथायोगं सम्भवन्तोऽपि केचन ।**
**उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥ ५६ ॥**

तथाहि — अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्रयोऽनर्थास्ते प्रसिद्धिविरुद्धताम् अपुष्टार्थत्वं प्रतिकूलवर्णतां च यथाक्रमं नातिक्रामन्ति, तत्स्वभावत्वात् । क्रमेणोदाहरणं —

सम्प्रदायप्रकाशिनी

अथैषामलङ्काराणां दोषा(णां?) निरूपितचरशब्दार्थोभयदोषान्तर्भाविन इति न पृथक् प्रतिपादिता इत्याह — **एषां दोषा इति ।**

**यथायोगं सम्भवतामपृथक्प्रतिपाद्यत्वं क्रमेण दर्शयितुमाह— तथाहीत्यादिना । अनुप्रासस्य (दोषा ये?) प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति अन्यैस्तु येऽनर्था उक्तास्ते प्रसिद्धिविरोधमपुष्टार्थतां प्रतिकूलवर्णतां च नातिवर्तन्ते, सालक्षण्यात् ।**

साहित्यचूडामणिः

इदानीमलङ्कारदोषानुन्मेषयिष्यंस्तेषां सप्तमोक्तदोषव्यतिरेकेण पृथक्त्वपक्षं प्रतिक्षिपति — **एषामिति** । यथायोगम् अस्यायं दोष इति वक्ष्यमाणप्रकारानुरूपम् । ननु 'मुख्यार्थहतिर्दोष' इत्युक्तयुक्त्या रसवृत्तिव्याहता दोषास्तद्वारा वाच्यवाचकभागोपक्षीणा वा न कदाचिदुक्तप्रकारपर्यवसायिनामलङ्काराणां सम्भवेयुः, अलमन्तर्भावोपक्रमेणेति चेदाह — **सम्भवन्तोऽपीति** । सत्यमसम्भवे नानौचित्यम्, उक्तिवैचित्र्यद्वारा वाच्यवाचकयोः कथञ्चित् सम्भवेऽप्यन्तःपातः साध्य इत्यस्माकमाग्रह इत्यर्थः ।

तत्रादौ शब्दालङ्कारेष्वनुप्रासदोषान् उक्तेषु दोषेष्वन्तर्भावयति — **अनुप्रासस्येति** । अनर्था दोषाः । तत्र प्रसिद्ध्यभावः प्रसिद्धिविरोधं, वैफल्यमपुष्टार्थतां, वृत्तिविरोधो वर्णप्रातिकूल्यं च क्रमान्नातिक्रामन्ति । **तत्स्वभावत्वादिति** । तेषां प्रसिद्ध्यभावादीनां प्रसिद्धिविरोधादिलक्षणकत्वात् । (न?) ।

१. 'न्तःपतन्ती' क. ख. पाठः. २. 'षां नि' क. घ. पाठः. ३. 'णां नि' ग. पाठः.

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्तान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात् स्यन्दनो वः ॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव प्रतिपादिता न पुराणेतिहासादिषु तथा प्रतीतेति[2] प्रसिद्धिविरोधः ।

भण तरुणि! रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि! ।
यदि सल्लीलोल्लापिनि[3]! गच्छसि तत् किं त्वदीयं मे ॥
अनणु रणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे! रणरणकमकारणं कुरुते ॥

सम्प्रदायप्रकाशिनी

चक्रीति । अत्र विष्णवादीनां कर्तॄणां चक्रारपङ्क्त्यादिकर्मप्रतिनियता स्तुतिरनुप्रासानुसारेणैव कृता न पुराणादिष्वेवमस्तीति प्रसिद्धिविरोधः ।

भण तरुणीत्यादिश्लोकद्वयेन यदपुष्टार्थत्वं तदेव वैफल्यम् ।

साहित्यचूडामणिः

चक्रीति ।

अत्र स्तोतृस्तुत्यव्यत्यासेऽपि न किञ्चिदनौचित्यमन्यत्र कवेरनुप्रासकुतूहल(भङ्ग)ादित्याह — कर्तृकर्मेति । कर्तारः चक्र्यादयः चक्रारपङ्क्त्यादीनि कर्माणि तेषां यः प्रतिनियमो निर्दिष्टप्रकारः तेन स्तुतिर्न पुराणाद्यनुरोधाद् नाप्यर्थौचित्यात् । यथा — 'कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेने'त्यादौ । किन्तर्हि, केवलमनुप्रासनिर्बन्धादिति प्रसिद्धिविरोधो दोषः । (न प्रसिद्ध्यभावेन सा मान्य.... ?) ।

भणेति ।

१. 'क्षा' ख. पाठः. २. 'सिद्धेरिति' क., 'तीतेरिति' ख., 'सिद्धिः ।' ग. पाठः. ३. 'सि' ग. पाठः.

अत्र वाच्यस्य विवेच्यमानं न किञ्चिदपि चारुत्वं प्रतीयत इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम्[*] ।

'अकुण्ठोत्कण्ठया पूर्णामि'त्यादौ शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तया[1] नीत्या विरुध्यत इति परुषानुप्रासेऽत्र प्रतिकूलवर्णतैव[†] वृत्तिविरोधः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तं[2] दोषः । यथा —

भुजङ्गमस्येव मणिः सदम्भा
ग्राहावकीर्णेव नदी सदम्भाः ।

सम्प्रदायप्रकाशिनी

अकुण्ठोत्कण्ठयेत्यत्र शृङ्गारे टवर्गोत्तरः परुषवर्णाडम्बरो 'मूर्ध्नि वर्गान्त्यगाः स्पर्शा' इति पूर्वोक्तया नीत्या विरुध्यत इति परुषानुप्रासे प्रतिकूलवर्णत्वमेव वैदर्भीवृत्तिविरोधः ।

यमके पादत्रयगतत्वेन यमनमप्रयुक्तम् ।

भुजङ्गमस्येवेति । सदेत्यर्थे सदमिति निपातः । सदंभाः

साहित्यचूडामणिः

अत्र यदनुप्रासस्य वैफल्यं एतदस्यापरि(तो? पो)षेऽन्तःपतिष्यति । तादृगनुप्रासाधिकवाचकनिवेशेऽपि वाच्यस्य तद्द्वारा वाक्यार्थीभूतस्य रसस्य वा चारुत्वासिद्धेरित्याह — वाच्यस्येति ।

अकुण्ठेति । अत्रोपनागरिकां विमुच्य परुषाया अङ्गीकाराद् यो वृत्तिविरोधः स वर्णप्रातिकूल्यान्नातिरिच्यत इत्याह — शृङ्गार इति । परुषेति । मसृणानुप्रासोचितत्वाद् अस्य र(स)स्य ।

अथ यमकविषयमवद्यमप्रयुक्तेऽन्तर्भावयति — यमकस्येति । द्वये पादचतुष्टये क्वचिदेकत्र वा पादे यमकस्य प्रयोगः, न कदाचित् पादत्रये । तद्गतत्वेन यम्यमानत्वमप्रयुक्तान्नान्यत् ।

भुजङ्गमस्येति । सदमित्यव्ययं सदेत्यर्थे वर्तते । सदं सर्वदा भाः

१. 'या एव नी' क. पाठः. २. 'क्तत्वं दो' ख. पाठः.

* 'त्यपरिपु' इति, † 'ता वृ' इति च मूलकोशपाठः.

दुरन्ततां निर्णयतोऽपि जन्तोः
कर्षन्ति चेतः प्रमुखे सदम्भाः ॥

उपमायामुपमानस्य जातिप्रमाणगतं न्यूनत्वम् अधिकता वा तादृशि[1] अनुचितार्थत्वं दोषः । धर्माश्रये तु न्यूनताधिकत्वे[2] यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः । क्रमेणोदाहरणं —

सम्प्रदायप्रकाशिनी

सततप्रभः । सदम्भाः साधुजला । दुरन्ततां फलकाले दुष्टताम् । निर्णयतः निर्जानतोऽपि । प्रमुखे प्रारम्भे । सदम्भाः दम्भसहिताः ।

उपमायां विचारयति — उपमायामित्यादि । तादृशि अन्यूनानधिकजातिप्रमाणक उपमेये । धर्माश्रयतायां तु न्यूनाधिकपदत्वमेव ।

साहित्यचूडामणिः

कान्तिर्यस्य । सत् स्वच्छत्वादिगुणवद् अम्भो यस्याः । दम्भेन सह वर्तमानाः सदम्भाः पुरुषाः । लिङ्गवचन(प ? भे)दलक्षण उपमादोषोऽप्यत्रान्तः पतति ।

अर्थालङ्कारेषु भट्टवामनाद्युदाहृतानुपमादोषानन्यत्र सङ्क्रामयति — उपमायामिति । जातिर्ब्राह्मणत्वादिः, प्रमाणं परिणाहादिपरिमाणवैशिष्ट्यं, तद्वर्ति न्यूनत्वम् अधिकता वा । तादृशीति । जातिप्रमाणगतान्यू(न ? नानधिक)त्वात् । पृथक् तौ दोषतयोरीकृतौ । यद् वामनः — *'न्यूनाधिकत्वलिङ्गवचनभेदासादृश्यासम्भवास्तु तद्दोषाः' 'जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम्' 'तेनाधिकत्वं व्याख्यातम्' (अधि० ४. अध्या० २. सू० ८, ९, ११) 'जातिप्रमाणधर्माधिकमधिकत्वमि'ति । तयोरनुचितार्थत्वान्तःपात इत्याह — अनुचितार्थत्वं दोष इति । धर्माश्रये इति । उपमानस्य धर्मः साधारणः तद्गतं न्यूनत्वमाधिक्यं च पृथग्दोषतयान्यैरभिमन्यमानं क्रमेण न्यूनपदत्वमधिकपदतां च न व्यभिचरतः किन्तु तदन्तरनुप्रविशतः । प्रत्येकं जातिप्रमाणयुक्ते हीनाधिकत्वे अनुचितार्थान्तःपातिनी, धर्माश्रये तु ते न्यूनाधिकपदत्वपर्यवसायिनी इति तात्पर्यम् ।

१. 'शी', २. 'नाधि' ग. पाठः.

* 'मुद्रितपुस्तके क्वचित् पाठभेदो दृश्यते ।

चण्डालैरिव युष्माभिः साहसं परमं कृतम्।

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति।

अयं पद्मासनासीनश्चक्रवाको विराजते।

युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः॥

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ।

वेणीदण्डः पुनरयं कालिन्दीपात्रसन्निभः॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतो[1]ऽत्यर्थमेव कदर्थित

---

सम्प्रदायप्रकाशिनी

चण्डालैरिति। अत्रोपमानस्य जातिगतं न्यूनत्वमुपमेयं कदर्थयति।

वह्निस्फुलिङ्ग इति। अत्र प्रमाण[2]गतं न्यूनत्वम्।

अयं पद्मेति। युगादाविति प्रभा[3]वाक्तिः। अत्र जातिगतं युगादौ प्रजाविनिर्मित्सुत्वरूपमाधिक्यम्।

पातालमिवेति। अत्र परिमाणगतम्।

चतुर्ष्वनुचितार्थत्वं दर्शयति — अत्र चण्डालादिभिरि-

साहित्यचूडामणिः

*वह्नीति। भगवतः सहस्रधाम्नो ज्वलनस्फुलिङ्गलक्षणमुपमानं प्रमाणन्यूनम्।

अयमिति। चक्रवाकस्य भगवान् पितामहो जात्यधिकमुपमानम्। एवं

"ब(हु? र्ह)मण्डलमुल्लास्य शिखण्डी ताण्डवे बभौ।
आकृष्टधन्वा भगवानाखण्डल इवाहवे॥"

इत्यत्राप्यूह्यम्।

पातालमिति। नायिकानाभिस्तनवेणीदण्डानाम् उपमानानि पातालक्षितिधरकालिन्दीपात्राणि क्रमेण प्रमाणाधिकानि।

अत्र तेषामनुचितार्थत्वं व्याचष्टे — चण्डालादिभिरिति। प्रस्तुत इति। साधर्म्येण चमत्काराय विवक्षितोऽर्थः। कदर्थितः प्रतिपत्तिपरिक्षेपणेन

---

१. 'तोऽर्थोऽत्य' क. ख. पाठः. २. 'णेति। अ' क. ग. घ. पाठः. ३. 'हा' ख. पाठः.

* 'चण्डालैरि'त्यत्र लक्षणसमन्वयो मातृकायां लुप्तः स्यात्।

इत्यनुचितार्थता।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान्॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तटिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम्।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः।
शतह्रदेन्द्रायुधवान् निशायां संसृज्यमानः शशिनेव मेघः॥

---

सम्प्रदायप्रकाशिनी

त्यादि। प्रस्तुत उपमेयः अनौचित्योपगमाद् वैसादृश्यं नीतः।

स मुनिरिति। अत्र धर्मविषये न्यूनपदत्वं, मौञ्ज्याः प्रतियोग्यनुपादानात्।

स पीतेति। वाससः शतह्रदया साम्यान्मनोज्ञं, शार्ङ्गस्येन्द्रा-

साहित्यचूडामणिः

खलीकृतः। अत्यर्थमेवेति। यथा 'यत्रोद्वेगो न धीमतामि'ति न्यायान्न स्वीकर्तु(मनौ? मौ)चित्यं तथा विरसीकृतः। रूपकाद्य(न्या?)लङ्कारान्तरे तु नानौचित्यम्। यथा ममैव "नाभिगह्वरावशेषः पातालगुहा, कुचकलशोपशल्यभूमिः कुलशैलकूटपट्टाः, रोमलताप्रतियातना यमुनापयःप्रवाहः" इत्यादि।

अथ धर्माश्रयन्यूनत्वमुदाहरति — स इति।

अत्र मौञ्जीलाञ्छितस्य कृष्णाजिनधारिणो मुनेरुपमेयस्य केवलनीलजीमूतभागाश्लेषिणि अंशुमालिन्युपमाने मौञ्जीप्रतिवस्तुनो विद्युतो नोक्तिरस्तीति धर्मन्यूनत्वमित्याह — उपमानस्येति। यत् किल जीमूतस्य विद्युदनुमानान्न्यूनत्वपरिहारः, तत् प्रयासमात्रं व्यभिचा(र:? रात्)। यद् वामनः — "नच नीलजीमूतग्रहणेनैव त(डि)त् प्रतिपाद्यते तत्र व्यभिचारात्" इति। नच कृष्णाजिनपटमात्रस्य उपमेयत्वं युक्तम्। मौञ्ज्या व्यर्थत्वप्रसङ्गात्। अतो विद्युतो विवक्षि(तयो? ताया): कण्ठोक्तिर्न केनचिदपि पदेनासीदिति तदवस्थैव न्यूनता या हीनपदत्वमवगाहते।

आधिक्यमुदाहरति — स इति। पीतवाससः शार्ङ्गधन्वनश्चोपमेय-

---

१. 'त्यावग' ख. पाठः.

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यत इत्यधिकपदत्वम् ।

लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेद् धर्ममन्यरूपं कुर्यात्, तदैकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तरयोपमानत्वमुपमेयत्वं वा प्रतीयमानेनापि धर्मेण प्रतीयत इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमत्वम् । यथा —

सम्प्रदायप्रकाशिनी

युधेन तु भीमम्। अत्रोपमेयतया पाञ्चजन्यस्यानुपादानाच्छशिनेतिपदमधिकम् ।

लिङ्गवचनभेदात् साधारणधर्मवैरूप्ये प्रक्रमभङ्ग इत्याह— लिङ्गवचनेत्यादि । उपमानस्योपमेयस्य वा लिङ्गभेदो वचनभेदो वा साधारणधर्मं गुणक्रियात्मकं यद्यन्यरूपं कुर्यात् तदानयोरेकतरस्यैव लिङ्गवचनभेदयोगिनो भिन्नरूपतद्धर्मसमन्वया*वगतेः प्रतीयमानेनापि

साहित्यचूडामणिः

करणे शतह्रदेन्द्रायुधवत्त्वमात्रमुपमानभूतमेवौचित्याय। यः पाञ्चजन्यानिर्देशेऽपि तत्प्रतिवस्तुन उपमानभागे शशिनः संसर्गनिर्देशः, स धर्माधिक्यं प्रयोजयति, यदधिकपदत्वे निमज्जयति । अत्रापि भगवतः पाञ्चजन्याव्यभिचाराद् अनाधिक्यनिर्वाहः क्लेशमात्रम् ।

अथोपमाया लिङ्गवचनभेदस्व(र?)भावो दोषः प्रक्रमभङ्गमध्यमध्यास्ते इत्याह — लिङ्गेति । साधारणं चेद्धर्ममन्यथाकुर्यादिति । अन्यथाकरणे तस्य न दोषः यथा प्रतीतिस्थगनादौ वक्ष्यते। अन्यथाकरणं यत् तदनौचित्यापारोहकमाह— तदिति। एकतरस्यैव, पुमादेः षण्डादेर्वा एकस्यानेकस्य वा

१. 'न्य' ग. पाठः २. 'नो भिन्नभि' क. घ., 'नोर्भिन्न' ख. पाठः.

* 'लु' इति व्याख्याकोशपाठः.

चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे
सक्तवो भक्षिता देव! शुद्धाः कुलवधूरिव ।

सम्प्रदायप्रकाशिनी

धर्मेण यदुपमानत्वमुपमेयत्वं वा प्रतीयते तद् भिन्नरूपविशेषणसहितस्यैव न केवलस्येति स्फुटं प्रक्रान्तार्थानिर्वाहाद् भग्नप्रक्रमत्वम् ।

चिन्तारत्नमिति । अत्रोपमानस्य लिङ्गभेदात् च्युत इति क्रियात्मनो धर्मस्य च्युतमिति रूपभेदः । तथा भिन्नरूपच्युतत्वयोगो रत्नस्यैवावगम्यते । अतः प्रतीयमानेनापि धर्मेणोपमानत्वं प्रतीयते । तच्च च्युतमिति विशेषणसहितस्यैवेति च्युत इति प्रक्रान्तस्य स्फुटमनिर्वाहात् प्रक्रमभङ्गः ।

सक्तव इति । अत्र वधूरूपस्योपमानस्य वचनभेदात् शुद्धा इति गुणात्मेति धर्मे शुद्धेति वचनभेदः । ततः पूर्ववत् प्रक्रमभङ्गः । एवमुपमानस्य प्रागुपादाने सत्युपमेयलिङ्गवचनभेदादावपि प्रक्रमभङ्गो ज्ञेयः ।

साहित्यचूडामणिः

विवक्षितधर्मसमन्वयावगतेः, नतु सामस्त्यादुभयोरपि । तस्य उपमानोपमेयाभिमतस्य । सविशेषणस्य, तस्मिन् निर्विशेषणस्यान्यथा साधर्म्याप्रतीतेः ।

चिन्तेति । अत्रोपमेये पुंसि च्युत इति, उपमाने तु चिन्तारत्ने च्युतमिति लिङ्गविकारेण पुंसश्चिन्तारत्नस्य वा कस्यचिदेव च्यवनलक्षणधर्मसमन्वयावगतेः च्युत(त्व)रूपविशेषणशून्य(त्व ?)स्योपमानत्वमुपमेयत्वं वा न घटत इति तत्रोभयत्रान्वयेन भाव्यम् । तच्च क्वचिदुच्यते पुंसि, चिन्तारत्ने तु केवलं प्रतीयत इति लिङ्ग(वचन ?)वैषम्यं, यत् प्रक्रमभङ्गकक्ष्यामनुप्रविशति ।

सक्तव इति । अत्रोपमेयेषु सक्तुषु शुद्धा इति, उपमाने कुलवध्वां शुद्धेति वचनवैकृतेन सक्तुना कुलवध्वा वा शुद्धिलक्षणधर्मसमन्वयावगतेः शुद्धत्वरूपविशेषणवन्ध्यस्योपमेयत्वमुपमानत्वं वा न लभ्यत इति तस्योभयत्रान्वयेन भाव्यम् । तच्च क्वचिदुच्यते सक्तुषु, कुलवध्वां तु प्रतीयत इति प्रतीतिपरिस्खलनं वचनदोषः, यस्य प्रक्रमभङ्ग एव प्रतिष्ठा ।

१. 'दादपि' क. ग. घ. पाठः.

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः। उभयथाप्यस्यानुगमक्षमस्वभावत्वात्। यथा—

गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः।
तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः॥
दधते स्म परां शोभां तदीया विभ्रमा इव॥

इति।

सम्प्रदायप्रकाशिनी

धर्मस्य रूपभेदाभावे तु न दोष इत्याह— यत्र त्वित्यादि। सामान्याभिधायि साधर्म्याभिधायि। स्वरूपस्य श्लिष्टतया वा श्रुतस्य भेदं वैरूप्यम्। दोषानवतारे धर्मस्योभयानुगमक्षमस्वभावत्वं हेतुः।

गुणैरिति। अत्र रत्नानामुपमानानां लिङ्गभेदः प्रथित इति क्रियारूपस्य धर्मस्य न रूपभेदकृत्।

तद्वेष इति। तस्या वेषः। भृतो भरितः बिभ्रतश्च। अत्र वचनभेदो वेषस्य गुणात्मनो न रूपभेदकृत्। दधत इत्युपमेयमपेक्ष्य

साहित्यचूडामणिः

अथ साधारणधर्मस्यान्यथाकरणे निर्दोषत्वमाह—यत्र त्विति। स्वरूपभेदमिति। तत्त्वप्रतीत्या भेदेऽपि प्रतीतिवेलायां स्वरूपनानात्वापत्तौ लिङ्गवचन(दे? भेद)स्य स्फुटप्रतीत्यनुदयात्। उभयथेति। उपमानोपमेययोरवैषम्यप्रतीत्या वर्तमानत्वात्।

गुणैरिति। अत्र गुणानां रत्नानां च तत्त्वतो लिङ्गभेदेऽपि तृतीयान्ततया तिरोधानात् प्रतीतिस्थगनमुखेन (न) लिङ्गभेदरूपः प्रक्रमभङ्गः। यथाहुः—

"मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥"

तद्वेष इति। सदृशत्वे सदृक्त्वे च कञ्किनोः श्लेषः, भृतत्वे भृत्त्वे च निष्ठा(क्थ्योः? क्व्योः) दधत इति श्लुशपोः। अत्र वेषस्य विभ्रमाणां च वचनभेदेऽपि श्लेषवशात् प्रतीतिस्थगने तद्भेदरूपो न प्रक्रमभङ्गः।

१. 'नार्थत्वे' ग. पाठः. २. 'पादानालिङ्ग' क. घ. पाठः. ३. 'ताक्ङि' क. ग. घ. पाठः.

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीति असावपि भग्नप्रक्रमतयैव व्याप्तः । यथा —

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना ॥

अत्र चेतना प्रसादमाप्नोति न पुनराप इति कालभेदः ।

---

सम्प्रदायप्रकाशिनी

'दध धारण' इत्येकवचनम् । उपमानापेक्षया तु 'दुधाव' इति बहुवचनम् । अत्र श्लिष्टत्वादुपमानवचनभेदान्न रूपभेदः ।

कालादिभेदादपि[1] प्रक्रमभङ्गमाह— कालपुरुषेत्यादि । कालादेरभेदे यथा विश्रान्तिमासादयति न तथा भेदे । असावपि कालादिभेदोऽपि ।

अतिथिमिति । चेतनाकर्तृकाया आप्तेः प्रारब्धाया अपरिसमाप्तिरिति वर्तमानकालता । कुमुद्वतीकर्तृकायास्तु परिसमाप्तिरिति भूतकालतेति प्रक्रमभङ्गः ।

तदेतदाह — अत्र चेतनेत्यादि ।

साहित्यचूडामणिः

इतोऽप्युपमादोषानुद्भटाद्युन्मेषात् प्रक्रमभेदं निमज्जयति — कालेति । आदिपदेनामन्त्रणादि । तथेति । एषां तदभेदेऽपि । अस्खलितेति । प्रतीतिपरिस्खलनप्रयुक्त एव हि प्रक्रमभेदः । असावपि कालादिभेदोऽपि ।

अतिथिमिति ।

अत्र चेतनायाः प्रसादप्राप्तिर्लडुचिता न विधियोग्या इत्याह — चेतनेति । कालभेद इति । वर्तमानस्य भूतानद्यतनपरोक्षस्य च भेदः ।

---

१. 'दिह प्र' क. घ. पाठः.

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥

अत्र लता विभ्राजते नतु विभ्राजसे इति सम्बोध्यमाननिष्ठस्य परभागस्यासम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ।

"गङ्गेव प्रवहतु ते सदैव कीर्तिरि"त्यादौ च गङ्गा प्रवहति नतु प्रवहतु इति अप्रवृत्तप्रवर्तनात्मनो विधेः ।

सम्प्रदायप्रकाशिनी

प्रत्यग्रमज्जनेति । स्फुरन् अंशुकान्तो यस्याः सा, स्फुरद्भिरंशुभिः कान्ता च । अत्र विभ्राजस इति परभागस्य प्रत्ययभागस्य लताविषये विभ्राजत इति व्यत्यासात् पुरुषभेदः प्रक्रमभङ्गाय ।

तदेतदाह — अत्र लतेत्यादि ।

गङ्गेवेति । अत्र गङ्गायाः प्रवाहस्याप्रवृत्तस्य प्रवर्तनाभावात् प्रवह(ती? त्वि)ति कीर्त्यपेक्षया विधिभेदः । सदैवेति विधिविशेषणस्य सदात्वस्य चानाशास्यत्वासिद्धत्वेन भेदः । तदेतदाह—गङ्गा प्रवह-

साहित्यचूडामणिः

पुरुषभेदमाह — प्रत्यग्रेति ।

अत्र सम्बोध्यमाना नायिका परभागेन मध्यमस्य पुरुषस्य विषयः नतु तद्विपर्ययात् प्रथमस्येत्याह — लतेति ।

विधिभेदमाह — गङ्गेति । गङ्गा प्रवहत्विति लोडन्त एव को विरोध इत्यत्राह — अप्रवृत्तेति । अप्रवृत्तप्रवर्तनात्मा हि विधिः 'विधिरत्य-

१. 'प्रजन्मने' ख. ग. पाठः. २. 'स्यां' क. घ. पाठः. ३. 'स्य वर्तमानभा' ख. पाठः ४. 'र्तमाना' क. घ. पाठः.

एवञ्जातीयकस्य चान्यस्यार्थस्योपमानगतस्यासम्भवाद् विध्यादिभेदः। ननु* च साक्षादुच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायामुपमायामुपमेयस्य प्रकृतधर्मा†भिसम्बन्धात् न कश्चन कालभेदोऽस्ति। यत्राप्युपात्तेनैव सामान्यधर्मेणोपमा

सम्प्रदायप्रकाशिनी

तीत्यादि । एवञ्जातीयकस्य सिद्धस्य । अर्थस्य सदात्वलक्षणस्य । इदमादिशब्दार्थोपवर्णनम् । ननु क्रियारूपाद् धर्मादन्येनोच्चारितेन प्रतीयमानेन वा धर्मेणोपमासिद्धौ समनन्तरमुपमेये क्रियासमन्वय इति न कालादिभेद इत्याक्षिपति— ननु चेत्यादि । प्रकृतधर्मः[2] आख्यातोक्तः क्रियारूपः । एवञ्च सति स्फुरदंशुकान्तत्वेनोच्चारितेन धर्मेणोपमासिद्धौ पश्चाद् विभ्राजस इत्युपमेयान्वयः । 'चेतनेव कुमुद्वती' 'गङ्गेव कीर्त्तिरि'त्यत्र तु पावनत्वप्रसन्नत्वादिना प्रतीयमानेन प्रागुपमासिद्धौ पश्चाद् 'आप' 'प्रवहत्वि'त्युपमेयाभिसम्बन्ध इति नास्ति कालादिभेद इत्याशयः। नन्वेवं तर्ह्युच्चारितत्वेन प्रतीयमानतया वा यत्र धर्मान्तरासम्भवस्तत्र कथमित्यत आह— यत्रापीत्यादि । सामान्य-

साहित्यचूडामणिः

न्तमप्राप्त' इत्युक्तत्वाद् गङ्गायां न घटते नित्यप्रवृत्तत्वात् तस्याः । एव(प ?)ञ्च कालपुरुषविध्यादीनामुपमेये केवलमनौचित्यं, नोपमान इति तद्भेदस्य प्रक्रमभङ्गमध्यानुप्रवेशः । एषां चैव सर्वोऽपि सर्गबन्धादिव्यवहार उत्सन्नः स्यादित्यालङ्कारिकं प्रति कविः प्रत्यवतिष्ठते । नन्विति । साक्षादुच्चारितस्य प्रतीयमानस्य वा धर्मस्य न वैषम्यं तन्मात्रोपादानेऽप्युपमायाः प्रसर्पणात् । ततश्च सामान्येनोपमायां परिपूर्णायां पाश्चात्त्यो यथोचितकालाद्यन्वय इति कोऽयं कालादिभेदो नामेति चोद्यार्थः। साक्षादुच्चारिते धर्मे तत्सम्बन्ध उपमेये वाच्यत्वेन, उपमाने तु वक्तृसम्बन्धि(बल ? त्व)लक्षणात् प्रयत्नभेदादेवेति सर्वत्रोपमायाः स्वभाव इत्याह — यत्रापीति । उपात्तेन साक्षादुच्चारितेन । युधिष्ठिर इवायं

१. 'स्य' ख. पाठः. २. 'र्मे' क. घ. पाठः. ३. 'र्थः' घ. पाठः. ४. 'रे' क. घ. पाठः.

* 'नु सा' इति, † ''र्मादिस' इति च, मूलकोशपाठः.

अवगम्यते यथा — 'युधिष्ठिर इवायं सत्यं वदती'ति, तत्र युधिष्ठिर इव सत्यवादी सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति[1] च न पौनरुक्त्यमाशङ्कनियम्। 'रैपोषं पुष्णाती'तिवद् युधिष्ठिर[2]सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यम्, एवं[3]मेतत्। किन्तु स्थितेषु प्रयोगेषु समर्थनमिदं, नतु सर्वथा निरवद्यं, प्रस्तुतवस्तुप्रतीतिविघातादिति सचेतस एवात्र प्रमाणम्।

---

सम्प्रदायप्रकाशिनी

धर्मेण क्रियात्मना। 'युधिष्ठिर इव सत्यं वदती'त्यत्र युधिष्ठिर इव सत्यवादीत्युपमासिद्धौ पश्चात् सत्यं वदतीति प्रतिपत्स्यामहे। ननु तर्हि पौनरुक्त्यमित्यत आह — सत्यवादीत्यादि। पुष्णातीति सामान्यपुषेर्यथा रैपोषमिति विशेषपुषिर्विशेषणं, तथा सत्यवादित्वसामान्यस्य युधिष्ठिरसत्यवादित्वं विशेषणं युधिष्ठिरसत्यवदनेन सत्यवादीति। परिहराति — सत्यमेवमिति। रैपोषं पुष्णातीत्यादि सिद्धेषु प्रयोगेष्वेतत्समर्थनं, नत्वेतत्समर्थनानुसारेण प्रयोग उत्पाद्यः। प्रस्तुतप्रतीतिविघातकस्यास्य सर्वथा निरवद्यत्वाभावात्। सचेतसो ह्यत्र प्रमाणम्।

साहित्यचूडामणिः

सत्यं वदतीत्यत्रापि प्रयत्नभेदबलावलम्बिनोऽस्मान् प्रति न कालादिभेदोद्भावनौचित्यमिति यावत्। ननु सत्यं वदतीत्यत्र प्रक्रमभेदपरिजिहीर्षया पौनरुक्त्याङ्गीकार इति चेद् नेत्याह — रैपोषमिति। सत्यमित्यर्धाङ्गीकारे। वैषम्योन्मूलने उक्तरूपमेतत् प्राक्तनेषु प्रयोगेषु समर्थनं, यत् क्रुध्यता हृदयेन व्याख्यातृश्रोतॄणां वैलक्षण्येन प्रतिक्रियते, न सर्वथा निरवद्यं प्रस्तुतवस्तुप्रतीतिविघातात्। यत्र सहृदया एव प्रमाणम्। यदाह —

"पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः।
तान् समाश्रित्य न त्याज्या(त्?) नीतिरेषा मनीषिणाम्॥"

इति।

---

१. 'ति नच पौ' ग. पाठः. २. 'रस्य स', ३. 'वैत' क. ख. पाठः. ४. वपुर्वि' क. ग. घ. पाठः.

असादृश्यासम्भवावप्युपमायामनुचितार्थतायामेव पर्यवस्यतः। यथा — 'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्[1]।' अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः सादृश्यं[2] कुत्रापि न प्रतीतमिति अनुचितार्थत्वम्।

निष्पेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात्॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलाद् निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति।

सम्प्रदायप्रकाशिनी

असादृश्यमसम्भवश्चोपमायामनुचितत्वमेवेत्याह — **असादृश्येत्यादि**।

**ग्रथ्नामीति**। ग्रथनं काव्यधर्मत्वादुपमासाधकम्। अत्र **काव्यशश्यादेरसादृश्यादनौचित्यम्**।

**निष्पेतुरिति**। अत्र पुनर्मण्डलाज्ज्वलद्वारिधारानिष्पातासम्भवादनौचित्यम्।

साहित्यचूडामणिः

यौ पुनरसादृश्यमसम्भव इत्युपमादोषौ तावनुचितार्थतया व्याप्ताविव्याह — **असादृश्येति**। काव्यशशिनोः सादृश्ये प्रसिद्धिर्नास्ति। नन्वर्था रश्मय इव प्रीतिप्रदायिन इति साधर्म्यसिद्धेः काव्यशशिनोरपि तत्सिद्धिरित्याशङ्क्याह — **अर्थानामिति**। इतरेतराश्रयपराहतमेतदिति यावत्। यद् वामनः 'तदेवमितरेतराश्रयदोषो दुरुत्तरः' (अधि० ४. अ० २. सू० १६) इति। तस्मा'दसादृश्यहताप्युपमा तन्निष्ठाश्च कव(य)' इति न्यायाद् असादृश्येऽप्युपमानिर्वाह इत्यनुचितार्थत्वमिति।

असम्भवमाह — **निष्पेतुरिति**।

१. 'म् इति। अ' ग. पाठः. २. 'धर्म्यं कु' क. ख. पाठः.

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादय एव शब्दा व्यङ्क्तुमुत्सहन्ते न यथाशब्दोऽपि । केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा —

उदयौ दीर्घिकागर्भात् कुड्मलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितं निरुपाख्यप्रख्यम् । तत्समर्थनाय यदर्थान्तरन्यासस्योपादानं, तदा-

सम्प्रदायप्रकाशिनी

उत्प्रेक्षायां यथाशब्द(स्य) सम्भावनायामशक्तिरवाचकत्वमित्याह — उत्प्रेक्षायामपीत्यादि । यथाशब्दो हि तथाशब्दसमभिव्याहृतः कदाचित् सम्भावनापरोऽपि स्यात् 'तथाह्लादकं मुखं यथैतच्चन्द्र' इत्यादौ । केवलस्तु साधर्म्यप्रतिपादन(मे ? ए)व पर्याप्तः । साधर्म्यस्य च सम्भावनात्मिकायामुत्प्रेक्षायामविवक्षा ।

उदयाविति । अत्र यथेत्यस्य सम्भावनावगतावशक्तिरवाचकत्वम् ।

उत्प्रेक्षितस्यापि तात्त्विकरूपविरहिणो निरुपाख्यकल्पस्य सम-

साहित्यचूडामणिः

न सम्भवन्तीति । तादृश्यो वारिधारा उपमानतया नोपपद्यन्ते । तस्मादनुचितार्थत्वं दोषः ।

अथोत्प्रेक्षादोषोऽवाचकत्वाव्यभिचरित इत्याह — उत्प्रेक्षायामपीति । इवादय इव यथाशब्दोऽपि सम्भावनां द्योतयितुमर्हतीत्ययुक्तम् । तस्य तथा शक्त्यभावात् (क्वचि)त् समर्थस्याप्यन्यत्रासामर्थ्यदर्शनाद् यथोत्प्रेक्षां द्योतयितुं समर्थस्यापि मन्ये शङ्के इत्यादेरुपमा(मध्य ? साधर्म्य)सम्भावनां च प्रकटयितुं पाटवमस्ति । यथाशब्दस्य तु साधर्म्यमेवेति यावत् ।

उदयाविति । ध्रुवमिति युक्तः पाठः ।

अथोत्प्रेक्षामूलस्यार्थान्तरन्यासस्याप्यनुचितार्थत्वमवद्यमित्याह — उत्प्रे-

लेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमे-तस्य— अनुचितार्थतैव दोषः । यथा —

दिवाकराद् रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने[1]
ममत्वमुच्चैःशिरसा[2]मतीव ॥

अत्राचेतनस्य तमसो दिवाकरात् त्रास एव न सम्भवति, कुत एव तत्प्रयो[3]जितमद्रिणा परित्राणम् । सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न कदाचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

---

सम्प्रदायप्रकाशिनी

र्थनायार्थान्तरन्यासो[4] निर्विषयत्वादनौचित्यमित्यत आह — उत्प्रेक्षितमपीत्यादि । एतस्य अर्थान्तरन्यासस्य ।

दिवाकरादिति । अचेतनस्य तमसो दिवाकरात् त्राससम्भावनमतात्त्विकं, तत्प्रयोजितमद्रिणा त्राणं बाढमेवातात्त्विकमिति निर्विषयत्वान्नैतदर्थान्तरन्याससमर्थ्यम् । अध्यवसितेन तु रूपेण भयत्राणयोर्नन्नूपपत्तिरिति समर्थनै[5]नैरर्थक्यम् ।

तदेतदाह — अत्राचेतनस्येत्यादि ।

साहित्यचूडामणिः

क्षि(तु ? त)मिति । निरुपाख्यप्रख्यमिति । असत्यप्रायत्वात् । तत्समर्थनाय उत्प्रेक्षितस्यार्थस्य समर्थनाय । गगनतल इति । समर्थनीयस्य वास्तवस्याभावात् ।

दिवाकरादिति ।

अत्र सम्भावनैकशरणत्वं (शोष ? दर्श)यति — अचेतनस्येति । तदेकशरणतायां नार्थान्तरन्यासापेक्षा, निर्विषयत्वात् । एवञ्च उत्प्रेक्षैव दुर्लक्षेत्याह —

---

१. 'विष्टे म', २. 'सां सती', ३. 'त्प्रतियो' ग. पाठः. ४. 'सोऽविष' क, ग. घ. पाठः. ५. 'ना' ग. पाठः.

साधारणधर्मविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने[1] प्रयोजनाभावादनुपादेयतायां यत्तदुपादानं तदपुष्टार्थत्वं पुनरुक्तता वा दोषः । यथा —

स्पृशति तिग्मरुचौ ककुभः करै-
र्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं
रुचिरया चिरयायिदिनश्रिया ॥

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन

---

सम्प्रदायप्रकाशिनी

समासोक्तौ[2] विशेषणसाम्यानगमितस्योपमानस्योपादाने निष्प्रयोजनत्वाद् यदुपादेयता तदपोषादपुष्टार्थत्वं, ज्ञातस्योक्त्या पुनरुक्तत्वं वा स्यादित्याह — साधारणधर्मविशेषणेत्यादि ।

स्पृशतीति ।

अत्र करस्पर्शाल्लिङ्गविशेषाच्च[3] यथा तिग्मरुचेर्नायकत्वं ककुभां

साहित्यचूडामणिः

सम्भावितेनेति । स्वतःसम्भावनमात्रप्रणीतस्य स्वरूपातिरेके कानुपपत्तिः, कश्च तत्समर्थनार्थं यत्नः, इत्यलं महाकविप्रमादपरीक्षापातकेन ।

अथ समासोक्तावुपमानविशेषप्रकाशनेऽप्ययमपुष्टार्थत्वं समर्थयते — साधारणेति । एवकार उपमानापेक्षामपहस्तयति । अनुक्तमपीति । तादृक्स्वभावत्वात् तस्याः । तस्योपमानविशेषस्य प्रयोजनाभावादपुष्टार्थता, अनुपादेयत्वात् पौनरुक्त्यं वा दोषः ।

स्पृशतीति ।

'पुमांस्त्रिया' (१-२-६७) इति कृतैकशेषो नायकशब्दः अन्यथा तिग्म-

---

१. 'नेन प्र' ग. पाठः. २. 'क्तविशे' क. ग. घ. पाठः. ३. 'षणाच्च' क. ख. ग. पाठः.

व्यक्तिविशेषपरिग्रहेण च नायकतया व्यक्तिः, तथा ग्रीष्म-दिवसश्रियोऽपि प्रतिनायिकात्वेन भाविष्यतीति किं दयितयेति स्वशब्दोपादानेन । श्लेषोपमायास्तु स विषयः, यत्रोपमान-स्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तस्याः प्र-तीतिः । यथा —

स्वयं च पल्लवाताम्रभास्वत्करविराजिता[1] ।
प्रभातसन्ध्येवास्वापफलल्लुब्धे[2]हितप्रदा ॥

इति ।

अप्रस्तुतप्रशंसायामप्युपमेयमनयैव नीत्या प्रतीतं न

सम्प्रदायप्रकाशिनी

च नायिकात्वं, तथा विजृम्भिततापत्वेन लिङ्गविशेषेण च दिनश्रियः प्रतिनायिकात्वमवगमितमिति (किं) दयितयेति । विशेषणेषु श्लिष्टतया साधारणेष्वप्युपमानोपादानं विना (य)त्राप्रतीतिरुपमायाः, स श्लेषो-पमाया विषयः ।

स्वयं चेति । व्याख्यातः प्राक् । अत्र प्रभातसन्ध्येवेत्युपमाना-नुपादाने विशेषणसाधारण्येऽपि नोपमाप्रतीतिरिति ईदृगेव विषयः श्लेषोपमायाः, नान्यः ।

यथैव समासोक्तावुपमानस्योपादानेन दोषः, तथाप्रस्तुत-प्रशंसायामुपमेयस्येत्यत्राह — अप्रस्तुतप्रशंसायामपीत्यादि ।

साहित्यचूडामणिः

रुचेः ककुभां चेति वक्तुमयुक्तत्वात् । किमिति । कृतमपुष्टार्थेन पुनरुक्तेन वा दयितयेति स्वशब्दप्रयोगेण । श्लेषोपमासङ्करोऽयमस्तु न समासोक्तिः अन्यथा तयोः सङ्करस्य निर्विषयत्वापात इति चेदाह — श्लेषोपमाया इति । विषयं प्रदर्शयति — स इति । विशेषणसाधारण्यलाभेऽपि यत्रोपमानोपादानव्यतिरेक-सामग्रीभङ्गः ।

स्वयमिति । अत्र प्रकरणाद् गौर्या उपमेयत्वम् ।

अप्रस्तुतप्रशंसायामपि उपमेयस्योपमानीकरणमपुष्टार्थत्वं पौनरुक्त्यं वा

१ 'नी' ग. पाठः. २. 'ब्ध' ख. पाठः.

